# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]

## म. म. गोपीनाथकविराजजन्मशताब्दीविशेषाङ्कः


सम्पादकः

डा० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'

अनुसन्धानसंस्थाननिदेशकः

उप-सम्पादकः

डा० हरिश्चन्द्रमणित्रिपाठी

प्रकाशनाधिकारी






३९ वर्षे

१-४ अङ्काः

वार्षिकं मूल्यम्—१० रूप्यकाणि

जून-सितम्बर-दिसम्बर-मार्च. १९८४-८५

## परामर्शदातृसम्पादकमण्डलम्

**प्रो० वि० वेङ्कटाचलम्**, कुलपतिः, अध्यक्षः

1. **डॉ० रामयत्नशुक्लः**, वेदवेदाङ्गसंकायाध्यक्षः
2. **डॉ० रामजीमालवीयः**, दर्शनसंकायाध्यक्षः
3. **डॉ० पारसनाथद्विवेदी**, साहित्य-संस्कृति-संकायाध्यक्षः
4. **प्रो० लक्ष्मीनारायणतिवारी**, श्रमणविद्या-संकायाध्यक्षः
5. **डॉ० सत्यव्रतशर्मा**, आधुनिक-ज्ञान-विज्ञान-संकायाध्यक्षः
6. **डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'** संयोजकः

---

प्रकाशकः—
**डॉ० हरिश्चन्द्रमणित्रिपाठी**,
प्रकाशनाधिकारी,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

मुद्रकः—
**रत्ना प्रिंटिंग वर्क्स**,
कमच्छा, वाराणसी

प्राप्तिस्थानम्—
**विक्रय-विभागः**, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य, वाराणसी-२२१००२.

# प्रास्ताविकम्

तपःपूतस्वान्तानां साधनास्थली वाराणसी सदैव कांश्चिल्लोकोत्तरप्रतिभाजुषः सङ्गृह्णाति। स्वनामधन्यो महामहोपाध्यायो गोपीनाथकविराजोऽस्यामेव काशिक-परम्परायां काशमानो महापुरुषेषु महनीयः शताब्द्यामस्यां वाराणसीमाशिश्रियत्।

ढाकानगरे ७।९।१८८७ दिनाङ्के लब्धजन्मानः प्रयागविश्वविद्यालयात् १९१५ ई० वर्षे प्रथमं स्थानमधिगृह्य एम० ए० उपाधिं प्राप्य श्रीमन्तो गोपीनाथकविराजमहोदया १९१४ ई० वर्षे तदात्वे नवनिर्मिते सरस्वतीभवनपुस्तकालये पुस्तकाध्यक्षपदमलञ्चक्रुः।

तदैव कविराजमहोदयानां भास्वद्व्यक्तित्वं सकलमेव वातावरणं समुदभासयत् सारस्वतनिकेतनस्य सरस्वतीभवनस्य। अध्यात्मसाधनासहचारिणी समभवदेषां सारस्वतसाधनापि। न्यायवैशेषिकसाहित्यस्य समीक्षामयमितिवृत्तम् एते प्रथमतः प्राणैषिषुः। साहित्य-दर्शन-ज्यौतिष-योगतन्त्र-विज्ञानप्रभृतिविषयांश्चाधिकृत्य नक्तन्दिवं साधनासुधासागरमवगाहमानाः म० म० गोपीनाथकविराजमहोदया सङ्ख्यातीतानि रत्नानि समुपाहार्षुर्विश्वकल्याणाय। नेदमतिरोहितं यददः 'सरस्वतीभवनम्' च 'क्वीन्स् कालेज्' इति विद्वन्मण्डलविख्यातः संस्कृतमहाविद्यालयश्च इत्युभे अपि संस्थे समुद्गम-भूमी आस्ताम् इदानीन्तनस्य सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य।

इत्थमापाततो विवेचनेऽपि मान्या गोपीनाथकविराजमहोदयाः प्रारम्भत इदानीं यावद् अत्रत्यासु कणिकासु विद्योतमाना इव दृश्यन्ते। एते १९१४ई० वर्षे पुस्तकाध्यक्षाः समभूवन् सरस्वतीभवनस्य। १९२४ ई० वर्षे च 'क्वीन्स् कालेज्' संस्थायाः प्राचार्यपदं समभूषयन्। १९३७ ई० वर्षे च स्वेच्छया सेवाविरतिं वव्रिरे। १९६५ ई० वर्षे अधि-कारिणां प्रार्थनया योगतन्त्रविभागस्य आचार्यपदमङ्गीचक्रुः। एवं सम्पूर्णानन्दसंस्कृत-विश्वविद्यालयस्य कृते महते गौरवायेदं पर्यवस्यति, यदीदृशा विश्वविश्रुताः कविराज-प्रतिभाः विद्वांसः संस्थामेनां पर्यभूषयन्।

म० म० गोपीनाथकविराजमहोदयान् स्वीयसर्वोच्चसम्मानोपाधिभिः सम्भूष्य यानि राष्ट्रस्यातिविश्रुतसंस्थानानि कृतार्थतामनुबभूवुस्तेषु समुल्लेख्यानि सन्ति — दिल्ली विश्वविद्यालयः, विश्वभारती, काशी हिन्दू विश्वविद्यालयः, कलकत्ता विश्व-विद्यालयः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, नवनालन्दा महाविहारप्रभृतयश्च।

'सारस्वती सुषमा' संस्कृतपत्रिकाणां परम्परायां किमपि निरुपमं स्थानं संश्रयति। "दि पण्डित्"इत्यभिधानं संश्रितायाः पत्रिकायाः प्रवाहभूतेयं 'सुषमा' सम्मान्य-महसां कविराजवर्य्याणां विश्वस्मिन् समायोज्यमाने वर्षव्यापिनि शताब्दीसमारोहक्रमे स्थाने तन्नाम्ना विशेषाङ्कमिमं प्रकाशयति, यत्र देशस्य विशिष्टविदुषां चिन्तनप्रसूनानि ज्ञानविज्ञानसौरभस्मेराणि विराजन्ते। दृढं विश्वसिमि महामनीषिणां पण्डित-गोपीनाथकविराजमहोदयानां तपोभूमिरेषैवंविधैः सारस्वतोपक्रमैः स्वीयां परम्परां परिपालयन्ती भूयसे लोकमङ्गलाय कल्पिष्यते।

अस्य विशेषाङ्कस्य सम्पादनकर्मणि अस्याः पत्रिकायाः स्थायिसम्पादकैः डा० भागीरथप्रसादत्रिपाठिभिः तथास्या मुद्रापणव्यवस्थासु अस्या उपसम्पादकैः डा० हरिश्चन्द्रमणित्रिपाठिभिश्च बहुः परिश्रान्तमिति उभये अपीमे विद्वांसो नः कृतज्ञतायाः पात्रम्।

रत्ना-प्रिन्टिंग-वर्क्स-स्वामिना श्रीविपुलशङ्करपण्ड्यामहोदयेन तन्मुद्रणालयस्य कर्मचारिभिश्चैतस्य सत्वरमुद्रणे या कर्मठता प्रदर्शिता तदर्थं ते सर्वेऽपि धन्यवादार्हाः।

कुलपतिनिवासः,
4.9.1987

**वि० वेङ्कटाचलम्**
कुलपतिः

# विषयानुक्रमणी


१. पूर्वतन्त्रे लोकतन्त्रम्—आचार्यश्रीपट्टाभिरामशास्त्री १-४

२. ताथागतमततथ्यविमर्शः—पण्डितश्रीरघुनाथशर्मा ५-८

३. रसेलमहाशयस्य वाक्यसंरचनानां०—आचार्यश्रीबदरीनाथशुक्लः ९-२१

४. भगवद्गीतातात्पर्यसमालोचनम्—श्रीएस्० सुब्रह्मण्यशास्त्री २२-३१

५. शैवागमीयं पदार्थत्रयम्—आचार्यश्रीरामप्रसादत्रिपाठी ३२-४३

६. श्रीमतामतिरात्रयज्वनां कृतिः०—आचार्यश्रीबटुकनाथशास्त्रीखिस्ते ४४-५०

७. अद्वैतसिद्धिसम्मता ब्रह्मणो द्रष्टृत्वोपपत्तिः—डॉ० सिद्धेश्वरभट्टाचार्यः ५१-५५

८. योगवासिष्ठे दैवपौरुषवादयोर्विचारः—आचार्यश्रीकुबेरनाथशुक्लः ५६-६०

९. श्रीबेल्लङ्कोण्डरामरायकविः०—प्रो० पी० श्रीरामचन्द्रुडु ६१-७४

१०. अग्निपुराणेऽगदतन्त्रम्—डॉ० पारसनाथद्विवेदी ७५-८५

११. अखण्डमहायोगभारतीयास्तिक०—डॉ० अशोकशास्त्री ८६-९२

१२. यज्ञतत्त्वदर्शनम्—डॉ० युगलकिशोरमिश्रः ९३-१००

१३. मृच्छकटिकस्य भाषिकी संरचना—डॉ० रामाशीषपाण्डेयः १०१-१२६

१४. तान्त्रिकी वरिवस्या०—श्रीव्रजवल्लभद्विवेदः १२७-१३९

१५. आगमकारो महाकविः कालिदासः०—
डॉ० भागीरथप्रसादत्रिपाठी 'वागीशःशास्त्री' १४०-१४७

१६. ईक्षतेर्नाशब्दम्—डॉ० मुरलीधरपाण्डेयः १४८-१४९

१७. अभिनिवेशस्य यथार्थं तत्त्वम्—डॉ० बलजिन्नाथपण्डितः १५०-१५४

१८. ब्रह्मणोऽभिन्ननिमित्तोपादानत्वसिद्धिः—डॉ० पारसनाथद्विवेदी १५५-१६२

१९. व्याकरणशास्त्रस्याद्वैतपरत्वम्—डॉ० रामयत्नशुक्लः १६३-१७२

२०. रससूत्रस्य सत्यानुभूतिपरा व्याख्या—डॉ० ब्रह्मानन्दशर्मा १७३-१८०

२१. सर्वज्ञात्ममुनिमते जीवस्वरूपविमर्शः—पण्डितश्रीरामनारायणत्रिपाठी १८१-१९२

२२. व्याकरणसिद्धान्ते शब्दार्थयोः०—श्रीराजेन्द्रप्रसादशर्मा १९३-२०५

२३. प्रकरणनायकत्वविमर्शः—डॉ० राजदेवमिश्रः २०६-२१२

२४. साहित्यशास्त्रे योगदृशा रसबोधविमर्शः—श्रीशिवजीउपाध्यायः २१३-२२४

२५. कठोपनिषद्गतस्य०—डॉ० रामशङ्करो भट्टाचार्यः २२५-२२७

२६. शरीरलक्षणविचार:—डॉ० एन्० आर्० श्रीकृष्णताताचार्यः २२८-२३५
२७. दार्शनिकदृष्ट्या ऋग्वेदस्य महत्त्वम्—डॉ० ओङ्कारनाथतिवारी २३६-२४३
२८. न्यायवैशेषिकदर्शनयोः संख्याविमर्शः—श्रीसर्वेश्वरराजहंसः २४४-२५३
२९. त्वादिभावप्रत्ययार्थविचारः—डॉ० नरेन्द्रनाथपाण्डेयः २५४-२५९
३०. तन्त्रागमदृष्ट्या शक्तिपातस्वरूपनिरूपणम्—डॉ० राजनाथत्रिपाठी २६०-२६९
३१. शक्तिविशिष्टाद्वैतवेदान्ते०—डॉ० चन्द्रशेखरशर्माहिरेमठः २७०-२७४
३२. महामहोपाध्यायपण्डितश्रीगोपीनाथ०—श्रीशशिधरमिश्रः २७५-२७९
३३. निगमागमसार्वभौमानां०—डॉ० शशिधरशर्मा २८०-२८१
३४. संस्कृतवाङ्मये सूर्यस्तवाः—आचार्यश्रीकरुणापतित्रिपाठी २८२-३०३
३५. अहो शब्दकोशसूक्ष्मेक्षिका माघस्य — प्रो० वि० वेङ्कटाचलम् ३०४-३२१
३६. महामहोपाध्यायश्रीगोपीनाथकविराजः०—श्रीश्रीपतिरामत्रिपाठी ३२२-३२८

——

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

३९ वर्षे | ज्येष्ठ-भाद्र-मार्गशीर्ष-फाल्गुनपूर्णिमाः, वि० सं० २०४१ | १–४ अङ्काः


## पूर्वतन्त्रे लोकतन्त्रम्


'पद्मभूषणम्' आचार्यश्रीः पी० एन्० पट्टाभिरामशास्त्री 'विद्यासागरः'

साहित्यविभागाध्यक्षचरः,

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

वाराणसी


❀❀❀

दर्शनतन्त्रप्रवर्तकानां समेषां महर्षीणामलौकिकस्य परमात्मतत्त्वस्य निरूपणे प्राधान्येन विद्यमानायामपि प्रवृत्तौ, निरूपितस्य विषयस्य लोकाः स्वजीवनयात्रायामव-बोधमात्रेण न विरमन्तु, तदाचरणेऽपि मतिं विदधत्विति तेषां परममुद्देश्यम्। पदार्थाव-बोधेन चित्तं विमलं पवित्रञ्च भवति। 'शोभतेऽस्य मुखं य एवं वेद' इति खल्वाह भगवती माता श्रुतिः। विमलीभूतस्य चित्तस्य क्वचनोपयोगोऽपेक्ष्यते। मृदा परिमार्जि-तस्य पात्रस्य पाकजलाहरणादिषु कार्येषु प्रयोगः क्रियते। पाक-जलाहरणादिना तत्पात्रं कलुषितं भवतीति पुनरपि शोधनेन यथा स्वच्छीक्रियते, तथैव चित्तमपि सांसारिक-विषयैराकृष्टं सत् कलुषितं भवेत्। चित्तस्य वैमल्यं नाम न चिरस्थायि। चिरस्थायित्वं तस्यासकृदाचरणेनैव सम्पाद्यम्। आचारणमात्रेण न विश्रान्तिः, प्रचारणमप्यावश्यकम्। प्रचारणञ्च चित्तस्य विषयिणा सम्बद्धस्य तन्मयीभावापादने साहाय्यमाचरेत्।

दार्शनिकेषु बादरिर्जैमिनिश्च सुप्रसिद्धौ दर्शनप्रवर्तकौ। उभावपि स्वस्वसूत्रगन्थे स्वनामोल्लेखनेन साकं जैमिनिर्बादरिं बादरिश्च जैमिनिं सगौरवं निर्दिशतः। एवं निर्दिशन्तौ तौ मतभेदं प्रदर्शयतः। तत्रैकं जैमिनेरुदाहरणं विवेचयामः—तृतीयाध्यायस्य प्रथमपादे तृतीयाधिकरणं नाम्ना बादर्यधिकरणमिति व्यवह्रियते। तत्रेमानि जैमिनेस्सूत्राणि— 'द्रव्यगुणसंस्कारेषु बादरिः', 'कर्माण्यपि जैमिनिः फलार्थत्वात्', 'फलञ्च पुरुषार्थत्वात्', 'पुरुषश्च कर्मार्थत्वात्' इति। अत्रत्योऽयं विषयसन्दर्भः पारार्थ्यम्-परार्थत्वमङ्गानां लक्षणम-भिधाय बादरेर्मतेन लक्ष्यं निर्दिशति द्रव्य-गुण-संस्कारेष्वेव नियतमिति। अनन्तरं स्वनाम-

निर्देशपुरस्सरं जैमिनिः कर्मफल-पुरुषेष्वप्यङ्गत्वमस्तीति सूत्रयति। द्रव्य-गुण-संस्काराणामङ्गत्वे जैमिनेर्न दिप्रतिपत्तिः, 'कर्माण्यपि' इत्यपिशब्दनिर्देशात्। तत्र द्रव्याणि याग-होम-दानोद्देशेन विहितानि व्रीहि-यवाज्यद्रविणानि, गुणाश्च तत्तद्द्रव्यगता आरुण्यादयः, संस्काराश्च यागाङ्गद्रव्यदेवतोद्देशेन विहिता अवघात-प्रोक्षण-याज्यापुरोनुवाक्यादयः। एतेषु त्रिष्वेव यागीयपुरोडाशनिष्पादकतया यागीयदेवतास्मारकतया च यागोपकारकत्वमस्तीति बादरिरङ्गत्वमभिप्रैति। एतेन कर्मफल-पुरुषेष्वङ्गत्वं बादरेर्नाभिमतमिति व्यज्यते। जैमिनिस्तु द्रव्य-गुण-संस्कारेष्वङ्गत्वमङ्गीकुर्वन् कर्मफल-पुरुषेष्वपि तत्स्वीकरोति। बादर्यभिमतं 'संस्कार'-पदं यद्यपि कर्मावबोधकम्; तथापि न तत्फलजनकीभूतकर्मपरम्; किन्तु गुणकर्मपरम्। जैमिनिनिर्दिष्टं 'कर्माणि' इति पदं फलजनकीभूतदर्शपूर्णमासादिप्रधानकर्मपरम्। प्रधानमपि तत्कर्मफलत्वार्थत्वेनोपदिष्टमिति फलं प्रत्यङ्गं भवति, फलजनकत्वाद् दर्शपूर्णमासादेः। जन्यापेक्षया जनकं गुणभूतं भवति। एवं फलं प्रधानमपि भोग्यम्, भोक्ता च पुरुषः। भोक्तृत्वार्थं भोग्यं भवतीति फलं पुरुषं प्रत्यङ्गम्. तथा फलजनकीभूतकर्मनिवर्तकत्वेन पुरुषोऽपि कर्मार्थित्वेन तदङ्गभावमश्नुत इति जैमिनेराशयः।

मतद्वयस्यास्यावबोधेन चित्तस्य कीदृशं वैमल्यमुपजायते? विमलचित्तद्वारा-किमाचरणीयमस्माभिरिति विमृशामः—सम्प्रति दैवानुग्रहेण भारतीया वयं लोकतन्त्र-विधिना राष्ट्रस्य शासनसूत्रं धारयामः। जैमिनेर्मतं यदवगतं तदनुसारेणाचरितव्यमस्माभिः, तदैव लोकतन्त्रविधिः परिपोषमवाप्नुयात्। लोकतन्त्रे सर्वोपरि राष्ट्रम्, तदुन्नयनकार्यनिर्वाहकः प्रधानमन्त्री खल्वस्माभिर्नियुक्तः, तेन नियुक्ता मन्त्रिणस्तदधीनाः, मन्त्रिणां कार्यसहायकास्सचिवाः, सचिवानामपि सहायका नैकविधा अधिकारिणः, अधिकारिणामपि कार्यकर्त्तारस्सङ्ख्यातीताः। एतेष्वङ्गाङ्गिभावविचारे क्रियमाणे नियोजकत्वं नियोज्यत्वञ्च न नियतमिति प्रतीयते। नियोजके नियोज्यत्वम्, नियोज्ये च नियोजकत्वमनुभूयत एव। य एवाधिकारिणां कार्यसम्पादकत्वेन नियुक्ताः श्रमिकाः, त एव प्रधानमन्त्रिणश्चयनकर्तार इति प्रधानमन्त्र्यपेक्षया चयनावसरे प्राधान्यं भजन्ते। लोकतन्त्रेऽयमेव विशेषो यन्नियोजकत्वं नियोज्यत्वं वा न नियतं भवति। एतेनेदं निश्चेतुं शक्यते यद्राष्ट्रं सर्वोपरि विद्यमानमिति निश्चित्य तदुन्नयनाय सर्वेऽपि वयं समानाधिकारवन्त इति। भावनेयं नियोजकेषु नियोज्येषु चावश्यकी। अस्मासु भेदकरूपेणोपकार्योपकारकभावे गुणप्रधानभावे सत्यपि विनैकेनापरस्य स्वरूपलाभो न भवेदिति भावनायां सत्यां भेदभावस्स्वयमेवागच्छेत् सर्वेषु श्रौतकर्मस्विमामेव रीतिमवलोकयाम। तत्र यागहोमादिरूपकार्यः, अङ्गानि चोपकारकाणि। अङ्गेषु

कानिचन प्रधानस्योपकारकाणि, कानिचन च प्रधानाङ्गानामुपकारकाणि। इमानि च मिथस्सापेक्षाणि। प्रधानमङ्गान्यपेक्षते, अङ्गानि च प्रधानमपेक्षन्ते। प्रधाने स्वाधिकारसम्बन्धीनि कार्याणि यथायथं सम्पादयति सति, सहायकेष्वङ्गेषु यथायथं क्रियमाणेष्वेव प्रधाननिष्ठसामर्थ्यपुष्टीकरणाय तानि प्रभवेयुः, फलञ्च प्राप्नुयुः। इदमेव लोकतन्त्रम्।

किञ्च, जैमिनिश्चतुर्थप्रथमे लिप्साधिकरणे सनियमं द्रव्योपार्जनं पुरुषार्थम्, पुरुषार्थेषु क्रत्वनुष्ठानमिति निर्दिशति। यथार्ऽजितेन धनेनाहारव्यवहारपरिवारपोषणादिकं क्रियते, तथैव पुरुषार्थाः क्रतवोऽप्यनुष्ठेयाः। स्वयं ये क्रतूननुष्ठातुं नाधिकुर्वन्ति, तेऽनुष्ठातृभ्यो द्रव्यं प्रदाय क्रतूननुष्ठापयेयुः। प्रयोजककर्तारोऽप्यलौकिकफलभाजो भवन्त्येव। नियमेन द्रव्यार्जनं पुरुषार्थक्रतवोऽपि पुरुषार्था इति संसाध्य महर्षिर्जैमिनिः सम्पदा समर्थस्यापि यजमानस्य ज्योतिष्टोमादि क्रत्वनुष्ठानावसरे धनभिक्षासोमलताक्रयणञ्च नियतमङ्गमिति ? षष्ठाष्टमषष्ठाधिकरणे साधयति। अर्थादाढ्योऽपि यजमानः स्वोद्याने सोमलतावानपि क्रत्वङ्गत्वेन धनं भिक्षित्वा सोमलताञ्च द्रव्यविनिमयेन क्रीत्वा ज्योतिष्टोमेन यजेतेति प्रतिपादयति। अयं न्यायो लोकतन्त्रविधौ सहायकः। शासकः प्रजाभ्यः करग्रहणेन शासनसूत्रं निर्वहतीति रीतौ सत्यामपि प्रजा धनं भिक्षित्वा ( बलात्कारेण न हि ) द्रव्यविनिमयेन च पदार्थान् सह सङ्गृह्य शासनं कुर्यादिति मीमांसान्यायानुगतः पन्थाः। यतो हि राष्ट्रसमुन्नतिः शासकाधीना यथा, तथा प्रजाधीनापि। शासनाधिकाराद् बहिर्भूता अपि प्रजा राष्ट्रसमुन्नतिं कामयन्त एव। शासनाधिकारतो बहिर्भूता वयम्, अस्माकं शासनस्य च न कोऽपि सम्बन्धः, शासका राष्ट्रं समुन्नतिशिखरं प्रापयन्तु, वयं फलभोक्तारो भवाम इति प्रजाभिर्न स्थातव्यम्, यतो हि प्रजाभिरेव क्रियमाणमिदं लोकतन्त्रम्। आहिताग्नयो यजमानाः क्रतूननुतिष्ठन्तु, क्रत्वनुष्ठानेन प्रकृतेरीतिबाधानाञ्च प्रकोपं शमयन्तु, तेन च देशः क्षेमसुभिक्षो भवतु, वयं सुखेन कालं नयाम इत्यनाहिताग्निभिर्न वर्तितुं शक्यते। देशसुभिक्षायामनाहिताग्नीनामपि कर्तव्यं वर्तत एव। एवं द्रव्य-गुण-संस्कारेषु कर्म-फल-पुरुषेषु चाङ्गत्वम्, तथा कर्म-फल-पुरुषेष्वङ्गित्वञ्च साधयन् जैमिनिः सत्यमेव कालत्रयवेत्तेति विज्ञायते। कथमन्यथा भारतीयैर्नेतृभिर्लोकतन्त्रविधिः स्वीकृतस्स्यात् ? पूर्वतन्त्रञ्चेन्मीमांसा, पश्चात्तन्त्रं लोकतन्त्रम्। लोकतन्त्रस्य मूलं पूर्वतन्त्रम्, पूर्वतन्त्रस्य च मूलं वेदः। आचारस्य स्मृतिर्मूलम्, स्मृतेश्च श्रुतिर्मूलं यथा, तथा लोकतन्त्रात्मकस्याचारस्य मूलं पूर्वतन्त्रस्मृतिः, तस्याश्च मूलं श्रुतिरिति लोकतन्त्रमपि वैदिकं प्रसिध्यति। लोकतन्त्रमिदं दर्शपूर्णमाससादृश्यमनुभवति। दर्शपूर्णमासयोः चत्वार ऋत्विजः-अध्वर्युः, होता, अग्निध्रश्चेति। त्रयोऽग्नयः---गार्हपत्यः, आहवनीयः, अन्वाहार्यपचनश्चेति। लोकतन्त्रेऽपि चत्वारो

राष्ट्रस्य स्तम्भाः—शिक्षकाः, छात्राः, उद्योगपतयः, श्रमिकसैनिकाश्च। इमे सरस्वती लक्ष्मी दुर्गेति देवतात्रयसमुपासकाः। सर्वं राष्ट्रमत्रैवान्तर्भवति। एतेषु स्तम्भेषु यद्येकोऽपि शिथिलस्स्यात्, तर्हि राष्ट्रे महत्यशान्तिर्विप्लवश्च भवेत्। शैथिल्यञ्च स्वस्वदेवताराधनवैमुख्यप्रयुक्तम्। शिक्षकाश्छात्राश्च वाणीमनुपास्य कोलाहले आन्दोलने च केवलं दत्तदृष्टयो भवेयुः। नूनं स स्तम्भः शैथिल्यमवाप्नुयात्। उद्योगपतयो यथायथं लक्ष्मीमनादृत्य स्वार्थपरतया द्रव्योपार्जने दत्तदृष्टयो भवेयुर्यदि स स्तम्भो दाढर्यं परित्यज्य शिथिलस्स्यात्। एवं श्रमिकास्सैनिकाश्चालस्येन शक्तिप्रदां दुर्गां विस्मरेयुः। सत्यमेव परैराक्रान्तं राष्ट्रं भवेत्। चतुर्षु स्तम्भेषु सुदृढेषु सत्सु राष्ट्रस्य क्षेमसुभिक्षत्वे कस्सन्देहः ?

किञ्च, पूर्वतन्त्रे जैमिनिः प्रतिपक्षिणं विना कमपि न्यायं न साधयति। एकैकस्मिन्नपि न्याये (अधिकरणे) पूर्वपक्षं संस्थाप्य तदीययुक्तीः परिशिल्यौचित्यानौचित्यञ्च सुविचार्य न्यायं प्रदर्शयति। पूर्वपक्षीति सिद्धान्तिनो न हेयदृष्टिः, पूर्वपक्षिणोऽपि सिद्धान्ती निराकर्तव्य इति न मतिः; किन्तु तर्कसङ्गता उक्तयस्सन्ति न वेति दृष्टिरुभयेषां भवति। सिद्धान्तिनस्स्थाने सिंहासने मयोपवेष्टव्यमिति पूर्वपक्षी, पूर्वपक्षी च सर्वथा दूरीकर्तव्य इति सिद्धान्ती न मन्यते। उभयोः कलहश्च भूयान् भवेत्, तथापि न्यायस्य पुरत उभावपि नतमस्तकौ भवतः। इयं शैली पूर्वतन्त्रस्य।

न केवलमिदमेव, तृतीयद्वितीयभक्षपेटिकायां विचिन्त्यमानायां स्पष्टं प्रतीयेत यत्सिद्धान्ती पूर्वपक्षिणमात्मसात्कर्तुं वार्तालापेन कियद्दूरं नयतीति। लोकतन्त्रविधौ सत्तारूढैर्विपक्षिभिः शिक्षकैश्छात्रैः श्रमिकैश्च महर्षिजैमिनिरनुसर्तव्यः। पूर्वतन्त्रम् अध्वरमीमांसापदेनापि व्यवह्रियते। अध्वरशब्दस्य-अहिंसा-अर्थः। लोकतन्त्रे चाहिंसायाः स्थानं सुप्रतिष्ठितम्। अहिंसाशस्त्रमादायैव लोकतन्त्रं चालयितुं शक्यते। पूर्वतन्त्रमप्यहिंसामूलम्। अत एवाध्वरपदघटितं पूर्वतन्त्रं प्रसिद्धम्। जैमिनिक्षुण्णायां सरणावनुसृतायां साम्प्रतं भारतराष्ट्रे याऽशान्तिपिशाचिका मुक्तकेशा नृत्यति, सा सुदूरमुत्सारिता स्यात्। जैमिनिः किं वदति ? स्वस्वाधिकृतं कार्यं निष्ठापूर्वकं यथायथमनुष्ठेयमिति। शिक्षका अध्यापयन्तु, छात्राश्च ज्ञानोपार्जनं कुर्वन्तु, उद्योगपतयो नैकविधैरुद्योगैः पदार्थानाविष्कुर्वन्तु, श्रमिकाश्च सश्रमं साहाय्यमाचरन्तु, सपक्षा विपक्षाश्च न्याय्ये पथि विचरन्तु, एकस्य कार्येऽपरो हस्तक्षेपं न करोतु, न्याय्याद् पथो भ्रष्टं न्याय्ये पथि साम्ना समानयन्तु, वृथा कलहे आन्दोलनेऽनशने धर्मघटे च मतिं न विदधतु, इतीमान् न्यायानुपदेष्टुमेव पूर्वतन्त्रं लोकतन्त्रोपकारकं प्रवर्तयामास महर्षिजैमिनिः।

●

# ताथागतमततथ्यविमर्शः

'पद्मश्रीः' पण्डितराजश्रीरघुनाथशर्मा
वेदान्तविभागाध्यक्षचरः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी

❀ ❀ ❀

अथ ताथागतमततथ्यं विमृश्यते। तत्र संक्षेपेण इमे वादाः ताथागतानाम्—क्षणभङ्गवादः, स्वलक्षणवादः, अपोहवादः, असत्ख्यातिवादः, विज्ञानवादः, शून्यवाद इति। एते क्रमेण विमृश्यन्ते। तथा हि क्षणभङ्गवादो नोपपद्यते। अस्मिन् वादे हि कार्यकारणभावानुपपत्तिः, प्रतिबध्यप्रतिबन्धकभावानुपपत्तिः, आधाराधेयभावानुपपत्तिः, प्रतियोग्यनुयोगिभावानुपपत्तिः, विषयविषयिभावानुपपत्तिः किं बहुना, सर्वस्यापि पदार्थस्योत्पत्तौ स्थितौ ज्ञप्तौ च प्रमाणसिद्धमनुभूयमानञ्च पदार्थान्तरसापेक्षत्वं भज्येत। कार्यकारणयोः, प्रतिबध्यप्रतिबन्धकयोः, आधाराधेययोः, प्रतियोग्यनुयोगिनोः, विषयविषयिणोः, क्षणप्रध्वंसिनोरेकस्मिन् क्षणे स्थित्यभावात्। तस्मात् क्षणपरिणामवादो हि सांख्ययोगसम्मतो युक्तः। तदुक्तम्—प्रतिक्षणं परिणामिनो हि सर्वे भावा ऋते चितिशक्तेरिति। परिणामवादे निरन्वयविनाशानङ्गीकारेण सर्वेऽपि कार्यकारणभावादयः पूर्वमनुपपद्यमानतया उक्ता उपपद्यन्ते, समानकालिकसामानाधिकरण्यसम्भवात्। किञ्च क्षणभङ्गवादोऽनुभवविरुद्धः—योऽहं बाल्ये पितरावन्वभूवम्, सोऽहं स्थविरे प्रणप्तॄन् अनुभवामीति, 'सोऽयं घटः,' 'स एवायं नागः' इत्यादिप्रत्यभिज्ञानां दर्शनात्। किञ्च क्षणभङ्गवादेऽन्यस्य बन्धोऽन्यस्य मोक्ष इत्यापद्येत। किञ्च क्षणभङ्गवादेऽनुभवस्मरणव्यवस्था नोपपद्यते। तथा हि अन्यस्यानुभवोऽन्यस्य स्मरणमिति नोपपद्यते। न वा वासनासंक्रमः क्षणभङ्गे उपपद्यते। न वाऽनुभववासनयोः कार्यकारणभाव उपपद्यते। किञ्च क्षणभङ्गवादे सर्वोऽपि नियम्यनियामकभावसमर्थितो व्यवहारो विलुप्येत। तस्मात् क्षणपरिणामवाद एव युक्तोऽनुभवसिद्धः सर्वव्यवहाराविरोधी। किञ्च क्षणभङ्गवाद आत्माऽपि क्षणिको विज्ञानरूपश्च। स च सुषुप्तौ विनष्टः कथं केन चोत्पद्येत ?

यत्तु तथागतेन भगवता वस्तूनां क्षणिकत्वमुक्तम्, तत्परिणामवादं साङ्ख्यसम्मतं समाश्रित्य वैराग्योत्पादनाय, न तु क्षणभङ्गवादाभिप्रायेण। किञ्च क्षणभङ्गवादे कारणपूर्वमसतः कार्यस्योत्पादसम्भवः, तत्र सतोऽपि उत्पादासम्भवः। किञ्च क्षणभङ्गवादे

कार्येणासम्बद्धस्य कारणत्वानुपपत्तिः, असम्बद्धस्यापि तत्त्वेऽकारणस्यापि कारणत्वापत्तिः। एवं क्षणभङ्गवादो न युक्तः।

अथ स्वलक्षणवादो विमृश्यते। वस्तुतः स्वरूपमेव लक्षणं वस्तुनः, न तु वस्तुनः केनचिद् धर्मेण निर्वाच्यत्वम्। सद्रूपेण, असद्रूपेण, सदसत्त्वाभ्यां वा न निर्वाच्यता तस्य। येस्तु धर्मैर्गुणरूपैर्जातिरूपैर्वा व्यवह्रियते धर्मी, ते अतद्व्यावृत्तिरूपापोहरूपाः। सोऽयं साङ्ख्यसिद्धान्तः—गुणक्रियादिसमूह एव द्रव्यमिति। तथा हि **अद्वैतवेदान्तिनः**—सर्ववस्तूनां सदसत्त्वाभ्यामनिर्वाच्यत्वरूपं मिथ्यात्वमाहुः। तदुक्तमध्यासभाष्ये भामत्याम्—'**मिथ्याशब्दोऽयमनिर्वचनीयतावचनः**' इति। एवं हि तैः सदसत्त्वाभ्यामनिर्वाच्यत्वं स्वीक्रियते। सच्चेन्न बाध्येत, असच्चेन्न प्रतीयेत। एकस्मिन् सत्त्वासत्त्वे तु विरुद्धे इति। सोऽयं सौगतानां स्वलक्षणवादोऽद्वैतवेदान्तिनामनिर्वाच्यतावादे पर्यवस्यतीति।

वस्तुतस्तु नापोहरूपत्वं धर्माणां सम्भवति, सत्त्वेन प्रतीयमानत्वात्। तथा हि सन् घट इति सत्त्वं घटत्वे घटे च प्रतीयते, विशिष्ट एव सत्त्वस्यान्वयात्। ततश्च नाभावरूपत्वं घटस्येति। किञ्च घटत्वस्यातद्व्यावृत्तिरूपत्वे कथं तस्यैवातद्व्यावर्तकत्वमिति स्वस्मिन् जन्यजनकभावस्य ज्ञाप्यज्ञापकभावस्य वाऽसम्भवात्। जातेरपोहरूपत्वे गुणकर्मादीनामपि द्रव्यविशेषणानामपोहरूपत्वप्रसङ्गः। न चैतद् युज्यते, अनुभवविरोधात्।

यत्तु घटत्वादिजात्यभ्युपगमे विकल्प्यदूषणानि प्रदर्श्यन्ते, घटत्वादिका जातिर्नित्याऽनित्या वा विभ्वी परिच्छिन्ना वा ? इत्यादि। नित्यत्वे आश्रयनाशे क्व तस्याः स्थितिः ? अनित्यत्वे स्वयमननुगतायाः परानुगमकत्वाभावः। विभ्वी चेत् परैरपि सम्बध्येत। परिच्छिन्ना चेत् न सर्वाभिर्व्यक्तिभिः सम्बध्येतेति। तत्रोच्यते—अद्वैतिनां जातेरपि मायामयत्वेन निर्वाहात्। तदेवं स्वलक्षणवादोऽनिर्वाच्यत्ववादे पर्यवस्यति।

अथासत्ख्यातिवादो विचार्यते। तत्र ख्यातिविषयेऽयं श्लोकः संग्रहरूपः—

**आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथा।**
**तथाऽनिर्वचनख्यातिरित्येतत्ख्यातिपञ्चकम्** ॥ इति।

अत्रासत्ख्यातिर्द्विविधा—सदुपरक्तासत्ख्यातिः, अत्यन्तासत्ख्यातिरिति। तत्राद्यस्य निरासः—अपरोक्षावभासेन। तथा हि अपरोक्षावभासे इन्द्रियार्थसन्निकर्ष आवश्यकः, स चासति न सम्भवतीति। द्वितीयस्य तु निरासो नृशृङ्गादावपरोक्षावभासादर्शनादिति।

विज्ञानवादोऽपि न प्रामाण्यपदवीमारोहति। तथा हि विज्ञानमेवैकं तत्त्वम्, विषयास्तु तस्यैवाकारविशेषाः। विज्ञानञ्च क्षणिकमिति तथागतानुगाः। अत्रेदं

वक्तव्यम्— एकस्मिन् द्रष्टृत्वम्, दृश्यत्वञ्च न सम्भवति, न वा क्वचिद् दृष्टम्। तदुक्त-मुदयनाचार्यैरात्मतत्त्वविवेके—

**न ग्राह्यभेदमवधूय धियोऽस्ति वृत्ति-**
**स्तद्बाधने बलिनि वेदनये जयश्रीः।**
**नो चेदनिन्द्यमिदमीदृशमेव विश्वं**
**तथ्यं तथागतमतस्य तु कोऽवकाशः॥** इति।

इदञ्च सर्वशास्त्रसिद्धान्तः—नैकस्मिन् कर्म कर्तृता इति। विज्ञानस्यैवात्मत्वे क्षणिकत्वे च सर्वे प्रत्यभिज्ञाप्रत्यया नोपपद्यन्ते। न वा वासनासंक्रमः सम्भवति, पूर्वोत्तरविज्ञानयोरेकदाऽनवस्थितेः। वासनासंक्रमाभावे च स्मृतिर्नोपपद्यते। किञ्च विज्ञान-वादे सर्वेऽपि व्यवहारा नोपपद्यन्ते, व्यवहाराणां सर्वेषां द्वैतमूलकत्वात्। नित्यविज्ञान-वादे श्रुतिसम्मते श्रीशङ्करभगवत्पादसमर्थिते तु सर्वमुपपद्यते। तथा हि—नित्यं विज्ञान-मिति प्रत्यभिज्ञाप्रत्यय उपपद्यते। विषयस्तु सत्त्वासत्त्वाभ्यामनिर्वचनीयो द्वितीय इति विषयविषयिभावादयोऽपि उपपद्यन्ते। विषयाणां सत्त्वासत्त्वाभ्यामनिर्वाच्यत्वन्तु प्रतीति-बाध्यत्वयोरनुपपत्तेः स्वीक्रियते। तदुक्तमुदयनाचार्यैस्तद्**बाधने बलिनि वेदनये जयश्री-रिति**, वेदनयस्य वैदिकसिद्धान्तरूपस्य नित्यविज्ञानवादस्य अबाधितवेदमूलकत्वात्। सौगतसम्मतस्य च क्षणिकविज्ञानवादस्य तर्कानुमानागमबाधितत्त्वेनाप्रामाण्यमिति। वेदस्य चालौकिककर्मब्रह्मबोधकस्य तर्काद्यगोचरत्वेनाबाधितत्वात्। क्षणिकविज्ञानवादे हि—द्वैताभावे न कार्यकारणभाव इति बध्यप्रतिबन्धकभावविषयविषयिभावा आधारा-धेयभावादयोऽपि नोपपद्यन्ते। अत एवोक्तमुदयनाचार्यैः—**न ग्राह्यभेदमवधूय धियोऽस्ति वृत्तिरिति।**

किञ्च विज्ञानवादो न केनापि प्रमाणेनानुगृहीत इति। किञ्च भगवद्बुद्धो-पदेशविरुद्धः खलु क्षणिकविज्ञानवादः। तदुक्तं भगवता तथागतेन—**'मनोपुब्बङ्गमा धम्मा'**[1] इति। मनःपूर्वंगमा धर्मा इति तदनुवादः संस्कृते। एतस्य चायमर्थः—सर्वेऽपि धर्मा विषयाः, मनःपूर्वंगमाः—मनसः—मनःकार्याद् विज्ञानात्, पूर्वंगमाः = विज्ञानात्, पूर्वं स्थिताः, विज्ञानेन गृह्यन्त इति। एतेन विज्ञायते विषयो विज्ञानाद् भिन्न इति। किञ्च विज्ञानवादे—विज्ञाता, विज्ञानम्, विज्ञेयम्, विज्ञानसाधनञ्चैकमेव वक्तव्यम्, तस्योपपत्तिः केन दृष्टान्तेन? किञ्च विशुद्धा विज्ञानाकारपरम्परा मुक्तिरिति विज्ञान-वादिना मन्यते।

---

१. धम्म० १।१।

अत्रेदं वक्तव्यम्—सुषुप्तौ शुद्धं विज्ञानम्—तत्र आकारनाशः। जाग्रदादौ विज्ञाने आकार उत्पद्यत इति विज्ञानाद् भिन्नो विज्ञानाकारः। यदि तूच्यते साकारं विज्ञानं निराकारं विज्ञानं जनयति, निराकारञ्च विज्ञानं साकारमिति, तदा वक्तव्यम्—अत्र को हेतुर्रिति ? अद्वैतवादिभिर्विज्ञानं नित्यमानन्दरूपम्, चिद्रूपञ्च स्वीक्रियते। विज्ञानवादिना तु विज्ञानं क्षणिकम्, आनन्दरूपञ्च स्वीक्रियत इति कथं विशुद्धविज्ञानरूपस्य क्षणिकस्य मोक्षस्य स्पृहणीयता ?

किञ्च क्षणिकविज्ञानवादेऽन्यस्याकारपरिग्रहरूपो बन्धः, अन्यस्य च विशुद्धाकारपरिग्रहरूपो मोक्ष इत्यापद्यते। तस्मान्नित्यमानन्दरूपञ्च विज्ञानमभ्युपेयम्, तस्यैव इष्यमाणतायाः सम्भवादिति। तदुक्तं श्रुत्या—'**नित्यं विज्ञानमानन्दं ब्रह्मेति**'[१]।

अथाधुना शून्यवादः समीक्ष्यते। तत्र सर्वं शून्यमिति केचन बौद्धाः। तत्रानात्मनः शून्यत्वं तावत् परीक्ष्यते। अनात्मनः शून्यत्वे मानानुपपत्तिः। दृश्यते हि नृशृङ्गादौ मानागोचरता। संवृत्या शून्यं विश्वं प्रतीयत इति तु न वाच्यम्, संवृतेरत्यन्तासत्त्वे विषयस्याप्यत्यसतोऽग्राह्यत्वापत्तेः। अतः संवृतेर्विषयाणाञ्चानिर्वचनीयत्वं स्वीकार्यमिति। आत्मनस्तु शून्यत्वेऽनुभवविरोधः। न हि कश्चिन्नाहमस्मीत्यनुभवति। किञ्चात्मनः शून्यत्वे संवृतिः कमावृणोति ? अतः शून्यपदाभिधेयं किमप्यात्माख्यं वस्तु स्वीकार्यम्। तदेवाद्वैतवादिभिर्ब्रह्मेति गीयते। तच्च सर्वधर्मशून्यत्वाच्छून्यपदाभिधेयमिति।

तदेवं क्षणभङ्गवादः, क्षणपरिणामवादश्च सांख्यसम्मतस्य विकृतं रूपम्। असत्ख्यातिवादोऽनिर्वचनीयख्यातिवादश्च, एवं स्वलक्षणवादोऽप्यनिर्वचनीयतावादस्य, विज्ञानवादः शून्यवादश्चेति द्वावद्वैतवादस्येति। अत एव कैश्चिद् विद्वद्भिः पुराणे प्रक्षिप्तोऽयं श्लोको वैष्णवैः प्रामाण्येनोपन्यस्यते—

**मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमेव च।**
**मयैव कथितं देवि कलौ ब्राह्मणरूपिणा॥** इति।

वस्तुतस्त्वद्वैतवादस्तदङ्गभूता अन्ये च तदङ्गभूता विज्ञानवादा अनिर्वचनीयतादिवादाः श्रौता एवेति शम्।

●

---

१. बृ० उ० ३।९।२८।

# रसेलमहाशयस्य वाक्यसंरचनानां तद्घटकीभूतावयवानाञ्च भारतीयवाक्यविचारदृष्ट्या समीक्षणम्, तत्र विदुषां वादश्च

**आचार्यश्रीबदरीनाथशुक्लः**
**कुलपतिचरः,**
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी

❀❀❀

[ पुण्यपत्तनस्य भारतीयशिक्षासंस्थानस्य निदेशकेन श्री यम्० पी० रेगेमहोदयेन जुलाई १९८३ मासे ११ दिनाङ्कात् १६ दिनाङ्कं यावद् विदुषां एका वार्तागोष्ठी आयोजिता। यत्र देशस्य प्रतिष्ठिता दार्शनिका विद्वांसः समवेता अभूवन्। तत्रैव सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य कुलपतिचरा आचार्याः श्रीबदरीनाथशुक्लमहोदया भागं गृहीतवन्तः। तत्र विचारपरिचर्यायाः संक्षिप्तः सारः तैः संगृहीतः। परिचर्यायां तत्र पाश्चात्यदार्शनिकस्य रसेलमहोदयस्य प्रतिभयोद्भावितं Proposition पदार्थमाश्रित्य विदुषां विचाराः प्रावर्तन्त। तेषां संक्षिप्तः सारः अग्रिमैर्वाक्यैर्विदुषां मनोमोदाय प्रस्तूयते—सम्पादकः ]

**वस्तुस्थितिपरोक्ष्यविषयः ( Proposition )—**

प्रसिद्धपाश्चात्यदार्शनिकस्य रसेलमहोदयस्य मतेन बोध्यवस्तुभेदात् पदार्थो द्विविधः। तत्र बोध्यः स भवति, योऽस्तित्वं बिभर्ति, बहिः सत्ता च न बिभर्ति, यस्य च सत्यत्वं मिथ्यात्वं वा वस्तुनः संवादेन विसंवादेन वा निर्णीयते। अयमर्थस्तेन Proposition शब्देन निर्दिष्टः। वस्तु सोऽर्थो भवति, यो जगति बहिरवतिष्ठते। यस्य च संवादेन विसंवादेन वा बोध्यस्य सत्यत्वं मिथ्यात्वं वाऽवधार्यते। अयमर्थस्तेन Fact-शब्देन निर्दिष्टः। तस्यायमाशयो यद् ज्ञानसाधने सर्वत्र प्रागबोध्यविषयस्य बोध उत्पाद्यते। अनन्तरं बोद्धा यदि जगति तादृशं वस्तु पश्यति प्राप्नोति च तदा बोध्यस्य सत्यतामवधारयति। अन्यथा तस्य असत्यतां निश्चिनोति प्रत्यक्षस्थले मनुष्यः कदाचित् रङ्गमनभिज्ञाय तत्र रजतं पश्यति, कदाचिच्च रजतमेव यथार्थं पश्यति। उभयत्रैव

स मया रजतं दृष्टमिति मन्यते। अनन्तरं यदा प्रथमदृष्टिस्थले रजतं नावतिष्ठते, तदा प्रथमज्ञातस्य असत्यतां निर्धारयति। द्वितीयदृष्टिस्थले रजतमवतिष्ठते, अतस्तत्र पूर्वज्ञातस्य सत्यतामवधारयति।

एवमेव यदा 'चैत्रो वह्निना क्षेत्रं सिञ्चति' इति वाक्याद् वह्निकरणकक्षेत्र-कर्मकसेचनकर्ता चैत्र इति जानीते, तदा स उक्तवाक्यार्थो 'मया ज्ञातः' इति मन्यते। एवं यदा मैत्रः पयसा पुष्पवाटिकां सिञ्चति इति वाक्यात् पयःकरणकपुष्पवाटिका-कर्मकसेचनकर्ता मैत्र इति जानाति, तदापि उक्तवाक्यार्थो मया अवगत इति मन्यते। उभाभ्यामपि वाक्याभ्यां योऽर्थः अवगततया ज्ञातः प्रतिभासते, स Proposition नामकोऽतिरिक्तोऽर्थो भवति। उक्तयोः प्रथमवाक्याद् ज्ञातसदृशस्य वस्तुनो बहिः स्थितेरभावेन ततो ज्ञातस्य असत्यता उत्तरवाक्याद् च ज्ञातसदृशस्य वस्तुनो बहिः स्थित्या ततो ज्ञातस्य सत्यताऽवधार्यते।

उक्तैव स्थितिस्तदा भवति, यदा कस्यचिदेकस्य अर्थस्य मिथो विरोधिनोर्धर्मयोः निर्णयाय वादिप्रतिवादिनोः स्वाभिमतपक्षोपस्थापनाय विभिन्ने वाक्ये प्रयुज्याते, यथा मीमांसकनैयायिकयोर्मिथश्चर्चायां मीमांसकेन 'शब्दो नित्यः' इति वाक्यं प्रयुज्यते। नैयायिकेन च 'शब्दोऽनित्यः' इति वाक्यं प्रयुज्यते। तदा मीमांसकवचनाद् नैयायिकस्य नित्यत्वेन शब्दस्य बोधो न भवितुमर्हति, तद्विरोधिनः शब्दे अनित्यत्वबोधस्य तस्य सद्भावात्। एवं नैयायिकवचनादपि मीमांसकस्य शब्दे अनित्यत्वबोधो न भवितुमर्हति, तद्विरोधिनः शब्दनित्यताबोधस्य तस्य सत्वात्। फलतया उभयोस्तयोरेकस्य अपरोक्तिनिराकरणे प्रवृत्तिर्नोपपद्यते। अत एव रसेलमहोदयस्य पक्षेण इदमुच्यते यद् उक्तवाक्याभ्यां क्रमेण शब्दत्वनित्यत्वाभ्यां भिन्नस्य Proposition पदार्थस्य शब्दत्वा-नित्यत्वाभ्यां च भिन्नस्य Proposition पदार्थस्य बोधो भवतीति धर्मिभेदेन उभयोरपि तयोः स्वीयबोधविरोधितया भासमानो बोधो भवितुमर्हति। धर्मिभेदेन एकविधबोधस्य अन्यविधबोधं प्रति अप्रतिबन्धवत्वात्। तथा च द्वयोरपि तयोरुक्तवाक्यतो विवक्षि-तस्य च अर्थस्य समर्थनप्रयासः संगच्छते, यच्च समर्थनं युक्तिप्रमाणोपहितं भवितुमर्हति। तदीयस्य Proposition पदार्थस्य समर्थितवस्तुस्थित्या त्रयेण सत्यता भवति, नान्यस्य। Proposition पदार्थस्य अनभ्युपगमे उक्तविधा चर्चा न भवितुमर्हतीति रसेलपक्षो-पन्यासकानां विदुषां दृष्टिः।

रसेलमहोदस्यायं Proposition पदार्थवादः शाब्दिकानां बौद्धपदार्थवादस्य, अद्वैतवेदान्तिनां प्रातिभासिकपदार्थवादस्य, वाचस्पतिमिश्राणां असत्संसर्गभानवादस्य च

यद्यपि समः प्रतीयते, तथापि तेषु केनापि गतार्थयितुं न शक्यते। यतः शाब्दिकाभिमतो बौद्धपदार्थः बहिरसत्त्वेऽपि बुद्धौ अवतिष्ठते, परं रसेलाभिमतः Proposition पदार्थः बहिरसत्त्वे बुद्धावपि नावतिष्ठते; किन्तु बुद्धेर्विषयमात्रं भवति, तन्मते अर्थानामास्पदभूतस्य बुद्धितत्त्वस्याभावात्। अद्वैतवेदान्तिनामभिमतः प्रातिभासिकपदार्थः तूलाविद्ययोत्पाद्यः, तन्नाशसहभाविनाशप्रतियोगी च; किन्तु Propositionपदार्थो न तथा। स हि सत्यः, असत्यो वा नोत्पाद्यः, न च नाश्यः; किन्तु नित्यः, इत्येवं रसेलेन तदभ्युपगमात्। वाचस्पतिमिश्रस्य मतेन भ्रमे भासमानात् संसर्गादपि Proposition पदार्थो यतोऽयं भ्रमविषयभूतसंसर्ग इव नालीकः। भ्रमविषयस्य तस्य वस्तुना विसंवादमात्रम्, न तु भ्रमविषयीभूतमिश्राभिमतसंसर्ग इव तुच्छः।

अयमर्थः भारतीयदार्शनिकदृष्ट्या, विशेषेण न्यायदर्शनदृशा, निर्देक्ष्यमाणप्रकारेण शक्यालोचनीयः। तथाहि प्रत्यक्षस्थले इदं वक्तुं शक्यते यद् बोध्यवस्तुभेदेन पदार्थद्वैविध्याभ्युपगमो निर्युक्तिकः। वस्तुन एव अवस्थाद्वयेन उक्तस्थित्योर्निर्वाहसम्भवात्। अयमाशयः—वस्तुनो भवति अवस्थाद्वयम्, एका ज्ञायमानरूपाश्रयत्वेन अप्रमितता, द्वितीया तेन रूपेण प्रमितता, तथा यदा मनुष्यः रङ्गं रजतं वा रजतात्मना पश्यति, तदैव दृश्यमानज्ञायमानस्य रजतत्वस्य आश्रयत्वेन न प्रमिणोति। तदियं ज्ञायमानरूपाश्रयत्वेन वस्तुनोऽप्रमितता रूपावस्था, अनन्तरं जातज्ञानमूलिकायाः प्रवृत्तेः साफल्ये रजतत्वेन ज्ञातस्य रजतत्वाश्रयता प्रमीयते। तदियं ज्ञायमानरूपाश्रयत्वेन प्रमिततारूपा द्वितीयावस्था।

तथा चाभ्यामवस्थाभ्यामेव रसेलमहोदयस्य प्रत्यक्षस्थलीयः Proposition पदार्थस्य Fact रूपस्य अर्थस्य च गतार्थता वक्तुं शक्यत इति तद्भेदात् पदार्थद्वैविध्यं नावसरं लभते।

शाब्दबोधस्थले च इदं वक्तुं शक्यते यच्छब्दे अनित्यत्वं निश्चितवतो नैयायिकस्य 'शब्दो नित्यः' इति मीमांसकवाक्याद् वाक्यार्थबोधो न भवति; किन्तु तदीयस्य वाक्यार्थबोधस्यानुमानिको बोधो जायते। वाक्यप्रयोगं प्रति वाक्यार्थज्ञानस्य कारणतया मीमांसकवाक्यप्रयोगेण तन्निष्ठस्य तद्वाक्यार्थबोधस्य नैयायिकेन अनुमातुं शक्यत्वात्। एवं मीमांसकस्यापि निश्चितशब्दोऽनित्यता कस्य शब्दः अनित्य इति नैयायिकवचनाद् वाक्यार्थबोधो न भवति; किन्तु तस्यापि उक्तरीत्या नैयायिकनिष्ठबोधस्य आनुमानिकबोधो जायते।

ज्ञानस्य विषयनिरूप्यत्वनियमेन विषयबोधं विना तज्ज्ञानबोधस्य दुर्घटतया नोक्तं संगच्छत इति न शंकनीयम्, विषयानवबोधे विषयविशिष्टतया ज्ञानस्य दुर्ग्रहत्वेऽपि विषयताप्रकारेण तद्बोधसम्भवेन नैयायिकस्य शब्दधर्मिकनित्यत्वप्रकारकबोधत्वेन मीमांसकनिष्ठबोधज्ञानस्य तदीयोक्तवचनात्, मीमांसकस्य च शब्दधर्मिकानित्यत्व-प्रकारकबोधत्वेन नैयायिकनिष्ठबोधज्ञानस्य तद्वाक्यात् सम्भवे बाधकाभावात्। वक्तृ-बोधस्य श्रोतुरनुमानबोध्यतायाः क्लेशसाध्यत्वस्य परिजिहीर्षितत्वे इदमन्यद् वक्तुं शक्यते यद् वक्ता सर्वदा स्ववाक्यार्थमेव न परान् बुबोधयिषति; किन्तु यत्र तदीय-वाक्यार्थः परानभिमतो न भवति, तत्रैव तथा वांछति। यत्र तु वाक्यार्थः पराभिमत-विपरीतो भवति, तत्र स्वकीयवाक्यार्थं न बुबोधयिषति; तस्य परेण बोद्धुमशक्यत्वात्। किन्तु स्वकीयवाक्यार्थबोधमेव बुबोधयिषति तथा च शब्दो नित्य इति मम वाक्यं प्रतिवादिनं मे शब्दधर्मिकनित्यत्वबोधं बोधयतु, इति मीमांसकाभिप्रायात्मकं तदीयोक्त-वाक्यसंकेतवशाच्छ्रोतुस्तदुक्तवाक्यादेव तदीयस्य उक्तवाक्यार्थबोधस्य बोधो भवति, तथा संकेतो दुर्ग्रहश्चेत् प्रतीयेम—तदेतदपरं वक्तुं सुकरं यच्छब्दानित्यत्वविदो नैयायि-कस्य मीमांसकोक्तशब्दनित्यत्वबोधकवाक्यस्य श्रवणानन्तरं तदीयवाक्यघटकतत्त-त्पदार्थोपस्थित्यात्मकज्ञानलक्षणसन्निकर्षेण शब्दे नित्यत्वस्य आहार्यमानसबोधो भवति। तदानीं नैयायिकस्य शब्दे नित्यत्वबोधेच्छायामभावे नैतत्स्वीकर्तुमुचितम्, विरोधि-निश्चयदशायामिच्छयैव अन्यविधबोधस्य स्वीकृतत्वादिति न शंकनीयम्, कथाकाले वादि-प्रतिवादिनोः प्रत्येकं स्वप्रतिस्पर्धिनोर्वाक्यानामर्थबोधस्य स्वस्मिन् अप्रतिभा नाम्नो निग्रहस्थानस्य आपत्तिभयेन उत्पिपादयिषितत्वात्। तदेव युक्तस्थलेषु किमपि वस्तु, अन्यथा बुध्यमानाय तद्वैपरीत्येन प्रतीतेरुक्तरीत्या उपपत्तिसम्भवेन Proposition पदार्थस्य अतिरिक्ततया अभ्युपगमो न यौक्तिकः।

अर्थमेनमन्यथापि रसेलानुयायिनश्चिन्तयन्ति। यथा कश्चिद् ब्रूते 'अहं वसुमती वर्तुलेति विश्वसिमि' न ह्यत्र इतिशब्दपूर्वं श्रूयमाणवाक्यं वक्तुर्विश्वासविषयतया बुध्यते; किन्तु तदर्थो बुध्यते। न च वसुमत्याः वर्तुलत्वरूपोऽर्थस्तदानीं वस्तुभूत इति निश्चीयते, अतस्तदानीं वसुमत्या वर्तुलत्वं Proposition पदार्थात्मनैव अभ्युपेतव्यम्। तदुत्तरं च प्रमाणान्तरेण वसुमत्या वर्तुलत्वस्य बहिःस्थितौ निर्णीतायामुक्तवाक्यार्थस्य सत्यत्वमवधार्यते। एवमेव "श्वो वृष्टिर्भवितेति अहं सन्देह्मि", इति यदि कश्चिद् ब्रूते, तदा तस्यापि इतिशब्दपूर्वंश्रूयमाणं वाक्यं सन्देहविषयो न भवति; किन्तु आगामि-दिवसे वृष्टेः भावित्वमेव सन्देह विषयो भवति। स चैष सन्देहविषयः Proposition पदार्थात्मनैव भवितुमर्हति, तदानीं तस्य वस्तुस्थित्या असंवादितत्वात्। यदि अग्रिम-

दिने वृष्टिर्भवति, तदा पूर्वदिवसीयसन्देहविषयस्य सत्यता निर्णीयते, न भवति चेद् असत्यता निर्णीयते। अत्रेदं प्रतिविधानमुचितं यदुक्तोक्तिकाले वस्तुतो वसुमत्या वस्तुभूतं वर्तुलत्वमेव विश्वासेन विषयीक्रियमाणं बुध्यते। केवलं तदानीं विश्वास-विषयतया प्रतिपाद्यमाने श्रोतुः संशयोदयस्यावसरो भवति। प्रमाणान्तरेण विश्वास-विषयस्य निर्धारितत्वे चोक्तावसरो निवर्त्तते, एषैव रीतिः सन्देहविषयबोधकवाक्येऽपि सुवचा। तदनेन प्रकारेण सामञ्जस्यसम्भवात् तत्रापि Proposition नामकपदार्थान्तर-स्वीकारकल्पना निर्युक्तिका।

Proposition पदार्थस्य समर्थने पर्यायवाक्यान्यपि साधनतया रसेलपक्षगैः प्रयुज्यन्ते। यथा—आंग्लभाषायाः "चैत्र इज वाइज़" हिन्दीभाषायाः "चैत्र बुद्धिमान् है", संस्कृतभाषायाः "चैत्रश्चतुरोऽस्ति" इतीमानि पर्यायवाक्यानि आकारतोऽभेदेऽपि अर्थतोऽ-भिन्नानि भवन्ति। एभिः सर्वैः बुद्धिविशिष्टचैत्ररूपः एक एवार्थः प्रतिपाद्यते चैत्रश्चेत्, जगति तादृश उपलभ्यते, तदा तस्यार्थस्य सत्यता यदा च नोपलभ्यते, तदा असत्यता भवति। अत्र स्पष्टमिदं प्रतिभाति यदुक्तवाक्यैः प्रतिपाद्यमानोऽर्थः प्रतिपत्तिकाले तादृश एव भवति, यादृशः स्वस्य सत्यताया असत्यताया वा निर्णयाय जगत्युपलब्ध-वस्तुनः संवादं विसंवादं वा अपेक्षते। एषा स्थितिस्तत्तद्वाक्यप्रतिपाद्यस्यार्थस्य Proposition रूपत्व एव सम्भवति।

किन्तु इयमप्युक्तिः वस्तुभिन्नस्य Proposition पदार्थस्य प्रतिष्ठापनाय न क्षमते। अत्रापीदं वक्तुं शक्यते यद् उक्तवाक्यैः प्रतिपादितोऽर्थः प्रतिपत्तिकालेऽपि वस्तुरूप एव भवति, केवलं तादृशस्य जगत्युपलब्धि यावत् तस्य वस्तुत्वं नावधारितं भवति। वस्तुन एव प्रतिपत्तिकाले वस्तुत्वेन अनवधारणरूपा एकावस्था वाक्यप्रति-पादितार्थस्य उपलब्धिकाले वस्तुत्वेनावधारणरूपा अन्यावस्था भवति। अत उक्त-स्थितेरेकस्यैव वस्तुनोऽवस्थाद्वयेन निर्वाहसम्भवाद् वस्तुभिन्नस्य Proposition पदार्थस्य कल्पना निर्युक्तिकैव।

तदेवं प्रकृतार्थविमर्शे वितन्यमाने सन्ति पदानि वर्णसंघातरूपाणि, सन्ति तेषा-मर्थाः, सन्ति च पदैः निर्मितानि वाक्यानि, सन्ति च पदार्थघटिता वाक्यार्थाः; किन्तु वाक्येन प्रतिपाद्यमानस्य वस्तुस्थितिसंवादिताया अवधारणात्प्राग् वस्तुव्यतिरिक्तं Proposition पदार्थात्मतैवोचितेति रसेलस्य कथनमिदं नानुमर्दनीयतां सहते।

अत्र प्रसंगे Proposition पदार्थस्य वाक्यार्थतया स्वीकृत्यनुगुणाः केचिद् प्रयोगा अपि परीक्षिताः, यथा विवादाध्यासितं विधानं नैयायिकाभिमतवाक्यार्थभिन्नं सिद्धसाध्या-

र्थावयवद्वयरूपत्वाद् नैयायिकाभिमतवाक्यार्थस्य अतथाभूतत्वादित्यादयः। एते प्रयोगा विधानशब्देन विवक्षितस्य Proposition शब्दार्थस्य असिद्धया धर्मिविधया धर्मविधया वा तस्य विवादविषयत्वासम्भवेन आश्रयासिद्ध्या अन्यैः सुलभैः दोषैश्च दूषयित्वा निराकृताः।

**संज्ञाशब्दार्थः—**

रसेलमहोदयः संज्ञाशब्दार्थविषय इत्थं चिन्तयति यत् तत्तत्संज्ञाशब्दानां स एव अर्थः, यस्तत्तत्संज्ञाशब्दं धत्ते। यथा यदि कस्यचिदपरिचितो जनस्तस्य समक्षमिदं पूर्वतया उपस्थितो भवति, तदा तस्य स्वरूपदर्शने सत्यपि कोऽयमिति निश्चयो न जायते। यदा च केनचित् तन्नाम्ना निर्देशः क्रियते, चैत्रोऽयमिति, तदा चैत्रनामायमित्येवं स विज्ञायते, तेन स्पष्टं यच्चैत्रादिसंज्ञाशब्दाः स्वप्रकारेणैव चैत्रादीन् अर्थान् बोधयन्ति, अतः संज्ञाशब्दाः स्वयं स्वेषां प्रवृत्तिनिमित्तम्।

अत्र भारतीयन्यायदर्शनदृष्ट्या इदं वक्तुं शक्यते यत् संज्ञा शब्दाः स्वयं स्वप्रवृत्तिनिमित्तं न भवितुमर्हन्ति। यतस्तेषां स्वप्रवृत्तिनिमित्तत्वे चैत्रादिनामा चैत्रादिनाम्ना बुद्ध्यतामित्येतदेव संकेतस्वरूपं भवितुमर्हति; परन्तु तन्न युज्यते, चैत्रादिनाम्नः संकेतात् पूर्वसंकेतविषयस्य पुरुषस्य चैत्रादिनामतायाा असत्वात्। किन्तु यदा कस्यचित् पुंसः कश्चिद् बालको जायते, तदा किञ्चित् कालानन्तरं पिता तस्य निर्दिशति यदयं अमुकनाम्ना ज्ञातव्य इति। एतन्निर्देशोत्तरं लोकस्तं बालकं तन्नाम्नैव व्यवहरति, बुद्ध्यते च। तत्रेदमवधेयं यत् पिता बालकस्य नामनिर्देशकाले तात्कालिकं तदीयं शरीरं तद्व्यक्तित्वेन चैत्रादिनाम्ना न संकेतयति; किन्तु जन्मकालादारभ्य आ निधनं वैविध्यं भजमानान् तस्य शरीरविशेषान् तेषु वर्तमानं सामान्यं च पुरस्कृत्य संकेतयति। अयमभिप्रायः—जातस्य बालकस्य जन्मन आरभ्य आजीवनं एक एव देहो न भवति; किन्तु वयोभेदेन देहा भिद्यन्ते, अत एव बाल्यकाले दृष्टः कश्चिद् यदि मध्ये न दृश्यते; किन्तु बार्धक्य एव दृश्यते, तदा बाल्ये दृष्टवता पुंसा न परिचीयते।

अतो जन्मत आरभ्य जीवनपर्यन्तं विपरिवर्तमानेषु देहेष्वेकं सामान्यम् उपेयते। तेन सामान्यरूपेणैव तेषु शरीरेषु पिता चैत्रादीन् संज्ञाशब्दान् संकेतयति, तदेवं देहगतं सामान्यमेव संज्ञाशब्दानां प्रवृत्तिनिमित्तम्। बालकस्य नाम्मा संकेतकाले पितुस्तदीयदेहगतसामान्यस्य अज्ञानेन तदवस्थितस्य संकेतकरणं न युक्तमिति न शंकितुं शक्यम्। सामान्यस्य नित्यतया दिशि काले च सम्बन्धभेदेन प्रथमतो विद्यमानस्य बालकस्य जन्मक्षण एव तदीयशरीरेण सम्बन्धस्य जातत्वेन येनेन्द्रियेण यद् गृह्यते,

तद्गतं सामान्यमपि तेनेन्द्रियेण गृह्यत इति नियमेन बालकस्य शरीरग्राहिणा चक्षुषैव तद्गतस्य सामान्यस्य ग्रहणात्। केवलं तत्सामान्यप्रवृत्तिनिमित्तकस्य शब्दस्याभावादेव शब्देन तदभिलापाभावात्। बालकस्य शरीरविशेषे नाम्नः संकेते कृते च तस्य प्रवृत्ति-निमित्ते निर्धारयिषिते न बालकस्य शरीरभेदेन विद्यमानं तत्तद्व्यक्तित्वं तन्नाम्नः प्रवृत्तिनिमित्तम्, किन्तु तदीयसर्वदेहानुगतं सामान्यमेव तत्प्रवृत्तिनिमित्तमिति निर्धार्यते, तदेवं मे देहः चैत्रनाम्ना बोद्धव्य इत्येतदेव पितृसंकेतस्वरूपम्।

अत्रेदं ध्यातव्यम्—यदि यच्चैत्रत्वादिकं सामान्यतया नित्यत्वेन चैत्रादिनामक-व्यक्तीनामुत्पत्तेः प्राग् अनादिकालात् तेषां निधनोत्तरमनन्तकालं यावदवतिष्ठते, चैत्रादीनां जीवनकाले चैत्रादौ समवायेन जन्मपूर्वनिधनोत्तरकालयोश्च दिक्षु दिक्कृतविशेषणतया काले च कालकृतविशेषणतया तथैव अवतिष्ठते, यथा सृष्टिकाले गवादिषु समवेताः गोत्वादिजातयः सृष्टिपूर्वकाले सृष्ट्युत्तरकाले च केवलं दिक्कालयोरवतिष्ठन्ते। इदमपि अत्रावधेयं यच्चैत्रत्वादिकं न केवलं समवायेन चैत्रादिसंज्ञायाः प्रवृत्तिनिमित्तम्; अपि तु समवायस्वाश्रयावच्छेद्यत्वान्यतरसम्बन्धेन। अतश्चैत्रशरीरे तदवच्छिन्ने आत्मनि च उक्तान्यतरसम्बन्धेन चैत्रत्वादेः शक्त्या देहात्मनोरुभयोः चैत्रशब्दार्थत्व-सम्भवेन 'चैत्रः कृशः', 'चैत्रो जानाति' इत्यादिप्रयोगा उपपद्यन्ते।

अत्र स्वरूपस्वाश्रयावच्छेदकत्वान्यतरसम्बन्धेत पितृसंकेतितदेहविशेषावच्छि-न्नात्मगतं तद्व्यक्तित्वमेव चैत्रादिसंज्ञाशब्दानां प्रवृत्तिनिमित्तं मन्तव्यम्, न तु देहे चैत्रत्वादिजातिं कल्पयित्वा तस्याः चैत्रादिसंज्ञा प्रवृत्तिनिमित्तत्वं स्वीकार्यमिति शंकितुं शक्यम्। वर्तमानदेहेष्विव मृतदेहेषु भाविदेहेषु च पितृसंकेतितदेहविशेषावच्छिन्नात्म-निष्ठस्य तद्व्यक्तित्वस्य स्वाश्रयावच्छेदकत्वसम्बन्धेन सत्तया वर्तमानदेहस्येव भूतभाविषु तदात्मनो देहेष्वपि चैत्रादिशब्दार्थत्वापत्तेः।

**वाक्यविचारः—**

रसेलमहोदयः क्रियापदघटितस्यैव पदसमूहस्य वाक्यत्वं मन्यते, न तु तदघटि-तस्य, अतस्तन्मतेन 'चैत्रो ममार' इत्येव वाक्यम्, चैत्रस्य मृत्युरिति न वाक्यम्, स एवम-भिप्रैति यद् वाक्यं तदेव भवति, येन किञ्चिद् उद्दिश्य किञ्चिद् विधीयते। विधानं च क्रिया-पदेनैव कर्तुं शक्यते। अतो यत्र पदसमूहे न क्रियापदम्, तस्य पदसमूहस्य न वाक्यत्वम्। 'चैत्रो ममार' इति वाक्येन चैत्रमुद्दिश्य भूतमृत्युत्वं विधीयत इति तद् वाक्यम्। चैत्रस्य मृत्युरित्यत्र विधायकस्य क्रियापदस्याभावेन न तद् वाक्यम्; किन्तु पदसमूहमात्रं यत् ( नाउन-फ्रेज ) नामसंघातमात्रमित्युच्यते। न हि तेन चैत्रमुद्दिश्य तदीयं मृत्युं वा

उद्दिश्य किंचिद् विधीयते। अतो विधेयबोधकत्वाभावेन तस्य वाक्यत्वं नोचितम्, वाक्यत्वस्य विधेयबोधकत्वव्याप्यत्वात्।

अयं पक्षो विमृश्यमानः स्वीकर्तुं शक्यो न प्रतीयत इति सर्वैरवाबोधि। यद्यपि पक्ष एष सर्वं वाक्यं क्रियया परिसमाप्यते इति शब्दशास्त्रीयसमयानुसारेण क्रियापदेनैव वाक्यस्य पूर्णता भवतीति दृशा वाक्यस्य पूर्णतासम्बन्धे शक्यविचार्यतां धत्ते; परन्तु क्रियापदेनाघटितस्य विशिष्टार्थबोधे क्षमस्य पदसमूहस्य वाक्यत्वनिराकरणाय न प्रभवति। कथनस्यायमाशयो यद् बोधस्य मुख्यानि त्रीणि प्रयोजनानि भवन्ति। क्वचित् कर्मणि प्रवर्तनम्, कुतश्चित् कर्मणो निवर्त्तनम्, क्वचिदर्थे कस्यचिदर्थस्य सन्देहनिराकरणं च। तत्र प्रथमद्विप्रयोजनौपयिकबोधजनकवाक्ययोः क्रियापदघटितत्वेनैव वाक्यता निर्वहति। अन्तिमप्रयोजनौपयिकबोधस्य क्रियापदाघटितपदसमूहादपि सम्भवेन तस्यापि वाक्यत्वं दुष्परिहरम्। तथा च मृत्युः चैककर्तृको न वेति सन्देहस्य मृत्युधर्मिकचैत्र-कर्तृकत्वप्रकारकबोधेन निवर्तनीयतया तदौपयिकस्य चैत्रस्य मृत्युरित्येतस्य क्रियापदा-घटितस्यापि पदसमूहस्य वाक्यत्वं दुर्निवारम्।

अत्रैव सन्दर्भे 'शशश्रृङ्गमस्ति', 'शशश्रृङ्गं नास्तीति' वाक्यार्थविचारे प्रवृत्ते विद्वद्भिरेष आशयः प्राकाशि यदुक्तवाक्ययोः पूर्वस्मात् शशवृत्तित्वेन विपर्यस्यमाने श्रृङ्गे अस्तित्वबोधः। उत्तरवाक्याच्च शशवृत्तित्वेन विपर्यस्यमाने श्रृङ्गे अस्तित्वाभावबोधो जायते। यतो हि नायं नियमो यद् उद्देश्यता विशेष्यता वा व्यधिकरणधर्मेण तथैवा-वच्छिन्ना न भवति, यथा बहूनां मतेन प्रतियोगिता व्यधिकरणधर्मेणावच्छिन्ना न भवति। शशश्रृङ्गं नास्तीति वाक्याद् अर्थबोधो न भवतीति क्वचिद् ग्रन्थे उपलभ्यमाना उक्तिस्तु ततो वाक्यात् शशश्रृङ्गाभावबोधो न भवतीत्यभिप्रायिका। अत्रैव सन्दर्भे अलीकप्रतियोगिकोऽलीकानुयोगिकश्चाभावो न भवति, इति उक्तिः कथं संगच्छत इति प्रश्नो भावप्रतियोगित्वमभावानुयोगित्वं च सत्त्वव्याप्यमित्युक्त्या न्यायनये प्रतिपाद्यते।

अत्रैव सन्दर्भे प्रथमतो ज्ञातस्य उद्देश्यत्वमज्ञातस्य विधेयत्वम्। उद्देश्यमनूद्यैव अज्ञातस्य विधानं भवतीति नियमं मनसि निधाय 'रामः हतवान्', 'रावणं कः हतवान्' इति प्रश्नयोः उत्तरभूते 'रामो रावणं हतवान्' इति वाक्ये किमुद्देश्यं किञ्च विधेयमित्येन-मुपस्थापितः प्रश्नः प्रकारद्वयेन उत्तरितः प्रश्नवाक्येन प्रष्टुः यद्विशेष्यकयत्प्रकारक-ज्ञानेच्छा बोध्यते, तदुतरवाक्ये प्रकारीभूतोऽर्थो विधेयः। विशेष्यभूतश्च अर्थ उद्देश्यो भवति, इत्ययमेकः प्रकारः। यश्च 'को ब्रूते' इति प्रश्नस्य व्यक्तिविशेषधर्मिकवक्तृत्व-प्रकारकज्ञानेच्छाबोधकस्य प्रश्नवाक्यस्य 'रामो ब्रूते' इति उत्तरवाक्येन जनितं रामोद्दे-

श्यकवक्तृत्वप्रकारकबोधमाश्रित्य अभ्युपेयते, तदनुसारेण 'रामः कं हतवान्' इति प्रश्नस्य च उत्तरभूते उक्ते एकविधे वाक्येऽपि राम एव उद्देश्यः, रावणकर्मकहननकर्तृत्वं च विधेयम् ।

अपरः प्रकारस्तावदेवं वक्तुं शक्यो यद् यदि प्रथमतो ज्ञात एव उद्देश्यः, अज्ञात एव च विधेय इत्यत्र नियमे एव निर्भरः क्रियते, 'तदा रामः कं हतवान्' इति प्रश्ने रामकर्तृकहननकर्मण एव विशेषरूपेण अज्ञातताया: सूचनेन तदुत्तरभूते 'रामः रावणं हतवान्' इति वाक्ये रावणस्य विधेयत्वम्, ज्ञातस्य च रामस्य उद्देश्यत्वम् । 'को रावणं हतवान्' इति प्रश्नेन च रावणकर्मकहननकर्तुः विशेषरूपेण अज्ञातताया: सूचनेन तदुत्तर-भूते वाक्ये रामो विधेयः, तत्कर्तृकहननकर्मणो रावणस्य विशेषरूपेण प्रथमतो ज्ञाततया रावण उद्देश्यः । न चायं नियमो यद् विधेयताप्रकारता नियता, उद्देश्यता च विशेष्यता-नियता, तयोश्च साक्षाद् निरूप्यनिरूपकभाव इति । अत एतत्प्रकारानुसारेणेदं वक्तुं युज्यते यद् 'रामः कं हतवान्' इति प्रश्नस्य उत्तरावाक्यात् प्रष्टुः रामनिष्ठविशेष्यता-नन्योद्देश्यतानिरूपितरावणनिष्ठविधेयतानन्यरावणनिष्ठप्रकारतानिरूपितकर्मत्वनिष्ठप्रकार-तानिरूपितहननिष्ठप्रकारतानिरूपितकर्तृत्वनिष्ठप्रकारतानिरूपको बोधो जायते । एवं 'को रावणं हतवान्' इति प्रश्नस्य उत्तरवाक्याद् रामनिष्ठविशेष्यतानन्यविधेयतानिरूपित-कर्तृत्वनिष्ठप्रकारतानिरूपितहननिष्ठप्रकारतानिरूपितकर्मत्वनिष्ठप्रकारतानिरूपितरावण-निष्ठप्रकारतानन्यरावणनिष्ठोद्देश्यतानिरूपको बोधो जायते; किन्तु प्रकारोऽयं न्याय-ग्रन्थेषु न स्पष्टं निर्दिष्टप्रायः ।

अत्रैव सन्दर्भे द्रव्यमुद्देश्यमेव भवति, न क्वचिद् विधेयमिति रसेलवचनमपि विमृष्टमभूत्, अग्राह्यं च असिध्यत्, 'चैत्रो धनी अस्ति' इत्यादिस्थलेषु चैत्रमुद्दिश्य द्रव्य-स्यापि धनस्य विधेयत्वदर्शनात् । 'दध्ना जुहोति' इत्यादिवचनसम्बन्धे मीमांसा-शास्त्रीयविचारानुसारेण होममुद्दिश्य दधिरूपस्य द्रव्यस्य विधानेनापि द्रव्यस्योद्देश्यता-मात्रवादः पराकृतो भवति ।

**वाक्ये क्रियापदप्रयोजनम्—**

रसेलः क्रियापदस्य व्यापारद्वयं मन्यते—वाक्यघटकपदोपस्थापितानामर्थानां मिथः सम्बन्धाभिधानमभिधीयमानस्य सम्बन्धस्य सम्बन्धिभिः स्वार्थस्य उद्देश्यभूते स्वोपस्थाप्यस्य क्रियात्मकसम्बन्धस्य संसर्जनं च यत् Assertion शब्देन रसेलेनोक्तम् । आभ्यां व्यापाराभ्यां वाक्यस्य विशिष्टैकार्थबोधकता उपपद्यते । यथा—देवदत्तो यज्ञ-दत्तमध्यापयतीत्यत्र 'अध्यापयति' इति क्रियापदेन देवदत्तयज्ञदत्तयोः पारस्परिकः

अध्यापनक्रियारूपः सम्बन्धो बोध्यते। तेनोक्तवाक्यार्थस्य त्रयोऽवयवाः प्रतीयन्ते। देवदत्तयज्ञदत्तश्चेति उद्देश्यभूतौ द्वाववयवौ, अध्यापनरूपः सम्बन्धश्च विधेयभूत एकोऽवयवः। उक्तेन क्रियापदस्य द्वितीयव्यापारेण विधेयभूतमध्यापनमुद्देश्य भूताभ्यां देवदत्तयज्ञदत्ताभ्यां संसृज्यते। अत उक्तवाक्याद् यज्ञदत्तकर्मकाध्यापनकर्तृदेवदत्तरूपस्य वाक्यार्थस्य बोधो भवति। यदि द्वितीयो व्यापारः क्रियापदस्य न स्यात्, तदा देवदत्त यज्ञदत्तः अध्यापनमिति पदसमूहस्येव देवदत्तो यज्ञदत्तमध्यापयति इति वाक्यस्यापि विशिष्टैकार्थबोधकता न स्यात्।

अत्रेदमालोचितं यद् वेदादेः शब्दस्याध्याप्यत्वे अध्यापनमध्येतृकर्तृकोच्चारणानुकूलोच्चारणं रूपम्। एतद्घटकस्योत्तरोच्चारणस्य अध्यापकेन सह कर्तृत्वं सम्बन्धः, पूर्वोच्चारणे च द्वितीयाविभक्तिप्रकृतिभूतपदेन उपस्थापितस्य अध्येतुः कर्तृत्वसम्बन्धः। तेन देवदत्तो यज्ञदत्तमध्यापयतीति वाक्यस्य यज्ञदत्तकर्तृकोच्चारणकर्ता देवदत्त इत्यर्थो निष्पद्यते।

शब्दभिन्नस्य गणितादेर्विषयस्य अध्याप्यत्वेऽध्यापनं ज्ञानानुकूलशब्दप्रयोगरूपम्। तथा च देवदत्तो यज्ञदत्तं गणितमध्यापयति वाक्यस्थले उक्ताध्यापनैकदेशेन ज्ञानेन सह यज्ञदत्तशब्दार्थस्य समवेतत्वसम्बन्धः। गणितशब्दार्थस्य च विषयित्वसम्बन्धः। एवमुक्ताध्यापनस्योत्तरवर्तिनः शब्दप्रयोगरूपैकदेशस्य देवदत्तपदार्थेन सह कर्तृत्वसम्बन्धः। एवं च उक्तवाक्यस्य यज्ञदत्तसमवेतगणितविषयकज्ञानानुकूलशब्दप्रयोगकर्ता देवदत्त इत्यर्थो निष्पद्यते।

अत्राध्यापनस्योक्तरूपस्य परम्परासम्बन्धता सिध्यति, तदीयस्यैकभागस्य एकस्मिन् सम्बन्धिनि अन्यभागस्य च अन्यसम्बन्धिनि विद्यमानत्वात्। तदेवमध्यापनस्य देवदत्तानुयोगिकयज्ञदत्तप्रतियोगिकसम्बन्धत्वस्य सम्भवेन क्रियापदेन सम्बन्धस्याभिधानं भवतीति रसेलोक्तिः संगच्छते। किन्तु यदि तस्याभिप्रायोऽध्यापनस्य सम्बन्धविधया बोधो भवति, तदा स न स्वीकर्तुं शक्यते। पदोपस्थाप्यस्यार्थस्य सम्बन्धविधया भानस्य क्वचिदपि अदृष्टत्वाद् विभिन्नपदाभ्यामुपस्थापितयोरर्थयोः मध्ये स एव सम्बन्धविधया भासते, यस्ताभ्यां पदाभ्यां तत्समभिव्याहृतेन पदान्तरेण वा नोपस्थाप्यते। यथा 'घटमानय' इत्यत्र अम्पदेनोपस्थापिते कर्मत्वरूपे अर्थे घटपदेन उपस्थापितस्य घटरूपार्थस्य निष्ठत्वसम्बन्धेन अन्वयो भवति। निष्ठत्वञ्च न घटपदेन न वा अम्पदेन, न च समभिव्याहृतेन पदान्तरेणोपस्थापितम्। अतो देवदत्तो यज्ञदत्तमध्यापयतीति वाक्याद् अध्यापनप्रकारक एव बोधो युक्तः, न तु तत् संसर्गकबोधः।

स्वोपस्थाप्यस्य क्रियात्मकसम्बन्धस्य स्वघटितवाक्यघटकपदोपस्थापितैरर्थैः संसर्जनरूपः क्रियापदव्यापारो रसेलेन स्वीक्रियते, स नावश्यकः, वाक्यघटकपदानामन्वयबोधौपयिकपौर्वापर्यरूपाकांक्षावशादेव संसर्जनव्यापारफलस्योपपत्तेः। अतः क्रियापदस्य स्वार्थाभिधानव्यतिरिक्तो न कोऽपि व्यापारः सिद्ध्यति। एषैव स्थितिः 'रामो रावणं हन्ति' इत्यादिवाक्येषु 'हन्ति' प्रभृतीनां क्रियापदानामपि विज्ञेया।

**सम्बन्धविमर्शः —**

रसेलेन अर्थद्वयाश्रितोऽर्थद्वयाधिकाश्रितो वा सम्बन्धो भवतीत्युक्त्या द्वित्वविशिष्टो अर्थः सम्बन्ध इति सम्बन्धलक्षणं सूचितं भवति। वैशिष्ट्यं स्वाश्रयत्वस्वाश्रयत्वान्यतरसम्बन्धेन। प्रथमस्वाश्रयता स्वव्यापकत्वस्वशून्यावृत्तित्वोभयसम्बन्धेन। द्वितीयस्वाश्रयता स्वव्यापकत्वस्वानाश्रयवृत्तित्वोभयसम्बन्धेन। यथा— घट-भूतलयोः संयोगो घटभूतलगतद्वित्वेन विशिष्टः, यतः स तस्य द्वित्वस्य व्यापकः, तच्छून्ये घटभूतलोभयभिन्ने पटे अवृत्तिश्च। अतः प्रथमस्वाश्रयत्वसम्बन्धेन उक्तद्वित्वविशिष्टतया संयोगः उक्तयोः सम्बन्धो भवति। एवं भूतले घट इत्यत्र घटनिष्ठं भूतलनिरूपितमाधेयत्वं स्वरूपसम्बन्धेन घटनिष्ठं निरूपकत्वसम्बन्धेन च भूतलगतद्वित्वविशिष्टतया तयोः सम्बन्धो भवति।

'तिरुपतिः' मद्रास–बम्बई-नगरयोर्मध्येऽस्ति इत्यत्र तिरुपतेर्मद्रास-बम्बई-नगराभ्यां मध्यस्थतासम्बन्धो बुद्ध्यते। अयं सम्बन्धः स्वरूपसम्बन्धेन निरूपतो विद्यते। निरूपकत्वसम्बन्धेन च उक्तनगरयोः वर्तत इति द्वितीयस्वाश्रयत्वसम्बन्धेन मद्रास-बम्बई-नगराद् द्वित्वेन विशिष्टो भवति, यतो हि तत्सम्बन्धे उक्तद्वित्वस्य व्यापकता उक्तद्वित्वानाश्रये तिरुपतौ च विद्यमानताऽस्ति। अत्र लक्षणे रसेलेन विशिष्टबुद्धिविषयत्वस्य प्रवेशमकृत्वा लक्षणे अतिव्याप्तिसम्भावनायाः स्वकीयोऽनवबोधः सूचितः। तदंशस्य लक्षणाघटकत्वे घटभूतलगतद्वित्वस्य तदीयसंयोगस्यैव, त्रिषु तन्तुषु समवेतस्य त्रितन्तुकपटस्यापि तिरुपतिनिष्ठमद्रास-बम्बईनगरमध्यस्थतासम्बन्धस्यैव सम्बन्धत्वापत्तेः अपरिहार्यत्वात्। तदंशोपादानेऽपि घटभूतले इति द्वित्वविशिष्टबुद्धेर्विषयभूते द्वित्वे एते त्रयः तन्तवः पटवन्त इति बुद्धेः विषयीभूते पटे च अतिव्याप्तिरिति न शङ्कनीयम्, विशेष्यविशेष्यविशेषणभिन्नत्वस्यापि लक्षणघटकीकरणेन उक्तदोषस्यापाकरणात्। विशेष्यविशेषणभिन्नत्वनिवेशे भूतलनिष्ठे पटाभावस्य स्वरूपसम्बन्धे अव्याप्तिः। भूतलस्वरूपस्य पटाभावसम्बन्धरूपपटाभाववद् भूतलं इति बुद्धौ भूतलात्मना विशेष्यत्वेन तत्र तदन्यत्वस्याभावादिति न शङ्क्यम्, विशेष्यविशेषणभिन्नत्वस्य विशेष्यत्वविशेषणत्वभिन्न-

विशिष्टज्ञानीयविषयताश्रयत्वरूपतया विवक्षितत्वात्। उक्तबुद्धौ हि भूतलस्य विशेष्य-विधया तत्स्वरूपस्य पटाभावसंसर्गविधया च भानेन तत्स्वरूपे विशेष्यत्वविशेषणत्वाभ्यां भिन्नायाः संसर्गताख्यविषयतायाः स्वीकारेणोक्तदोषनिरासात्।

एवमुक्ते तन्मात्रस्यैव लक्षणत्वमुचितम् उभयाश्रितत्वस्य, उभयाधिकाश्रितत्वस्य वा लक्षणे निवेशो व्यर्थ इत्यालोच्यते चेत् सत्यमेतद् विशेष्यताविशेषणताभिन्नविशिष्ट-ज्ञानीयविषयताश्रयत्वमेव सम्बन्धस्य लक्षणम्। अन्यो अंशस्तादृशविषयतावान् एकं द्वौ बहून् वा आश्रयत इति जिज्ञासानिवर्तकमात्रम्। अतो लक्षणस्य रसेलप्रोक्ता परिभाषा नोचितेति सुस्पष्टम्।

अस्मिन्नेव सन्दर्भे सम्बन्धस्य प्रतियोग्यनुयोगिभावमाश्रित्य घटभूतलयोः सम्प्रयोगस्य घट एव प्रतियोगी, भूतलमेवानुयोगीत्येवं कथं भवति ? कुतो नान्यथा तस्य घटभूतलयोरुभयोरेकसमवायसम्बन्धेन विद्यमानत्वादिति प्रश्नो वक्ष्यमाणरीत्या समाहितः। संयोगो हि द्विधा—कर्मजः, संयोगजश्च। यथा पक्षिकर्मणा जायमानः पक्षिवृक्षयोः संयोगः—मेषयोः कर्मभ्यां जायमानः तयोः संयोगः। एवं हस्तवृक्षसंयोगाद् जायमानो वृक्षशरीरयोः संयोगः। तत्र कर्मजन्यसंयोगस्य प्रतियोगितानियामकं स्वजनक-क्रियाश्रयत्वमनुयोगितायाश्च नियामकं स्वजनकक्रियाभिमुख्यम्। संयोगजन्यसंयोगस्य प्रतियोगितानियामकञ्च स्वजनकसंयोगप्रतियोगिसमवेतद्रव्यत्वम्। अनुयोगितानियामकञ्च स्वजनकसंयोगानियोगित्वम्। यदा हि घटकर्मणा भूतलेन सह घटस्य संयोगो जायते, तदा तज्जनिकायाः क्रियाया आश्रयतया घटस्तत्प्रतियोगी, भूतलं च तज्जनकक्रियाया आभिमुख्येन तदनुयोगि भवति। यदा च यत्र कपालद्वयसंयोगेन घट उत्पद्यते, तदा कपालद्वयवता भूतलेन सह उत्पन्नस्य घटस्य द्वितोयक्षण एव संयोगो जायते, स संयोगो न कर्मजन्यः; किन्तु कपालभूतलसंयोगजन्यः, स च स्वजनकसंयोगप्रति-योगिककपालसमवेतद्रव्यत्वसम्बन्धेन घटनिष्ठः, अत एव घटस्तत्प्रतियोगी, भूतलं च तज्जनकसंयोगस्य अनुयोगितया तदनुयोगि।

यद् मेषयोः कर्मभ्यां तयोः संयोगो जायते, तदा तज्जनककर्मणोराश्रयत्वा-भिमुख्ययोर्मेषद्वयनिष्ठतया तयोः संयोग उभयप्रतियोगिकः, उभयानुयोगिको भवति। किन्तु तन्मेषस्तन्मेषेण संयुक्त इति प्रत्ययो न जायते, अतस्तत्र संयोगस्य उभयथा सम्बन्धत्वं भवति। संयोगत्वेन तत्तन्मेषसंयोगत्वेन च तत्र संयोगत्वं मेषद्वयकर्मणोः जन्यतावच्छेदकम्। एवं च तन्मेषसंयोगजनकक्रियायाः, तन्मेषे विद्यमानतया आभि-मुख्यस्य च मेषान्तरे विद्यमानतया तन्मेषसंयोगस्य तन्मेषप्रतियोगिकमात्रतया तन्मेषानु-योगित्वाभावेन तन्मेषतन्मेषेण संयुक्त इति प्रत्ययो नापद्यते।

**उभयानाश्रितः सम्बन्धः ( Monedic Relation )—**

रसेलेन उभयानाश्रितोऽपि सम्बन्धः स्वीकृतः, अन्यथा वाक्ये सर्वत्र क्रियापदेन सम्बन्धस्याभिधानं भवतीति तन्मतस्य हान्यापत्तेः। यथा 'चैत्रश्चतुरोऽस्ति' इति वाक्ये अस्तिपदेन चैत्रचातुर्ययोः स्वरूपसम्बन्धस्यैवाभिधानं भवति, स्वरूपं चैत्रस्य चातुर्यस्य वा न उभयाश्रितम्, स्वस्वरूपस्य स्वमात्रनिष्ठत्वात्, नेदमाशङ्क्यम् यत् चैत्रस्य स्वरूपं चैत्रपदेन चातुर्यस्य च स्वरूपं चतुरपदेनैवोच्यते, अतोऽस्तिपदस्य सम्बन्धाभिधायकत्वं न युज्यते, तयोः 'चैत्रश्चतुरः अस्ति' व्यवहारकालात्मकवर्तमान-कालावच्छेद्यस्वरूपस्यैव सम्बन्धतया तत्कालोपस्थापनद्वारा तत्कालावच्छेद्यस्वरूप-सम्बन्धस्याभिधायकत्वात्।

अत्रेदमालोचितं विद्वद्भिः यत् सम्बन्धमात्रस्य सप्रतियोगिकत्वसानुयोगित्व-नियमेन स्वरूपसम्बन्धस्यापि तदुभयमावश्यकम्। अतोऽनुयोगितानियामकसम्बन्धेन अनुयोगिनि, प्रतियोगितानियामकसम्बन्धेन च प्रतियोगिनि स्वरूपसम्बन्धस्यापि सत्त्वेन तस्याप्युभयानाश्रितत्वम्।

इदमत्रावधेयं यत् सर्वत्र आधारस्वरूपस्यैव सम्बन्धत्वम्, न त्वाधेयस्वरूपस्य, तस्याधारासम्बद्धत्वेन आधारे तत्स्वरूपस्य तादात्म्येन तदेव तस्यानुयोगितानियामक-माधेये च तत्सम्बन्धावच्छिन्नाधेयतायाः सत्त्वेन तस्या एव तत्सम्बन्धप्रतियोगितानिया-मकत्वम्, तत्सम्बन्धावच्छिन्नाधेयत्वम्, तत्सम्बन्धप्रतियोगित्वयोरैक्येऽपि प्रतियोगितात्वेन नियम्यत्वस्य आधेयतात्वेन नियामकत्वस्य निर्वाहो निष्प्रत्यूहः। एवं च स्वरूपस्यापि उक्तरीत्योभयनिष्ठत्वसम्भवेन उभयानाश्रितसम्बन्धकल्पना निर्युक्तिकैव।

यद्यप्यस्ति तादात्म्यमेकमात्राश्रितः सम्बन्धः, ततो भिन्न एव तदीयस्य तादात्म्यसम्बन्धस्योपगमात्, तथापि तस्यापि प्रतियोग्यनुयोगितावच्छेदक-भेदेनैव सम्बन्धता, 'नीलो घटः अस्ति' इत्यादिवाक्यजबोध एव तत्सम्बन्ध-भानात् 'घटो घटः' इत्यादिस्थले च तत्संसर्गकबोधानभ्युपगमात्, तथा च द्वित्व-व्यापकोऽर्थः सम्बन्ध इति लक्षणं मन्तव्यम्। व्याप्यता आश्रयतासम्बन्धेन, व्यापकता च स्वप्रतियोगितावच्छेदकत्व-स्वानुयोगितावच्छेदकत्वान्यतरसम्बन्धेन।

नीलत्वघटत्वगतद्वित्वम् आश्रयतासम्बन्धेन नीलत्वे घटत्वे च विद्यते, तत्र नीलत्वे नीलघटयोरभेदः स्वप्रतियोगितावच्छेदकत्वसम्बन्धेन विद्यते, घटत्वे च स्वानु-योगितावच्छेदकत्वसम्बन्धेन विद्यत इति तस्य द्वित्वव्यापकतया भवति नीलघटसम्बन्ध-त्वम्, एवं सम्बन्धान्तरेष्वपि बोध्यम्।

# भगवद्गीतातात्पर्यसमालोचनम्

पण्डितराजः श्रीएस्० सुब्रह्मण्यशास्त्री
शास्त्रचूडामण्याचार्यचरः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी

❀❀❀

श्रीमद्भागवते श्रूयते—'एते चांशकला विष्णोः कृष्णस्तु भगवान् स्वयम्' इति। तेन सूच्यते भगवतो ज्ञानशक्तिक्रियाशक्त्युभयसम्पन्नः श्रीकृष्णावतारः, न तु क्रियाशक्तिमात्रसम्पन्नो रामाद्यवतारवत्। श्रीरामस्तु 'स हि विष्णुः सनातनः' इत्युक्तेः भगवदवतारोऽपि सन् 'आत्मानं मानुषं मन्ये रामं दशरथात्मजम्' इति वदन् स्वस्य परत्वं नेवाऽऽविश्चकार। श्रीकृष्णस्तु 'अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा', 'मत्तः सर्वं प्रवर्तते', 'अहमादिर्हि भूतानां महर्षीणां च सर्वशः' इति स्पष्टं वदति। विश्वरूपप्रदर्शनादीनि बहून्यमानुषकार्याणि प्रदर्शयति भक्तेभ्यः। श्रीकृष्णवचनान्यमृतप्रायाणि दृश्यन्ते महाभारते सर्वत्र। अर्जुनायोपदेशस्तु बन्धम्, बन्धकारणम्, मोक्षम्, मोक्षसाधनानि चोपनिषद्वाक्यानुसारेणैव प्रदर्शयन् ब्रह्मसूत्रवत् पृथक्शास्त्रत्वेनैव प्रथां लभते। भगवांस्तत्र तत्र 'कुरु कर्मैव तस्मात् त्वम्', 'कर्मण्येवाधिकारस्ते', 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' इत्यादिवचनैः शास्त्रोक्तानि वर्णाश्रमकर्माण्यवश्यकर्तव्यत्वेन विदधाति। कर्मशब्दस्य चलनात्मकेषु लौकिकवैदिकेषु सर्वत्र प्रसिद्धावपि, भगवतः 'स्वे स्वे कर्मण्यभिरतः सिद्धिं प्राप्नोति' इति, 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' इति च वचनात् 'कर्मण्येवाधिकारस्ते मा फलेषु कदाचन' इति फलत्यागवचनाच्च कर्मशब्दो वैदिककर्मपरः, लौकिककर्म कुर्वतः फलत्यागे जीवनलोपप्रसङ्गात्।

भारतवर्षस्य स्वराज्यप्राप्तये कृतबहुश्रमा लोकमान्यास्तिलकमहाभागास्तु—गीतायाः कर्मण्येव तात्पर्यं विस्तरेण प्रतिपादयन्ति स्वोपज्ञे गीतारहस्ये। भगवद्गीतायाः कर्मानुष्ठानप्रेरण एव तात्पर्यम्। 'कुरु कर्मैव तस्मात् त्वम्', 'कर्मण्येवाधिकारस्ते' इत्यादिवचनेषु भगवतः कर्मणि नियोजनायाः स्पष्टत्वादिति। तदिदं भगवत्पादैरेव भाविदृष्ट्या निराकृतम्। यतो ह्यर्जुनः स्वयमेव युद्धे प्रवृत्तो भगवन्तं सहायार्थमाजुहाव। भगवानपि 'भवतः सारथ्यं करिष्यामि। युद्धं तु स्वयं न कुर्याम्' इति प्रतिजज्ञे। तेन

तस्य कर्मणि नियोजनं नापेक्षितं सन्दर्भविरुद्धं च। 'युद्धयस्व भारत' इत्यस्य युद्धादुपरमं मा कार्षीरित्यर्थः। उपरमकारणत्वेन ये हेतवस्त्वया प्रोक्तास्ते न सद्धेतवः; अपि तु तदाभासाः। भीष्मादीनां मरणं तु नास्त्येव, नित्यत्वात्। तेषां शस्त्रप्रहारदुःखं तु 'नासतो विद्यते भावः' इति न्यायेन मिथ्या। पापं तु धर्मयुद्धे नास्ति, स्वधर्मत्वात् क्षत्रियस्य। वर्णसाङ्कर्यं तु न भवेत्, सर्वेषां योद्धॄणां पत्न्यः स्वधर्मपरा न व्यभिचरेयुरिति परिहारात्।

भगवद्गीताया ईश्वरभक्तिविधाने महातात्पर्यमिति भागवता मन्यन्ते। तथा हि—

चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ॥

इति भगवद्भक्तेः सुकृतिनामेव लाभमुक्त्वा आर्तादीनां चतुर्णां भक्तत्वेऽपि ज्ञानी निष्कामभक्तो मदभिन्न इत्यवोचत्। नवमे च—

अनन्याश्चिन्तयन्तो मां नित्ययुक्ता उपासते।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्॥

इति पद्येन 'अहमेव भगवान् वासुदेवः' इति भक्तिरभेदभावनारूपा कर्तव्येति व्याख्याय 'तेषामनन्यभावेन भजतां योगक्षेमं निर्वहाम्यहम्' इति तैः कुटुम्बरक्षणाय प्रयासोऽपि न कार्यं इति विशेषमुक्त्वा भगवद्भक्तेः सौलभ्यं च 'पत्रं पुष्पं फलं तोयम्' इत्यादिना प्रतिपाद्य, तस्याप्यशक्तौ 'यत्करोषि यदश्नासि' इत्यादिना स्वीयकुटुम्बरक्षार्थं स्वभजनस्य सुकरत्वेन प्रशशंस। दशमे च—

मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम्।
कथयन्तश्च मां नित्यं नित्ययुक्ता उपासते॥

इति तेषां सार्वदिकभजनम्, तेन च भगवत्प्राप्तिमवोचत्। पुनः 'तेषामेवानुकम्पार्थम् अहमज्ञानजं तमः। नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता' इति भक्तानां भगवदनुग्रहादेव विनापि श्रवणमनननिदिध्यासनानि तत्त्वसाक्षात्कारं स्पष्टमाह। यथा काशीमरणे भवति। एकादशे च—

मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः।
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव॥

इत्यनेन भक्तिमेव भगवत्प्राप्त्युपायं वदति। द्वादशे च—

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते।
श्रद्धया परयोपेताः ते मे युक्ततमा मताः॥

इत्यनेन निर्गुणब्रह्मोपासनापेक्षया सगुणोपासनस्य सौलभ्यं भगवत्प्राप्तिसाधनत्वं च वदति। अष्टादशे तु—'तमेव शरणं गच्छ सर्वभावेन भारत' इत्यनेनेश्वरशरणागतिं विधाय 'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु' इति भक्तिमेव दृढीचकार। सर्वमेतद् गीताया भक्तिशास्त्रत्वे स्पष्टं लिङ्गमिति।

भगवत्पादास्तु गीताशास्त्रं ज्ञानशास्त्रमेवेति सुधीरमुद्घोषयन्ति। ज्ञानं चाद्वैतज्ञानमेव जीवब्रह्माभेदविषयमेव।

ननु द्वैत-विशिष्टाद्वैत-शुद्धाद्वैतभाष्यकारेषु जाग्रत्सु कथं गीताशास्त्रमद्वैतपरमाख्यायत इति चेदुच्यते—जीवब्रह्माभेदप्रतिपादनेऽपेक्षिता इमेऽर्थाः। स्ववचनेनाभेदप्रतिपादनम्, जीवस्वरूपस्य पञ्चकोशविविक्ततया प्रतिपादनम्, प्रपञ्चमिथ्यात्वम्, ईश्वरस्य स्वरूपम्, तज्ज्ञानेन सर्वविज्ञानमित्येतेऽर्था अत्र पौनःपुन्येन पठ्यन्ते। प्रपञ्चस्य मिथ्यात्वं च भगवता दृढं प्रतिपाद्यते। जीवब्रह्मैक्यबोधकवाक्यानि—(१) 'क्षेत्रज्ञं चापि मां विद्धि' इत्युपदेशः, क्षेत्रज्ञं = जीवं मां चापि विद्धि = मदभिन्नं जानीहीत्यर्थकः। न च क्षेत्रज्ञपदं सर्वज्ञपरम्। पैङ्गिरहस्यब्राह्मणे 'तदेतत् सत्त्वं येन स्वप्नं पश्यति। अथ योऽयं शारीर उपद्रष्टा स क्षेत्रज्ञः' इत्यन्तःकरणव्यतिरिक्तस्य जीवस्य क्षेत्रज्ञपदवाच्यत्वमाह—

महाभूतान्यहङ्कारो बुद्धिमव्यक्तमेव च।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः।
इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः।

इति क्षेत्रस्वरूपं विवृत्य तत्राभिमानवान् क्षेत्रज्ञ इत्याह। अत्र ज्ञानम् अहमिच्छामि, अहं द्वेष्मि, अहं सुखी दुःखीत्यादिज्ञानम्। सङ्घातः— शरीरेन्द्रियप्राणसमूहः। चेतना तत्राऽऽत्मचैतन्यतादात्म्येन 'अहं चेतनः' इति बुद्धिविषयता। तत्र जीवस्य विशेषणांशपरित्यागेन ईश्वराभेदज्ञानं ज्ञानपदमुख्यार्थः। इतरन्न ज्ञानम्; अपि त्वज्ञानमेव। 'सा विद्या या विमुक्तये' इति श्रवणात्।

अपि च 'ज्ञानी त्वात्मैव मे मतम्' इति भगवद्वचनं जीवब्रह्मैक्यं स्पष्टमाह। 'तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते' इति च। एकभक्तिः = एकस्मिन् स्वाभिन्ने ब्रह्मणि ज्ञानरूपभक्तिमानित्यर्थः।

'सर्वभूतेषु येनैकं भावमव्ययमीक्षते' इति वदन् भगवान् सर्वशरीरेषु जीवरूपेण यो वर्तते 'अविभक्तं विभक्तेषु' उपाधिभेदभिन्नेषु देहेषु तम् अविभक्तं जीवं पश्यति। तदेव ज्ञानमित्यर्थः।

अत्र केचन भाष्यकर्तारः—'न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः' इति पारमार्थिकनित्यत्वोपदेशसमये 'अहम्, त्वम्, इमे, सर्वे वयम्' इति व्यपदेशाद् औपाधिकभेदवादो निरस्तः। आत्मभेदस्य अतात्त्विकत्वेन तत्त्वोपदेशसमये भेदनिर्देशो न संगच्छते। अतो भगवदुक्तात्मभेदः 'स्वाभाविकः सत्यः' इति वदन्ति, नैतत् सारम्, 'उद्देश्यविधेयभावेन तत्त्वनिर्णयस्थले उद्देश्यविशेषणमविवक्षितम्' इति हि न्यायः। 'अप्यग्निष्टोमे राजन्यस्य गृह्णीयात्, अप्युक्थ्ये ग्राह्यः' इत्यत्र षोडशिग्रहविधावप्यग्निष्टोमे षोडशिग्रहणे तस्य षोडशियागापत्तिः। अतोऽग्निष्टोमत्वमुक्थ्यत्वं चोपमृद्य षोडशिग्रहणविधिरिति दशमे मीमांसकाः, ग्रहैकत्वन्यायाच्च।

प्रकृते च 'त्वम्, अहम्, इमे' इति बहूनामुद्देशेन नित्यत्वं विधीयते। उद्देश्यगतं बहुत्वमुपमृद्येति सारम्। 'ग्रहं संमार्ष्टि' इत्यादौ चोद्देश्यग्रहादावेकत्वाद्यविवक्षितम्। अतो बहून् अनूद्य नित्यत्वविधावुद्देश्यगतबहुत्वमविवक्षितम्। अत एव 'अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः' इति च समञ्जसम्।

यच्च 'नित्यो नित्यानाम्' इति श्रुत्युदाहरणम्, तदपि जीवभेदं न प्रतिपादयति। यतोऽनित्यानां ब्रह्मादिदेवानां मध्ये नित्यः, चेतनानां जीवानां चैतन्यप्रदोऽग्निरिव दाहकजलादेः दहनशक्तिप्रद इति तदर्थात्।

यच्च परमार्थदृष्टेरात्मसाक्षात्कारनिवृत्ताज्ञानस्याऽज्ञानकृतभेददर्शनं तन्मूलोपदेशादिव्यवहारश्च न संगच्छत इति, तदप्यसारम्। 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' इनि श्रुतेरुपदेशो द्वैतविषये, तदा च द्वैतमस्ति। यद्यैक्यमवलम्ब्य पृच्छ्यते, तदोपदेश एव नास्ति। एवं श्रौतपरिहारे जागरूके सति प्रश्नोऽसंगतः। 'यत्र त्वस्य सर्वमात्मैवाभूत्, तत्केन कं पश्येत्' इति श्रुतेः।

यद्यपि ब्रह्मज्ञानेन भेदबुद्धेर्निवृत्तत्वाद् उपदेशानुपपत्तिरित्यादि, तदपि न। न हि प्रत्यक्षदृष्टेऽनुपपत्तिर्वक्तुं शक्यते। व्यासादयस्तत्त्वसाक्षात्कारवन्त उपदिष्टवन्तः। भगवानपि प्रपञ्चमिथ्यात्वमनुभवन्नप्युपदिशति। अन्यथा 'नासतो विद्यते भावो नाभावो विद्यते सतः' इत्यसतः प्रकृतस्य मात्रास्पर्शादेरसत्त्वं तस्य सत्त्वाभावं च नोपदिशेत्। तस्मात् तदीयदूषणानि नाद्वैतं स्पृशन्ति।

**पञ्चकोशविवेकः—**

सर्वत्रात्मोपदेशः पञ्चकोशव्यतिरेकमात्मनो बोधयित्वैव प्रवर्तते। यथा तैत्तिरीयोपनिषदि—अन्नमयप्राणमयमनोमयविज्ञानमयानन्दयान् प्रस्तुत्य न तेषां पक्षिरूपत्वं प्रकल्प्य पक्षपुच्छमध्यभागप्रतिष्ठाः प्रदर्श्य, अन्ते सर्वप्रतिष्ठारूपं ब्रह्मोपदिशति 'ब्रह्मपुच्छं प्रतिष्ठेति'

 

भगवान् 'वासांसि जीर्णानि यथा त्यक्त्वा नव्यं वस्त्रं धारयन्ति मानवास्तथैवेदं शरीरमिति दृष्टान्तेन वस्त्रवच्छरीरमात्मनो भिन्नमित्यवोचत्, ततः 'अपाने जुह्वति प्राणं प्राणेऽपानं तथाऽपरे' इत्यादिना होमकर्तृजीवापेक्षया प्राणं भिन्नं जगाद। एवं मनोमयादपि 'सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी' इति मनसः संन्यासिनः कर्तुः करणत्वं ब्रुवन् कर्तुस्तद्व्यतिरेकं सूचयति। विज्ञानमयः, बुद्धिमयः कर्ता, तद्व्यतिरेकं च स्पष्टम्—

नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्ववित्।
पश्यन् शृण्वन् स्पृशन् जिघ्रन् अश्नन् गच्छन् स्वपन् श्वसन्॥

इति श्लोके सर्वविषयेषु कर्तृत्वं निवारयन् 'आत्माऽकर्ता' इति बोधयति। तथा भोक्तुरानन्दमयादपि 'ये हि संस्पर्शजा भोगा दुःखयोनय एव ते। आद्यन्तवन्तः कौन्तेय' इत्यादिवचनाद् भोगप्रधानाद् आनन्दमयाद्भेदोऽपि सूचितः। 'नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्ववित्' इत्युक्त्याऽऽत्मा कर्तृत्वरहितः, अत एव न भोक्तेति सूच्यते, तयोर्नियतसाहचर्यात्।

आत्मनो जीवस्य संसारो मिथ्या। जीवः शुद्ध इति ज्ञानं ब्रह्माभेदोपयोगित्वादावश्यकम्, तच्च बहुवारमभ्यस्यते गीतासु।

प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः।
यः पश्यति तथाऽऽत्मानम् अकर्तारं स पश्यति।
प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः।
अहंकारविमूढात्मा कर्ताऽहमिति मन्यते॥

अत्र प्रथमश्लोक एवकारेणाऽऽत्माऽकर्तेति स्पष्टम्। अत्र केचन भाष्यकाराः कर्तुरपि अकर्तृत्वानुसन्धानविधिं मन्यन्ते, तन्न शोभनम्, 'नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्ववित्' इत्यत्र अकर्तृत्वमेव तत्त्वमिति स्पष्टत्वात्। द्वितीये 'कर्ताऽहं' अहमेवेति व्याख्यानं तार्किककृतमशोभनम्, 'प्रकृत्यैव' चेति श्लोक एवकारश्रवणात्।

**प्रपञ्चमिथ्यात्वम्—**

आत्मनः कर्तृत्वं मिथ्येति 'हत्वाऽपि स इमान् लोकान् न हन्ति न निबध्यते' इति श्लोके व्यवहारतो हत्वापि परमार्थतो न हन्तीति हन्तृत्वमस्य नास्तीति च वचनात् सिद्धम्। एकविज्ञानेन सर्वविज्ञानं प्रस्तुत्य च्छान्दोग्यषाष्ठे 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति ब्रुवती श्रुतिरुपादानव्यतिरेकेणोपादेयस्य पृथक्सत्त्वाभावादुपादेयं सर्वमुपादानज्ञानेन तत्त्वतो ज्ञातं

भवति, विकारस्य वाचारम्भणत्वान्मिथ्यात्वं 'मृत्तिकेत्येव सत्यम्' इति दर्शयति। अत्रापि भगवान् तदेवाभिप्रेत्य 'ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः। यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते' इति वदन् वैदिकमेकविज्ञानेन सर्वविज्ञानं स्मारयति। भगवतो ब्रह्मरूपत्वात् प्रपञ्चोपादानत्वम्। 'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा' इति वचनात् सिद्धम्। तथा नवमे 'मत्स्थानि सर्वभूतानि' इति वचनात् प्रपञ्चोत्पत्तिस्थितिलयसाधनत्वं तेन चोपादानत्वं भगवतः सूच्यते। एतेनोपादानव्यतिरेकेणोपादेयाभावात् प्रपञ्चमिथ्यात्वं सिद्धं भवति।

एवमेव नवमे—

'मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः'।
'न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम्'॥

इति वदन् प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपं मिथ्यात्वं स्पष्टमाह।

एवं 'नासतो विद्यते भावो नाभावो विद्यते सतः' इति श्लोकेन प्रकृतमात्रास्पर्शपरिग्रहेऽपि तस्य प्रपञ्चमात्रोपलक्षणत्वात् सदसद्विलक्षणत्वरूपं मिथ्यात्वमुक्तं भवति।

यत्त्वन्येषां विवरणं 'यावनर्थ उदपाने' इति श्लोकस्य सर्वतो व्याप्तेऽपि जले यावदेव पानीयप्रयोजनम्, तावदेव तेनोपादीयते, न सर्वम्, एवं वेदेऽपीति, तत् 'यथा कृतायविजितायाधरेऽयाः संयन्ति। एवं तत्समेति यत् किञ्च प्रजाः साधु कुर्वन्ति, यस्तद्वेद यत्स वेद' इत्युपनिषन्मूलत्वादस्य श्लोकस्यात्र तद्विपरीतत्वान्न शोभनम्।

चतुर्थे कर्माकर्मविकर्मणां रहस्यं वक्ष्यामीति प्रतिज्ञाय—

कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः।
स बुद्धिमान् मनुष्येषु स युक्तः कृत्स्नकर्मकृत्॥

इति ब्रवीति। अत्र मुख्यार्थो भगवत्पादैर्लिखितः। आत्मनि कर्मविकर्मणी न स्तः। अकर्म तु कर्माभावः। स च देहादिनिष्ठत्वेन प्रतीतः, सोऽपि कर्मैव। स च प्रथमपादेन निषिद्धः। तथा चात्मा शुद्ध इति निर्णयः। तथा ज्ञानवतो बुद्धिमत्त्वम्। आत्मनि कर्मैव नास्ति। शरीरमन आदिगतमात्मन्यारोप्यते। आत्मा तु शुद्ध इति ज्ञानाज्ज्ञाता मनुष्येषु बुद्धिमान्। स च वेदविहितसर्वकर्मणां यत् फलं परम्परया ब्रह्मप्राप्तिरूपम्, तत् प्राप्नोतीति सर्वकर्मकृत् इति भगवत्पादाः।

यत्तु 'क्षेत्रज्ञं चापि मां विद्धि' इत्यस्य द्वैताचार्यव्याख्यानं 'क्षेत्रज्ञ इत्यस्य सर्वज्ञ इत्यर्थः' इति, तन्न सारम्, क्षेत्रमात्रविज्ञानेऽपि जीवविज्ञानाभावात्।

यच्च विशिष्टाद्वैतिनां व्याख्यानं 'क्षेत्रक्षेत्रज्ञयोः, चिज्जडयोरन्तर्यामिरूपेणान्तः-प्रविश्य नियामकत्वाच्छरीरशरीरिणोरपृथग्भावेन सामानाधिकरण्यमिति, तदपि न सारम्, यतोऽन्तर्यामिज्ञानस्य 'मद्भक्त एतद् विज्ञाय मद्भावायोपपद्यते' इति वक्ष्यमाण-फलकीर्तनं नानुकूलम् । अन्तर्यामिब्राह्मणेऽप्यन्तर्यामी ईश्वर इत्येवोक्तम्, न तु तस्य ज्ञान-पदमुख्यार्थत्वम् । ज्ञानफलत्वेन च वक्ष्यमाणा 'मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते' इति ब्रह्मभावप्राप्तिरस्य ज्ञानस्य न सम्भवति । शरीरशरीरिभावकृतसामानाधिकरण्यस्य गौणत्वात्, गौणज्ञानेन 'सिंहो माणवकः' इतिवदमुख्येन ब्रह्मभावासम्भवात् । भगवत्पा-दीयव्याख्या तु—जीवब्रह्मैक्यविषयं ज्ञानं ब्रह्म प्रापयति इति श्रुतौ बहुवारमभ्यस्यते—'य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति' इत्यादौ । क्षेत्रक्षेत्रज्ञयोर्ज्ञानस्यैव ज्ञानत्वं मुख्यं 'तत्कर्म यन्न बन्धाय सा विद्या या विमुक्तये' इति अविद्यानिवर्तकज्ञानस्यैव मुख्य-ज्ञानत्वमिति संगच्छते ।

**अद्वैते अन्यो विशेषः—**

भगवान् स्पष्टं बहुवारमाचष्टे ज्ञानादेव कैवल्यमिति । यथा—'इति ते ज्ञान-माख्यातं गुह्याद् गुह्यतरं परम्' इति । समस्तस्य गीताशास्त्रस्य ज्ञाने तात्पर्यमिति । भक्तेर्ज्ञानद्वारैव मोक्षहेतुत्वम् । 'भक्त्या मामभिजानाति यावान् यश्चास्मि सर्वतः' इति भक्तेर्ज्ञाने पर्यवसानमाह । एवं चतुर्थे 'ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः' इति ।

कर्मणोऽपि 'ब्रह्मार्पणं ब्रह्म हविः' इत्यादिना सर्वस्य ब्रह्मत्वेन ज्ञानं मोक्षसाधन-मभिधीयते ।

चतुर्थे—

'ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा' ।
'ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति' ।
'सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि' ॥ इति ।

पञ्चमे—

ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥
सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥ इति ।

योगाभ्यासवर्णनपरे षष्ठेऽपि भगवान् ज्ञानमेव प्रशंसति—

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥ इति ।

'यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति । सर्वभूतेषु चात्मानम्' इतीशोपनिषदर्थमनुवदति । 'सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः' इति भगवान् अभेदभावनयैव ध्यानमाह ।

अष्टादशाध्याये 'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज' इत्यत्रापि 'मामेकत्वेनाभेदेन जानीहि' इत्येवार्थः । अत एवोपसंहारस्य ब्रह्मसाक्षात्कारपरता संगच्छते ।

ज्ञानविषयोऽपि 'अहं ब्रह्मास्मि' इति वा 'अहमेवेदं सर्वमस्मि' इति वा द्विधा बृहदारण्यके पठ्यते । आद्यं 'य एवाहं ब्रह्मास्मीति वेद स इदं सर्वं भवति' इति । तथा ब्रह्मणो ज्ञानात् सर्वं भवति । अतः 'अहमेवेदं सर्वमस्मि' इति तस्य भावना भवति । 'अहं ब्रह्मास्मि' इति ज्ञानस्य पूर्वरूपम् । 'अहमेवेदं सर्वम्' इत्युत्तररूपम् । इदमपि बृहदारण्यक एव—मोक्षदृष्टान्तत्वेन स्वप्नसुषुप्त्योर्वर्णनसमये 'अहमेवेदं सर्वोऽस्मीति मन्यते, सोऽस्य परमो लोकः' इति श्रुतम् । ब्रह्मणः सर्वात्मकत्वाद् ब्रह्मभावापन्नस्य 'अहमेवेदं सर्वम्' इति बुद्धिः स्वाभाविकी ।

सप्तमेऽपि—

ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।
यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥ इति ।

अत्र एकज्ञानेन सर्वज्ञानमुपक्षिप्य तदुपपादनार्थं ब्रह्मणः सर्वोपादानत्वं वदति—'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा' इति । अत्रायं विशेषः—यद् भगवानेव 'मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय' इति वाक्येनोपादानव्यतिरेकेण कार्याभावं स्पष्टमाह । एतदेव प्रपञ्चमिथ्यात्वं वेदान्तप्रतिपाद्यम् । न च परतरमित्यस्योत्कृष्टतरमित्यर्थः कल्पनीयः । कृत्स्नजगदुपादानस्य परतराप्रसक्तेः ।

यत्त्वष्टमे 'प्रणवद्वारा मां सगुणं ब्रह्म स्मरन् यो देहं त्यजति, स उत्तरायणमार्गेण ब्रह्मलोकं गच्छति' इत्युवाच भगवान्, तत् 'एतद्वै परं चापरं च ब्रह्म, यदोङ्कारः । तस्माद् विद्वानेतेनैवायतनेनैकतरमन्वेति' इति प्रश्नोपनिषदुक्तप्रणवोपासनमेव ।

शरीरभेदेन जीवभेदो नास्तीति पूर्वमेवोक्तम् । अत्र गीतैव प्रमाणम् । यतः —

सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥ इत्युक्तम् ।

ज्ञानफलमपि यदुपदिष्टमुपनिषत्सु तदेव गीतास्वप्युपदिश्यते । तथाहि ईशावास्ये–'तत्र को मोहः कः शोक एकत्वमनुपश्यतः' इति ज्ञानिनः शोकमोहाभावं कथयति । गीतास्वपि—

'यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति' ।
'ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति' ॥
'ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन' । इति गीता ।

'तरति शोकं तरति पाप्मानम्' इति मुण्डके । 'छिद्यन्ते सर्वसंशयाः' इति च तत्रैव गीतासु चान्ते 'स्थितोऽस्मि गतसन्देहः' इति ।

अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहातीति काठकोपनिषत् । 'यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति' इति गीता ।

'रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन्' इति गीता । छान्दोग्ये 'आहारशुद्धौ सत्त्वशुद्धिः' इति तदेवाह । अत्रापि आह्रियत इति व्युत्पत्त्या स एवार्थः ।

यथा कृतायविजितायाधरेऽयाः संयन्ति, एवं 'सर्वं तदभिसमेति यत्किञ्च प्रजाः साधु कुर्वन्ति, यस्तद्वेद यत् स वेद' इति च्छान्दोग्ये । 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते' इति 'स युक्तः कृत्स्नकर्मकृत्' इति च गीता । 'ब्रह्मविद् ब्रह्मैव भवति' इत्यादिश्रुतेः ब्रह्मज्ञानिनो ब्रह्मभावः फलमुच्यते । गीतासु च—'स योगी ब्रह्मनिर्वाणं ब्रह्मभूतेऽधिगच्छति' इति ।

श्रुतौ 'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' इत्यादिना ब्रह्मज्ञानवतः सर्वज्ञत्वमुच्यते । गीतासु च—

ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।
यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥ इति ।

'तत्त्वमसि' इत्युपनिषत् । 'क्षेत्रज्ञं चापि मां विद्धि' इति गीता । 'नेह नानास्ति किञ्चन' इति श्रुतिः । 'मत्स्थानि सर्वभूतानि', 'न च मत्स्थानि भूतानि' इति गीता ब्रह्मणि श्रीकृष्णे प्रपञ्चाभावमाह ।

'सर्वभूतेषु येनैकं भावमव्ययमीक्षते' इति गीता । 'एको देवः सर्वभूतेषु गूढः' इति श्रुतिः ।

आत्मनि कर्तृत्वं मिथ्येति भगवता बहुवारमुच्यते । 'नायं हन्ति न हन्यते', 'हत्वापि स इमान् लोकान् न हन्ति' इति गीता कर्तृत्वाभावमेव वदति, हननस्योपलक्षणत्वात् । काठके च 'नायं हन्ति न हन्यते' इति ।

संसारस्य अश्वत्थवृक्षतया निरूपणं गीतासु पञ्चदशे, काठकोपनिषद्यन्तिमखण्डे च एकरूपम्। तत्रासङ्गशस्त्रेण च्छेदनमुच्यते गीतासु। उपनिषदि च तं स्वाच्छरीरात्प्रवृहेदिति पृथक्करणम् असङ्गरूपमेव प्रतिपादितम्। तच्च तत्राहङ्कारममकारवर्जनमिति।

'सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः' इत्यादिश्लोकेनायमेवार्थः सूच्यते।

न केवलमात्मस्वरूपविषये ज्ञानसाधनविषयेऽपि भगवानुपनिषदर्थमेवाह। देवासुरसंपद्विभागो गीतासप्तदशे बृहदारण्यके च तदेव बोध्यते, द्वयाः प्राजापत्या देवाश्चासुराश्चेत्यादिना।

तथा बृहदारण्यके प्रजापतेर्देवमनुष्यासुरेभ्य उपदेशः—'दाम्यत दत्त दयध्वम्' इति। अत्रापि—

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः।
कामः क्रोधस्तथा लोभः…………॥ इति सप्तदशे।

एवमालोच्यमाने 'तस्माच्छास्त्रं प्रमाणं ते' इति वदन् भगवान् स्वयमपि श्रुतिरूपं शास्त्रमेवानुसरतीति शम्।



# शैवागमीयं पदार्थत्रयम्

**आचार्यश्रीरामप्रसादत्रिपाठी**
**व्याकरण-योगतन्त्रागमविभागाध्यक्षचरः,**
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी

❀❀❀

निगमागमशब्दौ प्रचुरं प्रचारमनुभवन्तौ स्तो भारतीये वाङ्मये। तत्र वैदिकं वाङ्मयं शक्त्याऽनुभवति निगमशब्दः, नितरां गम्यते सप्रमाणं निश्चीयत आत्मतत्त्वं येनासौ निगम इति शाब्दिकव्युत्पत्तिरपि तत्रार्थे संवदते। तान्त्रिके वाङ्मये चागमशब्दस्य शक्तिः पादं प्रसारयन्ती अनुभूयते। किन्त्वियं स्थितिर्नात्यन्तं नैयत्यं भजते, आचार्यश्रीभर्तृहरिप्रभृतिभिरागमशब्दस्य वेदाभिधानेऽपि व्यवहृतत्वात्[1]। गच्छता कालेन शैवरौद्रभैरवागमेषु वैष्णवाद्यागमेष्वपि प्रयुज्यमानोऽयमागमशब्दस्तन्त्रशब्देन सह समानार्थकतामपि भजमानः परिलक्ष्यते।

अस्यां स्थितौ, आगमस्य निगमापेक्षया किमप्यनितरसाधारणं वैलक्षण्यं वचनीयमस्ति। यतो हि मल-मायादिकर्मबन्धस्याशेषतो निवृत्तये शिवतत्त्वस्य चाभिव्यक्तये शिवाज्ज्ञानं प्रवर्तत इत्युक्तिमनुसरता—

ज्ञानमेतत् शिवक्ष्मोत्थं संगृहाणात्मभेषजम्।
परिणामसुखं स्वादु विशेषगुणदर्शकम्[2]॥
व्याधीनां भेषजं यद्वत् प्रतिपक्षः स्वभावतः।
तद्वत्संसारदोषाणां प्रतिपक्षः शिवः स्मृतः[3]॥
शिवज्ञानामृतं पीत्वा विचरस्व यथासुखम्[4]।

इत्यादिप्रामाणिकवचनामृतं च पौनःपुन्येन संस्मरता सप्रयोजने शैवागमे पतिः पशुः पाश इति पदार्थत्रयम् उद्दिश्य तावदागमानुगुणं किञ्चिद् विचार्यते।

मृगेन्द्रागमवचनमनुसरता तत्त्वप्रकाशकारेण श्रीभोजदेवेन शैवागमे यदुक्तम्, तत् पदार्थत्रयमेवानुमोदितम्। तत्र पतिः शिवः उक्तः, पशवो ह्यणवोऽर्थपञ्चकं पाशः, इति चोपापादि।

---

१. वा० प०—१।१३२;  २. पराख्यं सूत्रम्;  ३. द्र०—शिवधर्मोत्तरम्।
४. द्र०—ज्ञानधर्मोत्तरम्।

**पतिः शिवः—**

विश्वसारोत्तरसूत्रे—

अचेतनस्य मायादेः प्रवर्तकतया पतिः।
सिद्धः सर्वार्थकृत् कर्ता व्यापकः सततोदितः॥

इत्येवं पत्युः स्वरूपं स्फुटं निरूपितमस्ति। 'सृष्टिरूपकार्यस्य कर्तृत्वं पत्युरेव, न तु पशोर्नापि पाशस्य' इत्यपि निरूपितं वायवीयवचने। पौष्करवचनानुसारेण समस्त-प्रपञ्चस्याचेतनस्य चेतनप्रेरणायैव तत्र तत्र प्रवृत्तिर्निवृत्तिश्च भवत इति ज्ञायते। किरणसूत्रानुसारेण तस्य सर्वज्ञत्वमनादित्वं मलरहितत्वं शिवत्वं च प्रत्याख्यते। स शिवाभिधः पतिर्ज्ञानशक्त्या सर्वं विजानाति, अथ च क्रियाशक्त्या जगद् रचयतीति रत्नत्रये द्रष्टव्यम्।

**शिवस्य जगत्कर्तृत्वम्—**

शिवस्य जगत्कर्तृत्वे निर्णीतेऽयं प्रश्न उदेति यच्छरीरं धृत्वा प्रपञ्चं निर्माति, आहोस्वित् शरीरमकृत्वैव ? अत्रोच्यते—यद्यपि 'शाक्तं शरीरं भगवतः साकारता च' सर्वदर्शनसंग्रहे शैवमतप्रतिपादनावसरे समर्थिता, 'शुद्धयोनिमयं तस्य वपुरुक्तमकल्मषम्' इति किरणायामपि, तथापि पत्युः शरीरपक्षे तस्य शुद्धस्य भौतिकशरीरसम्बन्धो नोचितः प्रतिभाति; किन्तु बैन्दवमेव शरीरं कथनीयम्। बिन्दुस्तस्योपादानतयाऽभ्युपगन्तव्यः। तच्च नात्र सम्भवति। तथा हि बिन्दौ क्षोभे सत्येवोपादानता वक्तव्या। स च क्षोभः स्वतो वा शिवतो वा ? तत्र प्रथमः पक्षो न सम्भवति, आत्माश्रयदोषप्रसङ्गात्। नापि द्वितीयः, तत्क्षोभक्रियायां शिवस्यास्ति शरीरम्, तस्य शरीरस्य साधकबिन्दुक्षोभार्थं पुनः शरीरान्तरकल्पनायामनवस्थाप्रसक्तेः। यदि तत्राचलमूर्तिमात्रकृत एव क्षोभः, तर्हि सृष्टिक्रियासु तस्य शरीरान्तरकल्पना वृथैव।

तस्माच्छिवस्य कारणत्रितयराहित्येन कृतशरीराभावेऽपि स्वशरीरस्पन्दादौ आत्मनः कर्तृत्ववत् सृष्ट्यादिक्रियासु कर्तृत्वं सुतरामुपपद्यते।

पौष्करे इदमेव समर्थितमस्ति—'अदेहस्यापि कर्तृत्वं स्वदेहप्रेरणे यथा' इति।

**पत्युः कर्तृत्वं सकरणकम्—**

प्रपञ्चस्योत्पत्तिस्थित्यादिरूपा पत्युः क्रिया किञ्चित् करणमपेक्षते, क्रियात्वात्, छिदादिक्रियावत्। अतस्तदपेक्षायाम्—

यथा कालो ह्यमूर्तोऽपि दृश्यते फलसाधकः।
एवं शिवो ह्यमूर्तोऽपि कुरुते कार्यमिच्छया॥

इति किरणसूत्रानुसारेण तस्य कर्तृत्वे इच्छाशक्तिरेव करणमिति निश्चेतुं शक्यते। न चेदिन्द्रियादिकरणाभावे तस्य कर्तृत्वं न सिध्यतीति वक्तव्यम्, अक्षरहितस्याप्ययस्कान्तमणेर्यथा लोहाकर्षणे कर्तृत्वं दृश्यते, तद्वदत्रापि ज्ञायताम्। मृगेन्द्रतन्त्रे विद्यापादे सर्वमेतत्स्पष्टं प्रतिपादितमस्ति।

**विवर्तविपरिणामवादौ—**

विषमसत्ताककार्यापत्तिर्विवर्तः, समसत्ताककार्यापत्तिः परिणामः, इत्येवंरूपे विवर्तपरिणामयोर्लक्षणे प्रसिद्धे तदेतदुभयमपि भगवति देहपरिग्रह उपपद्यते—

विवर्तेऽप्यतथारूपस्तथा भासि त्वमच्युत।
परिणामे स एव त्वं सुवर्णमिव कुण्डले॥ इति।

संवित्प्रकाशवचनमुक्तं विषयं सुष्ठु समर्थयते। एवं च यद्यपि विवर्तपरिणामयोर्न कश्चिद् भेद आयाति, तथापि श्रीमताऽभिनवगुप्तेनेश्वरप्रत्यभिज्ञायामनयोः प्रत्याख्यानं विधाय स्वातन्त्र्यवादसंमतः प्रतिबिम्बवादः सिद्धान्तितः। सिद्धान्तशैवमतानुयायिना श्रीकण्ठाचार्येण रत्नत्रये विवर्तवादखण्डनपुरस्सरं परिणामवादः समादृत इत्यन्यत्।

**भगवतः शिवस्य पञ्चमन्त्रतनुत्वम्, पञ्चकृत्यकारित्वं च—**

भगवतः शिवस्य पञ्चमन्त्रतनुत्वं प्रतिपादितमस्ति—

तद्वपुः पञ्चभिर्मन्त्रैः पञ्चकृत्योपयोगिभिः।
ईशतत्पुरुषाघोरवामाजैर्मस्तकादिकम्॥ इत्यादिना।

पुनश्च—

जगज्जन्मस्थितिध्वंसतिरोभावविमुक्तयः।
कृत्यं सकारकफलं ज्ञेयमस्यैतदेव हि॥

इत्यनेन जगदुत्पत्तिस्थितिप्रभृतिपञ्चकृत्यकर्तृत्वमपि भगवति **शिवे निरूपितमस्ति**।

**भगवतः शिवस्य प्रपञ्चकारणताविचारः—**

शैवागमे भगवतः शिवस्य निमित्तकारणत्वमेवाभ्युपेयत इति पराख्यसूत्रेण ज्ञायते। यथा घटादिकार्ये कुलालस्य निमित्तकारणता दण्डचक्रादीनां सहकारिकारणता मृदादीनामुपादानत्वम्, तद्वदत्रापि कारणत्रितयेन पृथग्भूतेन भवितव्यम्। अत्रोच्यते—शिवो निमित्तकारणम्, शक्तयः सहकारिकारणम्, बिन्दुरुपादानकारणमिति स्पष्टीकृतमस्ति पौष्करे, पराख्यसूत्रे च।

एतावता लूतातन्तुन्यायेन वेदान्तसम्मतमभिन्ननिमित्तोपादानत्वं पराकृतं वेदि-

तव्यम्; तथापि मुखनिःसृताया लालाया एवोपादानत्वम्, चेतनतत्त्वस्य तु निमित्तत्व-मिति पृथगेव व्यवस्था ।

ननु मायाकर्मादीनामेव प्रपञ्चनिमित्तत्वमस्तु, न तु शिवस्येति चेत्, उच्यते—चेतनप्रेरणां विनाऽचेतनानां कार्यकरणानुपपत्त्या तत्प्रेरकचेतनस्यावश्यकत्वे सति, अस्मदादीनां जीवानां सर्वज्ञत्वाभावेन तत्प्रेरकत्वासम्भवे सर्वज्ञस्य सर्वकर्तुः शिवस्यैव तत्सम्भवेन समस्तप्रपञ्चे तस्यैव निमित्तकारणत्वौचित्यान्मायादीनां तन्निरासो वेदितव्यः ।

**त्रिविधः पतिः—**

शक्तोद्युक्तप्रवृत्तभेदेन पतिः शिवस्त्रिविध उच्यते । तथा चोक्तं मृगेन्द्रसूत्रे—

शक्तोद्युक्तप्रवृत्तश्च कर्ता त्रिविध उच्यते ।
शक्तेः प्रवृत्तिभेदेन भेदस्तस्योपचारतः ॥

अत्र यच्छक्तत्वं कार्यं प्रति योग्यत्वम्, असौ निष्कलावस्था, तद्वान् शान्त इति कथ्यते । यच्चोद्युक्तत्वम्, सकलनिष्कलावस्था, तद्वान् सदाशिव इति प्रोच्यते, प्रवृत्त-क्रियत्वं च स्थूलतया तावद् ईश्वर इति । यथा ह्यात्मा शरीरसम्बन्धात् सकलः, प्रलया-वस्थायां निष्कलः, मुक्त्यवस्थायां चेत्पर इत्युच्यते, एवमेव शिवोऽपि सकलनिष्कलादि-शब्दैर्भिन्न इत्युद्गीयते[1] ।

**पशुः ( जीवः )—**

पराख्यसंहितायां पशुस्वरूपं वर्णितमस्ति—

देहान्योऽनश्वरो व्यापी विभिन्नः समलोऽजडः ।
स्वकर्मफलभुक् कर्ता किञ्चिज्ज्ञः सेश्वरः पशुः ॥

अत्र देहान्य इत्यनेन चार्वाकमतनिरासः, अनश्वर इत्यनेन क्षणभङ्गवादनिरासः, व्यापी इत्यनेन जैनपक्षनिरासः, विभिन्न इत्यनेन एकजीववादनिरासः, मलशब्दो ज्ञाना-वरकं कर्मभिन्नमज्ञानं बोधयति, तद्वान् जीवः समलः । अजड इति ज्ञानक्रियास्वभावः, स्वकर्मफलभुगिति स्वकर्मधर्माधर्मात्मकं तस्य फलं भुङ्क्त इति, किञ्चिदल्पं जानातीति किञ्चिज्ज्ञः, सेश्वर इत्यनेत जीवे ईश्वरस्य प्रेरकत्वं लभ्यते । एतावता सांख्यमत-निरासः ।

---

१. द्रष्टव्यम्—पौष्करे, विद्यापादे मतङ्गे, तन्त्रालोके ( ८।३७९ ) ।

मृगेन्द्रे जीवस्याणुत्वं दृक्क्रियारूपचैतन्यस्वरूपत्वं प्रोक्तमस्ति[1]। मलावृतं तच्चैतन्यं न प्रकाशते। अतश्च 'अणवश्चिदचिद्रूपाः' इति 'शिवात्मकाः प्रमातारः' इति च नरेश्वरविवेके द्रष्टव्यम्। जीवस्य पाश्यत्वम् ( पाशान्वितत्वम् ) इति निरूपितं तन्त्र-सद्भावे। जीवस्त्रिपुरान्तकः शिव इति च हंसभेदे निरूपितमस्ति।

**पशोस्त्रैविध्यम्—**

विज्ञानाकल-प्रलयाकल-सकलभेदेन पशुस्त्रिविधः कीर्त्यते[2]। तत्र भोगादिना कर्मक्षये सति कलादिभोगसम्बन्धाभावात् केवलमलमात्रयुक्तो विज्ञानाकल इत्युच्यते। प्रलयेन कलादेरुपसंहाराद् मलकर्मयुक्तः प्रलयाकलः। मलमायाकर्मात्मकबन्धत्रययुक्तः सकल इति व्यवह्रियते।

तत्र प्रथमस्य द्वैविध्यम्—समाप्तकलुषासमाप्तकलुषभेदात्। एवमेव द्वितीयोऽपि द्विविधः—पक्वपाशद्वयस्तद्विलक्षणश्च। तृतीयोऽपि द्विप्रकारः—पक्वकलुषापक्वकलुष-भेदात्। तत्र परमेश्वर एषां कर्मानुगुणां कीदृशीं गतिं विदधाति, एतत् सर्वं तत्र तत्रागम-ग्रन्थेषु निरूपितमस्ति।

**पशोरवस्थात्रयम्—**

स्वायम्भुवागमे—

अथात्माऽविमलो बद्धः पुनर्मुक्तश्च दीक्षया।
विज्ञेयः स त्रिधावस्थः केवलः सकलोऽमलः॥

इत्येवं पशोः तिस्रोऽवस्था निरूपिताः सन्ति। अत्रात्मशब्दो जीवपरः, स चात्मा केवलः सकलः, अमल इति चावस्थात्रितयसहितो वर्तते। तत्र प्रथमो विमलो न भवति, इत्यविमलः, अत्यन्तमलिनः, केवलावस्थ इत्यर्थः। बद्धः कर्मानुरक्तः कलादिबन्धनेन बद्धः सकलावस्थः। पुनश्च दीक्षया कलादिबन्धान्मुक्तः, अमलावस्थः शुद्ध इत्युच्यते।

**केवलावस्थः—**

अमूर्तः स पशुर्नित्यो निर्गुणो निष्क्रियोऽप्रभुः।
मायोदरगतो व्यापी भोगोपायेष्वशक्तितः॥
स केवलस्त्वित्ति प्रोक्तः स्वापवान् मलबन्धनात्।

इति सुप्रभेदागमानुसारेण केवलावस्थो जीवो व्यापकः सन्नपि मायोदरे स्थितो भोगोपायेष्वशक्तः प्रोच्यते, स च भोगैकरसिकः कर्मवशतो भुवनजदेहेषु सर्वेषु पर्यटति[3]।

---

१. मृगेन्द्रे विद्यापादे ( २।५–६ ); २. तत्त्वप्रकाशः—( श्लो० ८–१६ ); ३. तत्त्वसंग्रहः—( श्लोक २५ )।

'कलानां निलयो यस्मात् तेनासौ केवलः स्मृतः' इति सर्वज्ञानोत्तरानुसारेण जीवस्य कलाराहित्याच्चेतनोऽप्यचेतन इव भाति ।

**सकलावस्थः—**

संसारी विषयी भोक्ता क्षेत्री क्षेत्रज्ञ एव च ।
शरीरी चेति बन्धात्मा सकलः प्रोच्यते बुधैः ॥

इति सकलावस्थस्य लक्षणं वर्णितमस्ति ।

केवलापेक्षयाऽस्य वैशिष्ट्यं वर्तते—सकलावस्थोऽयं जीवो बद्धोऽहमिति ज्ञात्वा बन्धविमुक्तये प्रयतते ।

**अमलावस्थः—**

बन्धविमोकाय प्रयतमानं जीवात्मानं परमेशः शिवोऽनुगृह्णाति[1] । सोऽयमनुग्रह-लक्षणो व्यापारः शक्तिपात इत्युच्यते शास्त्रेषु । शक्तिपातपूतो जीवः शिवसायुज्यं प्राप्नोति । सोऽयममलावस्थो जीवो मुक्त इत्युच्यते । जीवन्मुक्तस्य लक्षणमपि—

अशरीरं यदात्मानं पश्यति ज्ञानचक्षुषा ।
तदा भवति शान्तात्मा सर्वतो विगतस्पृहः ॥ इति ।

**पाशभेदविमर्शः—**

पाशानां पञ्चविधत्वमेकत्र[2] चतुर्विधत्वं चापरत्र[3] तत्त्वप्रकाशकारेण प्रोक्तम् । शतरत्नसंग्रहादिषु च पाशाः पञ्चविधा वर्णिताः सन्ति । मृगेन्द्रानुसारेण तु पाशाश्चत्वार एव संकीर्तिताः सन्ति; परन्त्वधिकं प्रविष्टं न तु तद्धानिकरमिति न्यायेन पाशपञ्चकस्य चर्चा विधीयते । तेषां नामानि—मलः, तिरोधानशक्तिः, महामाया, माया, कर्म चेति ।

**मलाभिधानः पाशः—**

मलिनीकरोति दृक्क्रियात्मकं तेज आच्छादयतीति मलः । अयमनादिकालात् प्रवृत्तो मल एव पुरुषाणां पशुत्वमापादयति । यथा ताम्रस्य कालिमा रसशक्त्या निवृत्तो भवति, तथाऽनादिर्मलः शिवशक्त्या निवारितो भवति ।

मलोऽज्ञानं तमोऽज्ञत्वं तिरस्कारकरस्तथा ।
पतिः पशुरविद्येति मलपर्यायवाचकाः ॥

इत्येवं तस्य पर्यायाः सुप्रभेदे निरूपिताः सन्ति ।

---

१. मृगेन्द्रागमः—(वि० पा० ५।१); २. तत्त्वप्रकाशः—(श्लो० ५); ३. तत्त्वप्रकाशः—(श्लो० १६) ।

मलस्य कर्मवद् नानादिप्रवाहत्वमपि तु कारणाभावादेवानादित्वं मायावदिति बोध्यम् ।

यद्यपि मल एक एव, तथाऽपि तस्य शक्तयो विभिन्ना एवेति नैकमुक्तौ सर्वेषां मुक्तिप्रसङ्गः[1] । पुनश्च तत्रैव—

एको ह्यनेकशक्तिर्दृक्क्रिययोश्छादको मलः पुंसाम् ।
तुषतण्डुलवज्ज्ञेयस्ताम्राश्रितकालिमावद् वा[2] ।

मलश्चिच्छादक इति च किरणागमे प्रोच्यते ।

ननु मलस्य सत्त्वे किं प्रमाणमिति चेत्, उच्यते—मोहादिरूपकार्येण लिङ्गेन शेषवदनुमानं मन्तव्यम् । मोहादीनि मलकार्याणि सप्तविधानि सन्ति—

मोहो मदश्च रागश्च विषादः शोष एव च ।
वैचित्त्यं चैव हर्षाख्यः सप्तैते सहजा मलाः[3] ॥

मलस्य द्वैविध्यमुक्तम्—

बौद्धं च पौरुषेयं च द्विविधं तन्मलं स्मृतम् ।
तत्र दीक्षादिना याति पौरुषेयं मलं क्षयम्[4] ॥
बौद्धाज्ञाननिवृत्तौ तु विकल्पोन्मूलनाद्ध्रुवम् ।
तदैव मोक्ष इत्युक्तं धात्रा श्रीमन्निशाटने[5] ॥

एवं स्थितौ दीक्षादिना पौरुषेयस्य मलस्य क्षयो भवति, समस्तविकल्पोन्मूलनेन बौद्धो मलः क्षयं याति, इति सिद्धम् ।

मलोऽज्ञानमविद्यादयः शब्दा यद्यपि पर्यायतया सन्ति प्रयुक्ताः, तथापि तत्तद्दार्शनिकनिकायेषु वर्तते तेषां विशिष्टं वैलक्षण्यम् । शैवागमेषु प्रयुक्तो मलशब्द आणवं मलं लक्षयति । अयं च प्रथमः पाशः ।

**तिरोधानशक्तिनामा द्वितीयः पाशः—**

मलस्य शक्तयः परमेशशक्त्यधीना एव प्रसरन्ति, न तु स्वातन्त्र्येण । मृगेन्द्रतन्त्रे विद्यापादे सूत्रद्वयेनास्याः शक्तेर्वर्णनं कृतमस्ति । माहेश्वरी शक्तिस्तासां सर्वासां मलशक्तीनां धर्मानुवर्तनाद् दृक्क्रियात्मकसंविरोधकत्वरूपस्य धर्मस्यानुगमनेनैव पाशत्वेन व्यपदिश्यते, न तु तस्या मुख्यं पाशत्वम्[6] ।

---

१. तत्त्वत्रयनिर्णयः, ( श्लो० ११ ); २. तत्रैव—( श्लो० १८ ); ३. मतङ्गपारमेश्वरे—( वि० ६।१०३ ); ४. तन्त्रसारे—( पृ० २-५ ); ५. तन्त्रालोके—( १-५० ) । ६. मृगेन्द्रागमे—( वि० पा० ७।११-१२ ) ।

यतश्च सा सर्वानुग्रहकारिका समस्तजगदनुग्रहस्वभावा शिवा। इयमेव पतिशक्तिर्यावन्मलपरिपाकमचिद्रूपाणि मल-कर्म-मायातत्कार्याण्यनुगृह्णाति, पाशं च तिरोदधातीति कृत्वा सर्वेषामनुग्रहकारित्वात् सर्वानुग्राहिकेति सिद्धम्। तथा चोच्यते—

शिवस्य शक्तिः सर्वेषां सर्वानुग्रहकारिणी।
पाशधर्मनिरोधेन पाशानां पाशहेतुना॥
निवृत्तियोग्यतां तेषां करोतीति यतस्ततः।
पाशधर्मनिरोधाच्च विधत्ते पश्वनुग्रहम्॥

एवं तत्त्वप्रकाशेऽपि पाशानुग्राहित्वमुक्तमस्ति[1]।

**महामायाख्यस्तृतीयः पाशः—**

उपादानमन्तरेण कदाचिदपि कस्यापि कार्यस्य सिद्धिर्न भवतीति शुद्धस्याध्वनो मूलभूतमुपादानकारणं महाविद्या 'वागीश्वरी' इति विश्वरोत्तरसूत्रमनुसृत्योच्यते, पौष्करवचनानुसारेण वागीश्वर्याः परात्वं विद्यात्वं च, मायायास्त्वपरात्वमविद्यात्वं चोक्तमस्ति।

नादकारिकानुसारेण महामायाया नादादीनि बहूनि पर्यायपदानि सन्ति[2]। इत्थं च महामायायाः शुद्धाध्वन उपादानकारणत्वमुक्तम्। मायाया मोहकतया प्रवृद्धपुरुषकार्यकरणरूपशुद्धाध्वकरणत्वासम्भवेन पारिशेष्यान्महामाया सिध्यति।

महामाया शुद्धविद्या वागीश्वरी मातृका चेति नामानि तन्त्रालोके व्यवहृतानि[3]। शुद्धविद्यैव महामायापदाभिधेया इत्यपि उक्तं श्रीमताऽभिनवगुप्तेन[4]। रत्नत्रये तस्या बिन्दु-नादादिशब्दैः संकेतः प्राप्यते। परा-पश्यन्ती-मध्यमा-वैखरी चेति चतस्रो वृत्तयस्तस्या निरूपिताः सन्ति[5]।

**कुण्डलिनी महामाया—**

शतरत्नसंग्रहे महामाया शक्तिः समवायिशक्तेरधोवर्तमाना मायाकर्मानुसारिणी कुण्डलिनी शक्तिः शिवस्य भगवतः परिग्रहशक्तिरित्युच्यते[6]। सेयं कुण्डलिनी सर्पकुटिलाकृत्या नादरूपेण स्वकार्येण प्रतिपुरुषं भेदेनावस्थिता, न तु स्वरूपेणेति सर्वज्ञानोत्तरवृत्तौ द्रष्टव्यम्।

---

१. तत्त्वप्रकाशः—( श्लो॰ २० ); २. नादकारिका–( श्लो॰ १–१० ); ३ तन्त्रालोकः—( ८।३३७-३८ ); ४. ईश्वरप्रत्यभिज्ञाविमर्शिनी–( ३।१।६ ); ५. द्रष्ट॰ शतरत्नसंग्रहे–( पृ॰ ४१-४४ ), रत्नत्रये च–( श्लो॰ ७०-७१ )। ६. शतरत्नसंग्रहे–( पृ॰ ४१-४४ )।

इदमत्र ज्ञेयम्—समवायिशक्त्या क्षुब्धाया महामायाया कुण्डलिन्याः सकाशान्नाद-तत्त्वं प्रथममुत्पन्नं भवति। इदमेव शिवाश्रयत्वेन शिवतत्त्वमप्युच्यते। ततो बिन्दुसंज्ञकं तत्त्वमुत्पन्नं भवति। इदं च तत्त्वं शब्दाधारतया शक्तितत्त्वम्, ततः सादाख्यं तत्त्वम्, ततश्चेश्वरतत्त्वम्, ततश्च विद्याख्यं तत्त्वम्—इत्येवंक्रमेण शुद्धानि पञ्चतत्त्वानि जायन्ते।

केषाञ्चनाचार्याणां मते इदं नादतत्त्वमेव महामायेति पदेनोद्गीयते। तेषां मते चत्वार्येव शुद्धानि तत्त्वानि सन्ति। तथा हि—बिन्द्वाख्यं शिवतत्त्वमेव प्रधानमुपादानम्, अन्यानि चत्वारि तस्य कार्याणि। पौष्करवचनानुसारेण तु नादाख्यं शिवतत्त्वमपि कार्यमेव; किन्तु तत्र चत्वार्येव कार्याणि शक्तितत्त्वान्तर्भावेण शुद्धानि संकीर्तितानि। सर्वज्ञानोत्तरे तु शक्त्यभिधानं बिन्दुतत्त्वमेव परमं कारणमित्युक्तमस्ति।

**तस्या वाग्रूपाश्चतस्रो वृत्तयः—**

महामायाया वैखर्यादयो वाग्रूपाश्चतस्रो वृत्तयः कार्यभूता आगमग्रन्थेषु बहुत्र निरूपिताः सन्ति। विश्वसारोत्तरसूत्रे—

तस्याश्चतस्रो वाग्रूपा वृत्तयो वैखर्यादयः।
वैखरी मध्यमा चान्या पश्यन्ती सूक्ष्मसंज्ञिता॥

इत्येवं चतस्रो वृत्तयः प्रोक्ताः सन्ति। आसु चतुर्थी वृत्तिर्नादः, पश्यन्तीरूपा तृतीया वृत्तिर्बिन्दुः, द्वितीया वृत्तिर्मध्यमा—अक्षरम्, प्रथमा वैखरीवृत्तिर्मातृकेत्युच्यते। अनेन शब्दसृष्टिरपि बिन्दूपादानिकेत्युक्तं भवति।

अयमत्र सृष्टिक्रमः—प्रथमं शिवेच्छया महामायायां क्षोभो भवति, ततो नादोत्पत्तिः, नादाद् बिन्दुः, बिन्दोरक्षरम्, अक्षरान्मातृका चेति। तथा हि—

नादः सूक्ष्मो भवेद् बिन्दुः पश्यन्ती मध्यमाक्षरम्।
मातृका वैखरी ज्ञेया नादाद्यास्तु शिवादयः॥

इत्युक्तं सिद्धान्तरहस्यसारे[1]। आसां वृत्तीनामाश्रयभूता निवृत्त्यादयः पञ्च कला बिन्दोरेव कार्याणि[2]। एषा च महामाया शब्दवस्तूभयात्मिका भवति, शब्दात्मकानां वर्णपद-मन्त्राणां कलातत्त्वभुवनानां वस्तुरूपाणां चोत्पत्तिकारणात्।

महामायाया वाग्रूपत्वस्य महिमा तत्र तत्र ग्रन्थेषु प्राचुर्येण वर्णितोऽस्ति। तथा हि—

---

१. शतरत्नधृते सि० र० सा०-( पृ० ५३ );　　२. रत्नत्रये-( श्लो० ५५ )।

संविन्मूलाद् वर्णरूपाज्ज्ञानस्तम्भात् सरस्वती।
प्रागघोषा सनादाऽनु पुण्यतीर्था प्रवर्तते[1]॥
घोषिणी जातनिर्घोषा नित्यमेव प्रवर्तते।
तयोरपि च घोषिण्या निर्घोषैव गरीयसी॥
गौरिव प्रसवत्यर्थान् इयमुत्तमशालिनी।
सततं स्पन्दते ह्येषा शाश्वतं ब्रह्मवादिनो[2]॥
अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥

इत्यनेन वाक्यपदीयब्रह्मकाण्डीयप्रथमश्लोकेनापि वाक्तत्त्वस्य ब्रह्मात्मकतां प्रतिपादयता तदीयमहत्त्वप्रख्यापनेऽग्रतः पादो निधीयते।

अत्र वाक्तत्त्वस्योत्पत्तिविनाशरहितत्वं व्यापकत्वं सच्चिदानन्दात्मकब्रह्मरूपत्वम्, जगतो मूलभूतस्य वेदस्य प्राथमिकविवर्त्युपादानत्वम्, तदन्वाकाशादिप्रपञ्चजातस्य च विवर्त्युपादानत्वं साधु प्रतिपादितमस्ति।

पद्येऽस्मिन्नुत्तरार्द्धेऽर्थतः पौनरुक्त्यपरिहाराय जगत्पदस्य जगतो मूलभूते वेदे लक्षणा कृता। प्रक्रियापदे प्रपदेन प्राथम्यस्य बोधः, क्रियापदेन च विवर्तस्य बोधः। अतो जगतो मूलभूतस्य वेदस्य प्रथमो विवर्तः शब्दब्रह्मणः सकाशात् समपद्यत। उक्तञ्च—'यो वै ब्रह्माणं विदधाति पूर्वम्, यो वै वेदाँश्च प्रहिणोति तस्मै'। अत्र ब्रह्मण उत्पत्तिर्वर्णिता भगवतः सकाशाद्, वेदानां ब्रह्मणे सृष्टिकर्त्रे प्रेषणमुक्तम्। एतावता वेदानामपौरुषेयत्वं सूचितम्। द्रष्टव्यं विस्तरेणैतद् व्याख्यानं वाक्यपदीयटीकायामम्बाकर्त्र्यामस्मद्गुरुवरैः श्रीपाण्डेयमहामानसैः विरचितायाम्। शाब्दिकनयेऽपि पराख्यशब्दब्रह्मणो विवर्त्युपादानत्वस्वीकारेण न काचन सिद्धान्तहानिरित्यपि बोध्यम्?

**मायाख्यश्चतुर्थः पाशः—**

मायातत्त्वं जगद्बीजमविनाश्यशिवात्मकम्।
विश्वेकमकलं सूक्ष्ममनाद्यव्ययमीश्वरम्॥

इत्येवंरूपं मायालक्षणमुक्तं शतरत्नसंग्रहे स्वायम्भुवसूत्रे। प्रलये सर्वं जगदस्यां माति-इति माया, अथवा सर्वं जगद् यतो मयति[3] सा माया, इति व्युत्पत्तिद्वयेन द्विविधो मायापदार्थो लक्ष्यते।

---

१. संवित्प्रकाशवचनम्–( पृ० ८७ ); २. महाभारतम्–( आश्व० प०—२१।२२ )।

३. पौष्करवचनमेतत्।

विनाशं न गच्छतीत्यविनाशि = अव्ययमिदं मायातत्त्वम्, सर्वविकाराणामुपादानम्। ननु जगदुत्पत्तौ परमाण्वादिवदुपादानकारणबाहुल्यमभ्युपगम्यताम्, बहुभ्यस्तन्तुभ्य एकस्य पटस्योत्पत्तिदर्शनात्, किं मायाख्यस्यैकस्य परमकारणस्य कल्पनया ? इति चेत्, सत्यम्, अनेकतन्त्वात्मकं यत्कारणं पटस्योक्तम्, तदपि एकस्मादेव कार्पासद्रव्यादवगम्यताम्। एवं परमकारणादेकस्मादेव मायातत्त्वात् सर्गस्थितिप्रलयहेतुभूतात् सर्गादौ जगदुत्पत्तिरितीश्वरवत् पुरुषार्थसाधकत्वादीश्वरत्वमपि मायातत्त्वस्य सुसम्पन्नम्।

जगत उत्पत्तिक्रमोऽत्रेदृशः—मायातत्त्वात् प्रथमतः कलानियतिनाम्नोस्तत्त्वयोरुत्पत्तिः, कलातत्त्वात्तु विद्यारागतत्त्वयोः प्रधानतत्त्वस्य चेति त्रयाणामुत्पत्तिः, श्रीकण्ठक्षोभितात् प्रधानतत्त्वात् सत्त्वरजस्तमसामभिव्यक्तिः, तेभ्यश्च बुद्धितत्त्वस्य, बुद्धितत्त्वाच्च त्रिविधस्याहङ्कारस्य, तैजसादहङ्काराद् मनसो ज्ञानेन्द्रियाणां च, वैकारिकादहङ्कारात् कर्मेन्द्रियाणाम्, तामसादहङ्कारात् पञ्चतन्मात्राणाम्, ततश्चाकाशादिभूतानामुत्पत्तिः। एवं संक्षेपेण वर्णितो मायाख्यश्चतुर्थः पाशः।

**कर्माभिधः पञ्चमः पाशः—**

धर्माधर्मात्मकं कर्म तच्च त्रिविधमर्थतः।
जात्यायुर्भोगदं येन नामिश्रं पच्यते क्वचित्॥

इति विश्वसारोत्तरसूत्रोक्तं कर्मलक्षणं विमृश्यते। धर्माधर्मात्मकं कर्म जातिप्रदमायुःप्रदं भोगप्रदञ्चेति त्रिविधं भवति। योगसूत्रेऽपि—"सति मूले तद्विपाको जात्यायुर्भोगाः" इत्येवमुक्तमस्ति। अत्र जातिर्देवत्वादिः, आयुः शतवर्षेष्वपि जीवनादिः, भोगः सुखदुःखादेरनुभवः। सेवाकृष्यादिषु युगपत् प्रवृत्तयोः पुरुषयोरेकस्य फलसिद्धिरपरस्य नेत्यत्र धर्माधर्मात्मकं कर्मैव कारणं मन्तव्यम्[1]।

दृष्टमदृष्टं च द्विविधं कर्मेति मृगेन्द्रसूत्रतो ज्ञायते[2]। तत्रादृष्टं कर्म देहेन्द्रियभुवनादीनामुत्पादकं धारकमध्यात्मादित्रितयसाधकं च भवति। तत्रेष्टदेवतानुध्यान-नमस्कार-स्तोत्रपाठ-यजन-हवन-प्रभृतिकर्म धर्मात्मकम्। परधनहरणेच्छा-तत्प्रवादतद्धिंसादिकं कर्म अधर्मात्मकम्।

सिद्धान्तसारावल्यध्ययनेनैतज्ज्ञायते - यत् सत्यानृतयोनित्वात् कर्म धर्माधर्मात्मकं भवति। एतच्च स्वापे परिपाकमाप्नोति, सृष्टिकाले उपयोगमेति। संहारकाले च

१. उभयोः कृषिसाम्येऽपि कश्चिद् धान्यानि गच्छति।
न किञ्चिदपरस्तस्य कर्म कारणकं द्विजाः॥ द्रष्टव्यम्—पौष्करे।

२. मृगेन्द्रसूत्रम्—( ८।३।४ )।

मायामाश्रित्य तिष्ठति। स्वाम्भुवागमे तु—'कर्मतश्च शरीराणि विविधानि शरीरिणाम्' इत्युक्तमस्ति। पौष्करवचनमनुसृत्य निश्चीयते—'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इति। 'दीक्षाप्रायश्चित्तादिना तस्य क्षयो भवतीति परिज्ञायते किरणागमपठनेन। नित्य-नैमित्तिककाम्यकर्मणां वर्णनं प्रायः सर्वत्र शास्त्रेषूपलभ्यते। शान्तिक-पौष्टिकादीनि मारणमोहनादीनि नानाविधानि षट्संख्याकानि कर्माणि तेषां साधकाः प्रयोगाश्च प्रायो बाहुल्येन तन्त्रसार-तन्त्रालोक-नेत्रतन्त्रादिग्रन्थेषु प्राप्यन्ते। तथा हि—

पूजा होमो बलिर्भिक्षा चरुश्चातिथिपूजनम्।
षट् कर्माणि तु कार्याणि शिवाचार्येण नो परैः।

इत्येवं षट् कर्माणि निरूपितानि सन्ति।

महान्ति पातकान्याहुर्यदाज्ञावशतः सुराः।
पावनानि नमस्तस्मै स्वच्छन्दाय हराय ते॥

इति भट्टनायकस्तोत्रानुसरणेन ज्ञायते यत् परमेश्वराज्ञावशीभूतेन जीवेन तत्समर्पण-बुद्ध्या यत्कर्म क्रियते, तदपि पावनमेव मन्तव्यम्। भोगादिना कर्मणां क्षये तन्निर्मुक्तो जीवः परमां शान्तिं लभते। भर्जितं बीजं यथा न प्ररोहति, तथैव विकल्पमुक्तचित्तस्य कर्मापि न जननादिकारणं भवति। मोहमूलान्येव कर्माणि संसृतिकारणानि भवन्ति।

एवं मलादयः पञ्च पाशा निरूपिताः। मृगेन्द्रतन्त्रादिषु महामायामगृहीत्वा पाश-चतुष्कमेव वर्णितमस्ति। स्वायम्भुवागमे तु मल-कर्म-**मायारूपस्त्रिविध एव पाशो** निरूपितः।

एतावता प्रबन्धेन पति-पशु-पाशरूपत्रिविधपदार्थस्येषज्ज्ञानप्रकारः प्रदर्शितः। तत्र शिवाख्यस्य पत्युर्ज्ञानेनैव मुक्तिः सम्भवति, न तु पशु-पाश-ज्ञानेन। परम्परयोपकारकं तज्ज्ञानं बोध्यम्। बहिरन्तश्च सर्वत्र ज्ञानमेव विषयात्मकज्ञेयात्मना प्रकाशते। ज्ञानं विना विषयस्य काऽपि सत्ता नास्ति।

यत्र सर्वे लयं यान्ति दृश्यन्ते तत्त्वसंचयाः।
तां चितिं पश्य कायस्थां कालानलसमत्विषम्॥

इति वीरावलीशास्त्रादिषु वर्णिता चितिरन्यत्रागमग्रन्थेषु संवित्पदेन चर्चिता। सैव संविद्रूपा परा शक्तिः परमेश्वरादभिन्नेति संविदभिन्ने परतत्त्वे भगवति शिवे भारमारोप्य वयं तान्त्रिकाः सुखमास्महे—

न पादपतनं भक्तिर्व्यापिनः परमात्मनः।
भक्तिर्भावस्वभावानां तदेकीभावभावनम्॥

**॥ शान्तिः शान्तिः शान्तिः॥**

●

# श्रीमतामतिरात्रयज्वनां कृतिः

## ( श्रीपदार्थदीपिका श्रीपदार्थव्यवस्था वा )

आचार्यश्रीबटुकनाथशास्त्री खिस्ते,
साहित्यविभागाध्यक्षचरः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी

❀ ❀ ❀

गीर्वाणवाणी परिचरणपरायणानां विदुषां न नामाऽविदितं चतुरधिकशतप्रबन्ध-निर्माणकर्मठानां शिवावतारभूतानां श्रीमदप्पय्यदीक्षितेन्द्राणां महनीयं नामधेयम् । शाङ्करपरम्परायां लब्धोदया दीक्षितेन्द्राः शिवावतारभूता एवाऽभूवन्निति शिवरहस्यादि-वचनप्रामाण्यादामनन्ति विद्वांसः । एतेषामनुजन्मानोऽपि भ्रातुरनुगुणाः सकलविद्या-पारदृश्वानः श्रीमदाच्चान्-दीक्षितनामधेया आसन्निति ज्ञायते । महाकविभिः श्रीनील-कण्ठदीक्षितैर्गङ्गावतरणकाव्ये नलचरितनाटके च कश्चित्परिचयः प्रदत्तः । यथा—

तत्समानप्रभावस्य तदनन्तरजन्मनः ।
आसीदाच्चादीक्षितस्य पुत्रो नारायणाध्वरी ॥

( गङ्गावतरणकाव्यम्—१।४८ )

सूत्रधारः—तत्सोदर्यस्य विद्वत्कवेराच्चादीक्षितस्य महिमा केन वर्ण्यते, तथाऽपि किञ्चिद् वर्णितं गुरुरामकविना—

शब्दब्रह्म जगाहुषी जगृहिषी वैशेषिकं साहुषी
तर्कोन्मर्दमुपेयुषी श्रुतिशिखां भाट्टे पदं दाशुषी ।
सांख्यार्थानधिजग्मुषी विविदुषी साहित्यमर्माऽखिलं
कस्मिन्नस्य न शेमुषी नृपसभे नाऽपूपुषद् वैदुषीम् ॥

( न० च० १।४ )

एतेषामपरमपि 'चारुदीक्षितः' इति नामधेयमासीदिति कलिविडम्बनहस्त-लेखादवसीयते । एतेषां समयः प्रायः १५२३-१५६० ईसवीयाब्दावधिक इति लेखकाः प्रमाणयन्ति । एते च नातिदीर्घायुषः सञ्जाता इत्यनुमीयते । एतेषां द्वौ तनयावभूताम्—ज्येष्ठो नारायणाध्वरी, कनिष्ठश्च अप्पैदीक्षितनामा ।

श्रीनारायणाध्वरिणोऽपि विद्वांसः साहित्यरत्नाकरमहावीरचरितप्रभृतिग्रन्थानां टीकाकारा आसन्। एते विशेषतया श्रीदेव्युपासकाः साधका अभूवन्निति नलचरिते 'जगदम्बिकापुरुषावतार'-पदेन निर्दिष्टा नीलकण्ठकवीन्द्रैः। तेषां विषयेऽन्यत्राऽपि तस्यैव कवेरपरा सूक्तिर्विराजते—

नारायणाध्वरीन्द्राय नमोऽस्तु ज्ञानसिन्धवे।
शारदा यत्कटाक्षाणां साऽप्यवेतनकिङ्करा॥ इति।

नारायणाध्वरीन्द्रस्य कुटुम्बिनी भूमिदेवीति ख्याता। अनयोर्दम्पत्योः पञ्चपुत्राः समजायन्त। ते सर्वेऽपि विद्वांसः शिवभक्ता इत्यग्रिमेण पद्येन ज्ञायते—

जयन्ति तनयास्तस्य पञ्च सौभ्रात्रशालिनः।
गर्भदासा महेशस्य कवयश्च विपश्चितः॥ इति।

( गङ्गावत०-१।४९ )

पुत्राणाञ्च नामानि क्रमेण यथा—आच्चान्, नीलकण्ठः, चिन्नप्पधैया, चन्द्रकलावतंसः, अतिरात्रयाजी चेति। तेषु कनिष्ठः अतिरात्रयाजीति स्पष्टमवगम्यते। अयमपि स्वकुलमर्यादानुरूपं शास्त्रेषु लब्धवैदुष्यो काव्यनाटकादिनिर्माणनिपुणश्च सञ्जात इति ज्ञायते। अस्यैव काचिन्नातिविस्तृता कृतिः श्रीपदार्थदीपिका श्रीपदार्थव्यवस्था वा वाराणस्यामेव समुपलब्धा, तद्विषये परिचयरूपेण किञ्चिदुपपादयितुं क्रियते यत्नः।

श्रीशङ्करभगवत्पादपरम्परायां प्रायः सर्वत्रैव श्रीविद्योपासनाऽपि सुतरामभ्यर्हितत्वेन स्वीक्रियत इति जानन्ति विद्वांसः। अप्पय्यदीक्षितेन्द्राः सविशेषं भगवति महेश्वरे भक्तिभाजः शैवशास्त्रव्याख्यातारश्च समभूवन्नित्यत्र न सन्देहः, परं तेषां श्रीविद्योपास्तिविषये काऽपि कृतिर्नोपलभ्यते, न च तद्विषये ते स्वयमपि सूचयन्तीति मन्ये सुतरां रहस्यत्वाद् अवसराभावाद्वा तैरत्रविषये न लेखनी प्रवर्तितेति। अतिरात्रयज्वनः प्रकृतप्रबन्धोपलब्ध्या तेषामेव सम्प्रदायागता सरणिरियमित्युन्नेतुं शक्यम्। यद्यपि अप्पय्यदीक्षितेन्द्रैरात्मार्पणस्तुतिर्भगवन्तं शिवमुद्दिश्य समुपनिबद्धा। तामेवाऽनुध्यायन् श्रीनीलकण्ठः कविरानन्दसागरस्तवे प्रस्तौति—

त्वय्यर्पितं प्रथममप्पययज्वनैव
स्वात्मार्पणं विदधता स्वकुलं समस्तम्।
का त्वं महेशि कुलदासमुपेक्षितुं मां
को वाऽनुपासितुमहं कुलदेवतां त्वाम्॥

वस्तुतः शिवोपास्तिः शिवशक्त्युभयोपास्तिरूपैवेति शास्त्ररहस्यवेदिनोऽवगच्छन्ति। नीलकण्ठस्य वचनाच्च भगवत्या उपास्तिरप्पयदीक्षितानामपि सर्वथा समभ्यर्हिताऽवर्ततेति मन्यामहे।

किञ्च, आत्मार्पणं नाम पूजावसानकाले किमप्यावश्यकं कृत्यमिति तत्तत्पद्धतिदर्शनान्निश्चीयते, यथा चाऽस्यामेव श्रीपदार्थदीपिकापद्धत्यामन्तिमे भागे पङ्क्तयः— 'तत् स्वकृतकर्मसमर्पणपूर्वकम् आत्मनिवेदनं कुर्यात्—इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतो जाग्रत्-स्वप्न-सुषुप्त्यवस्थासु मनसा वाचा कर्मणा हस्ताभ्यां पद्भ्याम् उदरेण शिश्ना यत् स्मृतं यदुक्तं यत्कृतं तत् सर्वं ब्रह्मार्पणं भवतु स्वाहा मां मदीयञ्च सकलम् अस्मत्स्वामिन्यै श्रीमहात्रिपुरसुन्दर्यै नम इति सम्यगर्पयेत्' (पृ० ८५) इति।

एभिः प्रमाणैरियमप्पयदीक्षितपरम्परानुसारिणी पद्धतिरस्तीति निःसन्देहं शक्यते वक्तुम्।

अप्पय्यदीक्षितेन्द्राणां नीलकण्ठे विशेषतश्च स्नेहो दीक्षितेन्द्रैराशीर्वादप्रदानञ्चेत्यादि वृत्तं प्रसिद्धमेव। नीलकण्ठदीक्षितस्य समय ईसवीयाब्ददृष्ट्या १५७६ कालादारभ्य १६६० पर्यन्तमासीत्। तदनुषङ्गेण अतिरात्रयज्वनोऽपि तत्समान एव काल उन्नीयते।

महाराष्ट्रभाषायां नीलकण्ठकवीन्द्रस्य समग्रं जीवनं तदीयं ग्रन्थनिर्माणाद्यवदानञ्च नागपुरस्थेन प्रो० केशवरामरावजोशीमहाशयेन भूरि परिश्रम्योपनिबद्धम्, तत एव भूयांसः सन्दर्भा उपलभ्यन्ते। तस्मिन्नपि प्रबन्धे अतिरात्रयज्वनस्त्रय एव प्रबन्धा उपलभ्यन्त इत्युक्तम्। ते च यथा—१. कुशकुमुद्वतीयं नाटकम्, २. त्रिपुरविजयचम्पूः, ३. चित्रमीमांसादोषधिक्कारश्चेति। तेनास्य पद्धतिग्रन्थस्य सर्वथा प्राथम्येनोपलब्धिरस्तीति प्रमोदमादध्याद् गवेषकाणाम्।

अतिरात्रयज्वाऽपि पाण्डित्यप्रकर्षमासाद्य सर्वैः सम्मानितोऽभवदिति तदीयोक्त्या प्रतीयते। यथा—

> यन्नारायणदीक्षितेन्द्रतनुभूसाधारणं घुष्यते
> यच्च श्रीयुतनीलकण्ठमखिनः सोदर्यतालक्षणम्।
> विद्वांसस्तदिदं समस्तमधुना श्रीकण्ठदासस्य मे
> लक्ष्यन्तामतिरात्रयाजिन इतः पाण्डित्यमत्यद्भुतम्॥

(त्रिपुरविजयचम्पूः)

अस्य ज्येष्ठे भ्रातरि गुरुबुद्धिर्महानादरश्चेति प्रकृतपद्धतिसन्दर्भैर्निश्चीयते, तदग्रे सप्रमाणमुपदर्शयामः।

कुशकुमुद्वतीयनाटकप्रस्तावनायां श्रीनीलकण्ठकविविषये गौरवमात्मनश्च तच्छिष्यतां सूचयति सोऽयमतिरात्रयज्वा। तथा हि तत्रत्यः सन्दर्भः—

"पारिपार्श्वकः— अथ श्रीहालास्यचैत्रोत्सवयात्रायामार्यमिश्राः समापतन्ति। किं समापतन्ति इति? (परिषदं निर्वर्ण्य) (सानन्दम्) अथवा किमभिमतेति। सर्वस्याऽपि प्रार्थितदुर्लभैवैषा। यतः—

विद्वद्वादविवादकालयुगपद्विस्फूर्त्यहंपूर्विका-
निर्यद्युक्तिसहस्रदर्शितनिजाहीन्द्रावताराकृतिः।
कर्तुं कारयितुं तथा रसयितुं नव्यानि काव्यान्यलं-
भूष्णुर्भाति सभासभाजितमतिः श्रीनीलकण्ठाध्वरी॥

सूत्रधारः—अयं किल भरद्वाजकुलपारावारपारिजातः सकलकलासाम्राज्यसिंहासनाधिपतिस्तत्रभवतो नारायणाध्वरिणरूपः परिपाकः, कर्ता काव्यानां, व्याकर्ता तन्त्राणाम्, आहर्ता क्रतूनां, व्याहर्त्ता सकलनृपसभेषु, दिगन्तविश्रान्तकीर्त्तिरपारमहिमा, मानवाकृतिः साक्षादेव दाक्षायणीवल्लभः, श्रीकण्ठमतसर्वस्ववेदी श्रीनीलकण्ठाध्वरी।

नटी— (उरसि हस्तं निधाय) न चैतं न जानामि। एष खलु द्वितीयशङ्कररूपाणां अप्पयदीक्षितानां............नप्ता नलचरितनाटकप्रबन्द्धा।

सूत्रधारः—अथ किम्। ज्ञातस्तवाभिप्रायः।

स्वादूनेव रसान् कटून् विदधतां कर्षन्तु मामेति च
क्रन्दत्येव पदानि वा कवयतां कुर्वन्तु लज्जां च वा।
कुत्रैको मधुरो रसः क्व मधुरा वाणीति नो जीवतां
कर्णौ निष्करुणं दहन्ति कवयः कस्मादिदानीन्तनाः॥

इत्यतो नलचरितश्लोकाङ्क्षीताऽसि। मा मैवम्।

तच्छिक्षया परिणतं तदतिप्रियञ्च
तत्कर्णधारितमभूदपि यस्य काव्यम्।
तेनेदमद्य निरवद्यरसानुसारि
तेने नवं प्रकरणं तदिह प्रयोज्यम्॥

नटी—कुत्र तन्नाटकम्?

सूत्रधारः—नन्वस्यैव सभानेतुरनुजन्मा विदितवेदितव्यः कविलोकमित्रमतिरात्रयाजी।

नटी—युज्यते, युज्यते। कोऽन्य ईदृशनिरवद्यसरसकविकर्मनिर्माता।

एवमतिरात्रयज्वनो नीलकण्ठविषये महानादरः, तदीयशिक्षागौरवञ्च सम्यगनुभूयते। एवमेव शृङ्गारकोषभाणे नीलकण्ठसुतो गीर्वाणेन्द्रनामा स्वपितुर्गौरवं विद्यासु वैचक्षण्यमाचष्टे। द्वाविमौ गीर्वाणेन्द्र-अतिरात्रयाजिनौ श्रीनीलकण्ठस्य काव्यकलां वैदुषीञ्च सविशेषमनुहरतः।

अतिरात्रयज्वनः किमप्यन्यदपि नाम स्यान्न वा इति न ज्ञायते, सर्वत्रैकेनैव नाम्ना तदुल्लेखो दृश्यते। श्रीपदार्थदीपिकाया आद्यन्तसन्दर्भेणाऽपि कश्चित्परिचयविशेषो निर्णीयते। यथा ग्रन्थावसाने पुष्पिकेयम्—

"इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीकण्ठमतप्रतिष्ठापनाचार्यचतुरधिकशतप्रबन्धनिर्वाहकश्रीमदप्पयदीक्षितसोदर्यश्रीमदाचार्यदीक्षितपौत्रेण श्रीनारायणदीक्षितात्मजेन श्रीनीलकण्ठदीक्षितानुजेन श्रीमदतिरात्रयाजिना विरचिता श्रीपदार्थव्यवस्था समाप्ता" इति।

ग्रन्थारम्भे मङ्गलाचरणादि यथा—

प्रस्विन्नाननपद्ममाकुलकरप्रेङ्खत्क्वणत्कङ्कणं
संरम्भश्लथमौलिमाल्यमसकृद्व्यालोलहारावलि।
वाग्देवीशरदिन्दुसुन्दररुचोर्वादान्मिथः कुर्वती
पश्यन्ती परदेवताऽवतु दरोपक्रान्तमन्दस्मिता॥

अन्तर्लीनविमर्शप्रकाशरूपं समस्तमन्त्रनुतम्।
श्रीगीर्वाणेन्द्रमहं प्रणमामि गुरुं परे व्योम्नि॥

अत्र द्वितीयपद्ये परिवर्णिताः श्रीगीर्वाणेन्द्रसरस्वतीनामधेयाः काञ्चीपीठाधिष्ठिताः शङ्कराचार्यचरणा एव प्रतीयन्ते। एते च श्रीनीलकण्ठकवीन्द्राणामतिरात्रयज्वनाञ्चोपासनायां दीक्षागुरवोऽपि बभूवुरिति कथने नाऽस्ति संशीतिः। नीलकण्ठप्रणीतं गुरुराजस्तवाभिधानमेकं स्तोत्रमप्युपलभ्यते, तत्र क्वचित्काश्चन पङ्क्तयो विलुप्ताः सन्ति। तत्रत्यवर्णनेन गीर्वाणेन्द्राणां माहात्म्यमुच्चैरनुभूयेत। श्रीगीर्वाणेन्द्रसरस्वतीचरणाः प्रपञ्चसारसङ्ग्रहनिर्मातारः प्रसिद्धाः। तच्च नीलकण्ठदीक्षितेन स्फुटमुपश्लोकितं यथा—

तत्त्वज्ञानकलापदाक्षरमनून् शैवान् षडप्यध्वनः
संशोध्यैव चिरन्तनैश्च गुरुभिः केचित् क्वचित्तारिताः ।
एकेनैव तु सारसंग्रहकृतिव्यक्तेन मन्त्राध्वना
गीर्वाणेन्द्रगुरुर्विशृङ्खलमवत्याप्रौढमूढं जगत् ॥

अन्यत्राऽपि गुरुविषये तदुक्तयो भक्तिनिर्भरा अनुभूयन्ते । यथा—

सर्वारम्भपराङ्मुखस्य जरया भग्नस्य रुग्णस्य मे ।
गीर्वाणेन्द्रसरस्वतीचरणयोश्चिन्ता परं तारिका ॥ इति ।

उद्भूतस्मितमुत्प्रबन्धकरुणाकल्लोललोलेक्षणं
त्रय्यन्तामृतवर्षिधर्षितपराहङ्कारशङ्कारवम् ।
एकं तद्वदनाम्बुजं कुलगुरोर्भक्त्या निदिध्यासतः
पञ्चाहो परितः स्फुरन्ति युगपद्वक्त्राणि चित्राणि मे ॥

एवमादिभिर्भावार्द्रैः पदैः स्तुवन् नीलकण्ठकविर्गुरोर्माहात्म्यमभिव्यनक्ति । अतिरात्रयज्वाऽपि मङ्गलाचरणे तमेव गुरुं भजत इति द्वयोरपि सहोदरयोः श्रीगीर्वाणेन्द्रा एव दीक्षागुरवोऽपि भवेयुरिति कल्पना नाऽसङ्गता स्यात् । स्तुतिपद्ये प्रकाशविमर्शात्मकशैवशास्त्रीयमूलसत्त्वरूपेण गुरुप्रणतिः प्रसङ्गौचित्यमनुबन्धाति ।

काञ्चीपीठपरम्पराया ऐतिह्ये श्रीगीर्वाणेन्द्रचरणानां विशदं वृत्तं सङ्गृहीतं भवेदिति सम्भावयामि । नीलकण्ठादीनां महाविदुषामुक्तिभिरेव तादृशस्य महात्मनो गुरोः स्वरूपं किञ्चिल्लक्ष्यते । मङ्गलाचरणानन्तरमत्रप्रबन्धे किमप्युपोद्घातरूपेण लिखितमतिरात्रयाजिना । तत्र शिवानन्दलहर्यां यदप्पयदीक्षितेन्द्रचरणैः परतत्त्वविषये निरूपितम्, तदेवाऽत्र ग्राह्यमित्युक्तम् । अग्रे चोपासनाविषय उपक्रमोपसंहारादिविचाराणां बहुत्वाद् दुरवगाहत्वाच्च श्रीनीलकण्ठप्रणीतग्रन्थानुसारेणैव पद्धतिरियं निबद्धेत्युक्तम् । तथा च तत्रत्या पङ्क्तिः—सकलतन्त्रोपसंहारक्षमसर्वतन्त्रस्वतन्त्रश्रीमूलदेवताऽपरविग्रहश्रीनीलकण्ठदीक्षितैरस्मज्ज्येष्ठचरणै शिष्यानुग्रहाय कृतं बहुमीमांसान्यायदुरवगाहं **सौभाग्यचन्द्रातप**मनुसृत्य व्यवस्था प्रदर्श्यत इति । अयं सौभाग्यचन्द्रातपग्रन्थोऽप्यत्रैव प्रथमतया समुल्लिखितो दृश्यते, नीलकण्ठकृतिषु कुत्रापि तच्चरितलेखकैर्न निर्दिष्टः । अत्रैवोपोद्घाते शैवतन्त्राणां प्रामाण्येऽपि शक्तितन्त्राणां क्वचिद्वामाचारप्राधान्ये कथं प्रामाण्यमित्यादिपूर्वपक्षमुपक्षिप्य वेदाऽविरुद्धांशे चिच्छक्त्युपासनायाश्च प्रत्यक्षश्रुतिनिर्देशात् प्रामाण्यमेवेत्यादि व्यवस्थापितम् । उपोद्घातानन्तरं पद्धतिक्रमेण ब्राह्ममुहूर्तोत्थानादिसाधकचर्या प्रदर्शिता । स्थले स्थले कर्मणां संक्षेपविस्तरविषये अङ्गाङ्गिभावादौ च विचारोऽपि समाहितः । यथा—

"हृदि सामान्यसमयी चिन्तयेत् परमेश्वरम् ।
विशेषसमयी बिन्दौ मूर्ध्नि निर्वाणदीक्षितः ॥

इत्यस्मत्पितामहचरणोक्तरीत्या यथाधिकारं हृदयादिषु देवीं ध्यायेत्" इति ।

"अजपाविधानं प्रातरेव कर्तव्यमिति नियमाभावाद् अग्रे वक्ष्यते" इति ।

"सकलश्रौतस्मार्तसंस्कारकर्मसु प्रधानकर्मानुष्ठानसमये मूलविद्या स्मर्तव्येत्याचाराह्निकयोश्च वैदिकतान्त्रिकयोः समुच्चयस्तत्रापि वैदिक-( मादौ ) तान्त्रिकस्य तु पश्चात्कर्तव्यतेति···तदनुसारिप्रयोगो लिख्यते" इति ।

"यद्यपि भूतशुद्धिप्रकारा बहवः सन्ति, चन्द्रातपे च रत्नकोषोक्तप्रकारावेव प्रदर्शितौ, तथापि लाघवानुसारेण प्रपञ्चसारसङ्ग्रहेऽस्मद्गुरुचरणोक्तरीत्या तत्प्रकारः प्रदर्श्यते" इति ।

"अस्मद्गुरुचरणास्तु—अशक्तश्चेद् भूतशुद्धिस्थाने केवलमातृकान्यासमेव कुर्याद् इत्याहुः" इति ।

"बहुमन्त्रविद्भिस्तावन्मन्त्रजपाशक्तौ मातृकैव जप्ता, उक्तमन्त्रजपप्रत्याम्नायरूपा भवतीत्युपदेशः" इतीत्यादिरूपेण तत्तत् स्थलेषु विचारोऽपि विहितः ।

कामकलाविषये मातृकादिस्वरूपे च सूक्ष्म-सूक्ष्मतरा भावनाप्रकाराश्च यथास्थानं निवेशिताः सन्ति । विशेषतश्च प्रत्यक्षगुरुमुखावगततत्त्वजालस्य लेखकस्य क्रियाभिज्ञत्वं सम्प्रदायानुसारित्वञ्च प्रामाण्यमावहति । अस्यां पद्धत्यां बहूनां सन्दर्भग्रन्थानामुल्लेखोऽपि विहितः । तेषु प्रायेण निम्नाङ्किता दृश्यन्ते—यथा कामिकम्, वातुलम्, बृहत्कालोत्तरम्, योगिनीहृदयम्, चतुःशतीशास्त्रम्, कल्पसूत्रम्, दक्षिणामूर्त्तिसंहिता, तन्त्रराजः, कालिकापुराणम्, देव्यागमः, रुद्रयामलम्; कामकलाविलासः, शिवार्कमणिदीपिका इत्यादयः ।

अस्य ग्रन्थस्य मूलस्वरूपात् प्रतिलिपिरियं विहिता केनाऽपि सुदर्शननाम्ना पुरुषेण । तस्य संस्कृतभाषायां व्युत्पत्तिः सम्यङ्नास्तीति लेखकप्रमादादवसीयते । लेखकश्च कश्चिदुत्तरभारतीय एवास्ति । प्रतिलिपिकालस्तु क्वापि नोल्लिखितः; तथापि पुस्तकं प्राचीनमेव प्रतीयते । मध्ये मध्ये हरितालले पेन मार्जनं शोधनं च व्यधायि । पुस्तकपृष्ठसंख्या ८९ नवाशीतिमिता, आकारश्च लघीयान् । सन्दर्भाः क्वचित् क्वचिदस्पष्टा विभाव्यन्ते । मुद्रणावसरे सपरिश्रमं संशोधनमावश्यकं भवेत् । एतत्पुस्तकोपलब्ध्या श्रीमतामप्पयदीक्षितानां श्रीविद्यापारम्परीज्ञानं सुलभं जातमिति प्रमोदस्थानं शास्त्राध्ययनशीनामुपासनातत्त्वविविदिषूणां मनीषिणामिति ।

●

# अद्वैतसिद्धिसम्मता ब्रह्मणो द्रष्टृत्वोपपत्तिः

डॉ० सिद्धेश्वरभट्टाचार्यः,
भू० पू० संस्कृत-पालिविभागाध्यक्षः,
काशीहिन्दूविश्वविद्यालयस्य
वाराणसी

❀❀❀

**पूर्वपक्षः**—ब्रह्म दृक्स्वरूपम्। तस्य कथं द्रष्टृत्वं संगच्छते ?

**सिद्धान्तः**—त्रिविधं व्यावर्तकम्—विशेषणमुपलक्षणमुपाधिश्चेति। तत्र 'नीलो घटः' इत्यत्र नैल्यं यावद्घटस्थायि घटाधिकरणकं च व्यावर्तकमिति घटस्य विशेषणम्। 'काकैर्गृहम्' इत्यत्र काकः कदाचिद् गृहस्थितो गृहस्य व्यावर्तक इति उपलक्षणम्। 'रक्तं स्फटिकम्' इत्यत्र जवाकुसुमगतलौहित्यं स्फटिकेऽवभासते, न तु कदापि स्फटिकसंस्पर्शी इति स्फटिकान्तरात् स्फटिकविशेषस्य व्यावर्तकत्वेऽपि वस्तुतः स्फटिकेन सह सम्बन्धाभावात्, उपाधिरिति।

एवमद्वैतवेदान्तनयेऽविद्याविशेषणकं चैतन्यं जीवः। अविद्योपहितं चैतन्यं साक्षि द्रष्टृपरपर्यायम्। तथैव एतन्नये 'इदं रजतम्' इति शुक्तौ प्रातिभासिकरजतभान इदमंशेऽन्तःकरणवृत्तिः, रजतांशे च रजतोपादानाविद्यावृत्तिरिति वृत्तिद्वयं स्वीक्रियते, तत्र साक्षिरूपम् अविद्यावृत्त्युपहितचैतन्यं रजतमवभासयतीति रजतं साक्षिभास्यमित्युच्यते।

तस्माद् द्विविधं साक्षि—अविद्योपहितचैतन्यम्, वृत्त्युपहितचैतन्यं चेति। एवं साक्षिण उपाधिद्वयम्—अविद्या, वृत्तिश्चेति।

अतो दृगात्मकं शुद्धचैतन्यमेवाऽविद्या-वृत्त्यन्यतरोपाधिवशात् 'साक्षि' इत्युच्यते।

**पूर्वपक्षः**—उपहितचैतन्यस्य साक्षित्वस्वीकारेऽविद्याया उपाधित्वे अन्योऽन्याश्रयः—साक्षिणाऽविद्यासिद्धिः, अविद्यासिद्ध्या साक्षिसिद्धिरिति अविद्यावृत्तेरुपाधित्वे चक्रकापत्तिः—साक्षिणाऽविद्यासिद्धिः, अविद्यासिद्ध्याऽविद्याकार्यवृत्तिसिद्धिः, वृत्तिसिद्ध्या च साक्षिसिद्धिः।

**सिद्धान्तः**—साक्षिणस्तदुपाधेश्च परस्परसिद्धिरन्योऽन्याश्रयस्य चक्रकस्य च मूलम् इति सिद्धिस्वरूपं विवेच्यते। किं तयोः परस्परसिद्धिर्ज्ञप्तौ, उत्पत्तौ, स्थितौ वा ?

अयमाशयः—

(१) किं साक्षिविषयकं ज्ञानम् उपाधिविषयकज्ञानमपेक्षते, तथैवोपाधिविषयकं ज्ञानं साक्षिविषयकज्ञानमपेक्षते ?

**अथवा** (२) किं साक्षिण उत्पत्तिरुपाधेरुत्पत्तिमपेक्षते, तथैव उपाधेरुत्पत्तिः साक्षिण उत्पत्तिमपेक्षते ?

**अथवा** (३) किं साक्षिणः स्थितिरुपाधेः स्थितिमपेक्षते, तथैव उपाधेः स्थितिः साक्षिणः स्थितिमपेक्षते ? इति ।

**नाद्यः**, साक्षिज्ञानमुपाधिज्ञानमपेक्षत इति स्वीक्रियते, यत उपहितज्ञानमुपाधिज्ञानजन्यम्, यथा विशिष्टज्ञानं विशेषणज्ञानजन्यम्; 'नीलो घटः' इति ज्ञानं हि नैल्यज्ञानजन्यम्; किन्तु उपाधिज्ञानम् उपहितज्ञानं नापेक्षते, यतोऽविद्याविषयकं ज्ञानम् अविद्यावृत्तिविषयकं ज्ञानं वा साक्षिविषयकं ज्ञानं नापेक्षते, साक्षिणः स्वरूपत एवोपाधिभासकत्वात् ।

**न द्वितीयः, अविद्याया उपाधित्वे** साक्षिण उत्पत्तिरविद्याया उत्पत्तिं नापेक्षते; तथैवाऽविद्याया उत्पत्तिः साक्षिण उत्पत्तिं नापेक्षते, साक्षिण उपाधेश्च द्वयोरेवानादित्वाद द्वयोः कस्याप्युत्पत्तिप्रसङ्ग एव नास्ति ।

एवम् **अविद्यावृत्तेरुपाधित्वेऽपि**, साक्षिणोऽविद्यावृत्तेश्च यौगपद्येनोत्पत्तेर्यमजभ्रातृवत् ।

**न तृतीयः**, अविद्याया उपाधित्वे न साक्षिणः स्थितिरुपाधेः स्थितिमपेक्षते, यतः साक्षिणः स्थितिः शुद्धचैतन्ये, अविद्यायास्तु स्थितिः साक्षिणि । अविद्यायाः स्थितिस्तु साक्षिणः स्थितिमपेक्षत इत्यभ्युपेयते, अविद्यायाः साक्ष्याश्रितत्वात् । एवम् अविद्यावृत्तेरुपाधित्वपक्षेऽपि साक्षी शुद्धचैतन्याश्रितः, वृत्तिः साक्ष्याश्रितेति साक्षी स्वस्थितौ वृत्तिं नापेक्षते; वृत्तिश्च स्वस्थितौ साक्षिणमपेक्षते, वृत्तेः साक्ष्याश्रितत्वादिति ।

तस्मात् साक्षी तदुपाधिश्च ( अविद्यारूपो वा अविद्यावृत्तिरूपो वा ) ज्ञप्तौ, उत्पत्तौ, स्थितौ वा न परस्परमपेक्षत इति परस्परापेक्षाभावान्नान्योऽन्याश्रयश्चक्रकं वा ।

**पूर्वपक्षः**—साक्षी किं जीवात्मको वा ब्रह्मात्मको वोभयानुगतचैतन्यरूपो वा ? साक्षिणो जीवात्मकत्वे किं जीवस्वरूपम् ? असर्वंगतमन्तःकरणोपहितचैतन्यं यथा नानाजीववादेऽथवा सर्वंगतमविद्योपहितं चैतन्यं यथा एकजीववादे ? जीवस्याऽसर्व-

गतान्तःकरणोपहितचैतन्यरूपत्वे साक्षिणश्च तदात्मकत्वे साक्षिणः शुक्तिरूप्यभासकत्वानुपपत्तिः। तथाहि—शुक्तिरूप्यं साक्षिभास्यमित्यद्वैतवेदान्तसिद्धान्तः। साक्षिणोऽन्तःकरणावच्छिन्नजीवरूपत्वे तन्न निर्वहति, यतः शुक्तिरूप्यम् इदमंशावच्छिन्नचैतन्यवेद्यम्; इदमंशावच्छिन्नं च ब्रह्मचैतन्यमिति साक्षिचैतन्यस्य परिच्छिन्नजीवरूपत्वात् साक्षिचैतन्यं ब्रह्मचैतन्याद् भिद्यते। तस्माद् ब्रह्मचैतन्यात् साक्षिणो भिन्नत्वे ब्रह्मचैतन्यभास्यं न साक्षिभास्यमित्यद्वैतवेदान्तसिद्धान्तहानिः।

एवं साक्षिणः सर्वगताऽविद्योपहितचैतन्यात्मकजीवरूपत्वेऽविद्यारूपस्योपाधेः साक्षितः सिद्धिः, साक्षिणश्च उपाधितः सिद्धिरित्यन्योऽन्याश्रयः स्यात्।

**साक्षिणो ब्रह्मस्वरूपत्वे** ब्रह्मण एव साक्षिभास्यदुःखादिभानं स्यात्। तथा च 'जीवस्यैव साक्षिभास्यदुःखादिभानं न ब्रह्मणः' इत्येवमद्वैतवेदान्तसिद्धान्तो भज्येत। ब्रह्मवेद्यत्वेनैव जीववेद्यत्वे ब्रह्मण इव जीवस्याप्यखण्डानन्दज्ञानं प्रसज्येत। किञ्च, ब्रह्मचैतन्यमेव घटादिभासकमिति मतेऽन्तःकरणवृत्तिर्जीवगत-घटादिविषयकाज्ञानरूपावरणनिवृत्तिद्वारा घटादिभासकचैतन्यात्मकब्रह्मचैतन्येन सहाभेदस्य व्यञ्जिका सती जीवं प्रत्यपि घटादि भासयतीत्यद्वैतवेदान्तप्रक्रिया। तथा च जीवस्य दुःखादिभाननिर्वाहार्थं दुःखाद्याकाराऽन्तःकरणवृत्तिरपेक्ष्यते। अद्वैतवेदान्तेन दुःखादिभानस्थले तादृशान्तःकरणवृत्तेरनङ्गीकारात् कथं जीवस्य दुःखादिः प्रतीयेत? यदि च दुःखादावावरणाभावान्न तद्वृत्तिरपेक्ष्यत इत्युच्येत, तदा घटादौ वृत्तिद्वारा, दुःखादौ च स्वत एव, जीवस्यैव दुःखादिभानं स्यात्, किं साक्षिस्वीकारेण?

**सिद्धान्तः**—तर्हि साक्षी जीवब्रह्मानुगतं चिन्मात्रं भवतु।

**पूर्वपक्षः**—तदपि न साधु, तथा हि यथा नैयायिकसम्मत ईश्वरो जीवगतत्वेन दुःखादि पश्यन्नपि न तेन स्पृष्टो भवति, तथैव ब्रह्मकोटिः साक्षी जीववद् दुःखादिना जर्जरितः स्यात्। किञ्च सुषुप्तिस्थो मैत्रो जीवविशेषो दुःखादि नानुभवति; व्युत्थितः सन् स एव "एतावन्तं कालं दुःखादि नावेदिषम्" इति प्रत्यभिजानाति। सेयं प्रत्यभिज्ञा सुषुप्तौ तस्य दुःखादेरननुभवे प्रमाणम्। चैत्राख्योऽपरो जीवस्तु मैत्रस्य दुःखाननुभवकाल एव दुःखादिमनुभवितुमर्हति। एवं स्थिते यदि जीवकोटिः साक्षी सर्वजीवसाधारणः स्यात्, तदैकदेव युगपद् दुःखादिमनुभवेत्, नानुभवेच्चेति विपरीतमापद्येत।

तस्मात् साक्षी न जीवकोटिर्नापि ब्रह्मकोटिः, नापि चोभयानुगत इति साक्षिस्वरूपं न सिध्यति।

**सिद्धान्तः**—साक्षी शुद्धचैतन्यभिन्नो जीवभिन्नोऽविद्या-तद्वृत्त्युपहितचैतन्यरूपः सिध्यति। सुषुप्त्यवस्थायामप्यविद्यावृत्तेः स्वीकारात् तदापि साक्षिद्वारा जीवस्य दुःखाभावभानं सुखभानं च सुस्थितं भवति। शुद्धस्य साक्षित्वाभावान्न शुद्धे दुःखस्पर्शः। तत्तज्जीवचैतन्येन सहाभेदेन साक्षी दुःखादिं तत्तज्जीवचैतन्यगतत्वेनावभासयतीति मैत्रे दुःखाभावश्चैत्रे च दुःखं युगपदेव सम्भवतितराम्।

**इदमत्र बोध्यम्**—साक्षिणः स्वतो वृत्तिद्वारा वा तत्तज्जीवेनाऽभेदस्तत्तद्दुःखादिरूपविषयावच्छेदेन सम्पद्यते। एवं तदवच्छेदेनानावृतत्वं प्राप्तः शुद्धचैतन्यात्मकः साक्षी तं तमेव विषयं तं तं जीवं प्रति भासयति। एवं च चैत्रीयदुःखादेश्चैत्रीयतया भानम्, चैत्रं प्रति तद्दुःखाद्यवच्छेदेन शुद्धचैतन्यस्य स्वतो वृत्तिद्वारा चैत्रेणाभेदसम्पत्त्या चैत्रं प्रत्यनावृतत्वात्। सुप्तमैत्रं प्रति चैत्रीयतया भासकत्वं न सम्भवति, पुरुषान्तरीयदुःखादेः पुरुषान्तरं प्रत्यावृतत्वात् प्रमाणवृत्तिं विना तं प्रति साक्षिमात्रस्याऽभासकत्वात्।

**अयं निष्कर्षः**—

जीवस्य लौकिकं प्रत्यक्षं द्विविधम्—बाह्यं चक्षुरादिबहिरिन्द्रियजन्यं घटादिविषयकम्; आन्तरं च सुखदुःखादिविषयकम्, भ्रमीयरजतादि विषयकं चेति। आन्तरमेव प्रत्यक्षं साक्षिभास्यमित्युच्यते। तत्र बाह्ये प्रत्यक्षे जीवविशेषविशेषणमन्तःकरणविशेषश्चक्षुरादिप्रणाल्या बहिर्निर्गत्य घटादिबाह्यविषयं प्राप्य तदाकारेण परिणमते। सोऽयं परिणामो वृत्तिरित्युच्यते। सेयं वृत्तिः स्वस्यां प्रतिबिम्बितं चैतन्यमाश्रित्य जीवविशेषस्याऽन्तःकरणावच्छिन्नचैतन्यस्य घटाद्यधिष्ठानचैतन्येन विषयचैतन्याख्येन साक्षिणाऽभेदं निष्पादयति; तथा जीवविशेषस्य घटादिविषयकमावरकमज्ञानं च निराकरोति। एवं घटादिकं प्रत्यनावृतं साक्षिचैतन्यं घटं भासयति, जीवविशेषश्च तादृशानावृतचैतन्येनाऽभिन्नः सन् घटादिभासकतामाप्नोति। सोऽयं घटादिप्रतिभासस्तस्य जीवस्य घटादिप्रत्यक्षमिति स्थितिः।

तस्य जीवविशेषस्य सुखविशेषप्रत्यक्षे तु तज्जीवगताविद्याविशेषस्य वृत्तिरेवोपयुज्यते, नान्तःकरणवृत्तिः। एवं तस्य भ्रमीयशुक्तिरजतप्रत्यक्षेऽप्यविद्यावृत्तिरेव।

सेयमविद्यावृत्तिस्तज्जीवस्य सुखावच्छेदेन सुखादिविषयाधिष्ठानचैतन्येन साक्षिणा सहाऽभेदं सम्पादयति, अत्र तज्जीवं प्रति तादृशसुखविशेषस्यावरणाभावान्नाविद्यावृत्तिः सुखविषयकमावरणं निराकरोति। तज्जीवं प्रत्युत्पन्न एव सुखे तत्प्रतीतिरवश्यम्भाविनी। घटादिर्यथाऽज्ञातो ज्ञातो भवति, तथा सुखमुत्पन्नमपि सत् कदापि तज्जीवस्याज्ञातं न स्थातुमर्हतीति तं जीवं प्रति तत्सुखविषयकमावरणं न स्वीक्रियते। तथा च सर्वजीव-

साधारणोऽपि साक्षी तज्जीवस्य तत्सुखं प्रत्येवाऽनावृतं तत्सुखं भासयति; तज्जीवश्चाऽविद्यावृत्त्या साक्षिणाऽभेदं प्राप्तस्तत्सुखभासकतामाश्रित्य तत्सुखं साक्षात्करोति।

साक्षिणः सर्वजीवसाधारण्येऽपि चैत्रीयदुःखं मैत्रेण न साक्षात्क्रियते, मैत्रं प्रति चैत्रीयदुःखस्याऽऽवृतत्वात्, अनावृतचैतन्यस्यैव च भासकत्वात्, चैत्रं प्रति तु तद्दुःखमनावृतमेवेति चैत्रः स्वीयदुःखं साक्षात्करोति, साक्षिणा सह चैत्रस्य स्वीयदुःखाकाराविद्यावृत्तितोऽभेदात्। मैत्रं प्रति तु चैत्रीयदुःखमावृतमेव तिष्ठतीति मैत्रः कदापि चैत्रीयदुःखं नानुभवति, मैत्रं प्रति साक्षिणश्चैत्रीयदुःखत्वावच्छेदेनावृतत्वात्। एवं मैत्रीय-शुक्ति-रजतभ्रमस्थलेऽपि मैत्रीयाविद्यावृत्त्या मैत्रं प्रत्येव शुक्तिरजतं भासत इति बोध्यम्।

तस्माद् अविद्या-तद्वृत्त्यन्यतरोपहितं तद्विषयावच्छेदेनाऽनावृतं शुद्धचैतन्यमेव तदवच्छेदेन साक्षीति।

इदमप्यत्रावधेयम्—घटादिबाह्यविषयकप्रत्यक्षं प्रत्येव घटादिर्विषयतया कारणमिति तत्र घटादिविषयकान्तःकरणवृत्तिं प्रति घटादिविषयस्य कारणत्वम्, न तु सुखादिविषयकाविद्यावृत्तिं प्रति सुखादेः कारणत्वं स्वीक्रियते। एवं सति सुखादिस्तदाकाराऽविद्यावृत्तिश्च युगपदेवोत्पद्येते। तदैव च सुखाद्याकाराविद्यावृत्त्युपहितं शुद्धचैतन्यमेव साक्षिचैतन्यं समुत्पद्यते, तस्मात् सुखादिस्तदाकाराविद्यावृत्तिस्तदुपहितचैतन्यं त्रितयं समकालं समुपजायते। एवं रीत्या सुखादिः साक्षिभास्य इत्युच्यते। यद्यपि सुखादिप्रत्यक्षस्थलेऽविद्यावृत्तेर्विषयगतावरणनाशकत्वं नास्ति, सुखादेर्मैत्रं प्रत्यावरणाभावात्, तथाप्यनावृतसाक्षिचैतन्येन सह सुखादेः सम्बन्धोऽविद्यावृत्तिदशायामेवेत्यविद्यावृत्तिस्तादृशस्थले साक्षिचैतन्यस्योपाधिरित्युच्यते। एवं भ्रमीयशुक्तिरजतस्थलेऽपि बोध्यम्।



# योगवासिष्ठे दैवपौरुषवादयोर्विचारः

आचार्यश्रीकुबेरनाथशुक्लः
भू०पू० प्रस्तोता,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी

❀ ❀ ❀

आधुनिके वैज्ञानिके युगे वैज्ञानिकाविष्कारेण नभोमण्डले उड्डीयमानानि वायुयानानि विलोक्य भूमण्डले च रेलमार्गेण द्रुतगत्या धावमानानि धूम्र-वाष्प-विद्युद्यानानि विलोक्य जले च विशालकायान् जीवनोपयोगिविविधसामग्रीभिः सुसज्जितान् बृहत्पोतान्निरीक्ष्य को नाम सहृदयः पौरुषस्य महत्त्वं नाकलयिष्यति। चिकित्सा-शिल्प-कृषि-वाणिज्य-कलादि-विज्ञाने तकनीकीक्षेत्रे च क्रियमाणानि अनुसन्धानकार्याणि, अन्ये च क्रियमाणाः क्रियाकलापाः साटोपं डिण्डिमघोषपुरस्सरं कस्य चेतो नाकर्षन्ति। दूरदर्शन-दूरभाषादियन्त्रैः सम्पर्कस्थापने प्रशंसनीयं कार्यं कृतम्। एतत् सर्वं पौरुषवादस्य महत्त्वमभिव्यनक्ति।

परन्तु दुःखस्यावसरे यदप्रत्याशितं मरणादिकं जायते रेलादियात्रायाम्, गृहे मार्गे वाऽघटितघटनासंघटिता भवन्ति, तदा विधेर्दैवस्य कृतान्तस्य वा नाम झटिति स्मर्यंते। एकस्मिन्नेव कुले समुत्पन्ना बालका व्यवहारे आहारे योग्यतायां सदाचारे च विभिन्न-रुचिका विभिन्नयोग्यताकाश्च भवन्ति, तेषां विविधां विपरीताञ्चोपलब्धिं विचार्य दैव-वादो झटिति स्मृतिपथमायाति।

इयं दैववादस्य कल्पना प्राचीनकालादेव प्रचलिता। वाल्मीकिरामायणे राज-कुमारेण श्रीरामचन्द्रेण वनवासप्रसङ्गेऽभ्यधायि—"लक्ष्मण! अयं मम वनवासो दैव-प्रयुक्त एवास्ति। अन्यथा मातुः कैकेय्या मम प्रव्राजने कथं प्रतिपत्तिः स्यात्? मातृषु मम किमप्यन्तरं नासीत्। सा माता कैकेय्यपि मयि भरते वा कमपि विशेषं नामन्यत। गुणवती माता कैकेयी प्राकृतस्त्रीव मम पीडाकरं वचनं भर्तृसन्निधौ कथमवोचत्। एतत् सर्वं दैवविजृम्भितमेव।

कृतान्तस्त्वेव सौमित्रे द्रष्टव्यो मत्प्रवासने।
राज्यस्य च वितीर्णस्य पुनरेव निवर्त्तने॥

कैकेय्याः प्रतिपत्तिर्हि कथं स्यान्मम पीडने।
यदि भावो न दैवोऽयं कृतान्तविहितो भवेत् ॥
जानासि हि यथा सौम्य न मातृषु ममान्तरम्।
भूतपूर्वो विशेषो वा तस्या मयि सुतेऽपि वा ॥
कथं प्रकृतिसम्पन्ना राजपुत्री तथागुणा।
ब्रूयात् सा प्राकृतस्त्रीव मत्पीडां भर्तृसन्निधौ[1] ॥

तदानीं तत्रैव राजकुमारेण लक्ष्मणेनाभिहितम्—"तात ! ये दुर्बला विक्लवा वीर्यहीनास्त एव दैवमुपासते। सम्भावितात्मानो वीरास्तु दैवं नानुवर्त्तन्ते। यः पौरुषेण दैवं प्रबाधितुं समर्थः, स कदापि दैवेन नावसीदति।

विक्लवो वीर्यहीनो यः स दैवमनुवर्त्तते।
वीराः सम्भावितात्मानो न दैवं पर्युपासते ॥
दैवं पुरुषकारेण यः समर्थः प्रबाधितुम्।
न दैवेन विपन्नार्थः पुरुषः सोऽवसीदति[2] ॥

महाभारते युधिष्ठिरादीनां स्वपुत्राणां वनवासं दुर्दशां च विलोक्य देवी कुन्ती भृशं शोकसन्तप्ता समजायत। साऽवोचत्—"दुर्योधनादिकौरवाणामपेक्षया मम पुत्रा युधिष्ठिरादयो विद्वांसः शूरा वीरा धनुर्वेदे निष्णाताः सदाचाराश्च सन्ति; परन्तु ते दुःखमेवालभन्त। अतो भाग्यस्यैव प्राधान्यम्। भाग्यवन्त एव पुत्रा एष्टव्याः। महाभारते—

भाग्यवन्तं प्रसूयेथा मा शूरं मा च पण्डितम्।
शूराश्च कृतविद्याश्च वने सीदन्ति मामकाः ॥

ऐक्ष्वाको महाराजोऽजो राजमहिष्या इन्दुमत्या सह नगरोपवने विहरन्नासीत्। आकाशमण्डलादेका स्रक्पतिता। फलतश्च महाराज्ञी व्यपगतप्राणा समभवत्। महाराजोऽजो भृशं विललापावोचच्च—"दैवरूपिणी ईश्वरेच्छैव मरणस्य कारणत्वेनाभ्युपगन्तव्या। यतः पुष्पमालाघातेन मरणमप्रतर्कितमननुभूतञ्च। कविकुलचूडामणिना कालिदासेन तदेवोक्तम्—

स्रगियं यदि जीवितापहा हृदये किं निहिता न हन्ति माम्।
विषमप्यमृतं क्वचिद् भवेदमृतं वा विषमीश्वरेच्छया[3] ॥

---

१. वाल्मीकिरामायणे, अयोध्याकाण्डे, सर्गः—२२, श्लोकाः—१५, १६, १७, १९।

२. वाल्मीकिरामायणे, अयोध्याकाण्डे, सर्गः—२३, श्लोकाः—१७–१८।

३. रघुवंशे—८।४६।

लोके एवं विधा अपि घटना घटिता भवन्ति, यासां चिन्तनमपि पुमान्नैव कुरुते। यथा केनापि कविनाभिहितम्—

अघटितघटितं घटयति सुघटितघटितानि दुर्घटीकुरुते।
विधिरेव तानि घटयति यानि पुमान्नैव चिन्तयति॥

योगवासिष्ठे तु महर्षिणा वाल्मीकिना दैववादो निरस्तः, पौरुषवादश्च विस्तरेण समर्थितः। किन्नाम दैवमिति मीमांसायां दैवस्य रूपं कर्म चेष्टितं पराक्रमश्च दृष्टिगोचरतां नैवायान्ति। लोके प्रसिद्धिस्तु मिथ्याज्ञानजन्या रज्ज्वां भुजङ्गम इव निस्सारभूता मूढैः कल्पिता।

तत्रैव मूढमतिभिर्दैवमस्तीति निश्चयः।
आत्तो दुखबोधेन रज्ज्वामिव भुजङ्गमः[1]॥

यदि दैवस्य कर्तृत्वमङ्गीक्रियते, तर्हि स्नानदानपूजादिक्रियाणां किम्प्रयोजनम्? सर्वं दैवमेव करोतु। इदं च लोके दृश्यते यत् क्रिययैव फलसिद्धिर्भवति, न दैवेन। तस्माद् दैवं निरर्थकमेव। दैवं तावदमूर्त्तम्। पुरुषश्च मूर्तिमान्। अतोऽमूर्त्तेन मूर्त्तस्य पुरुषस्य सह कर्तृत्वं भवितुं नार्हति। यथा मनसो बुद्धेर्वास्तित्वमनुभूयते, तथा दैवस्य नानुभूयते, अतो दैवमसत्—

मनोबुद्धिवदप्येतद् दैवं नेहानुभूयते।
आगोपालं कृतप्रज्ञेस्तेन दैवमसत्सदा[2]॥

वयं मूर्त्ताः स्मः, अतोऽस्माकं सम्बन्धे मूर्तैरेव पदार्थैर्भवितुमर्हति। नभोऽमूर्त्त-मतस्तेन सहास्माकं सम्बन्धो नास्ति। तथैव दैवमप्यमूर्तमतस्तेन सहास्माकं सम्बन्धो भवितुं नार्हति, अतो दैवमसत्।

पूर्वजन्मकृतं कर्म दैवपदवाच्यं भवति, तदतिरिक्तं दैवं नाम किमपि न विद्यते। यथा स्वस्थेन सुपुष्टेन पुंसा बालो जीयते, तथैवाधुनिकेन शुभेन कर्मणा प्राक्तनं कर्म दैव-रूपं जेतुं शक्यते। ये दैवं जेतुं न प्रयतन्ते, ते दीना मूढाः प्राकृता दैवपरायणाः सन्ति। दुःखनिमग्नानां जनानां दैवं नामाश्वासनामात्रम्। दैवं दृष्टिगोचरं न भवति, लोकान्तोऽपि न दृश्यते। प्राणिभिः कृतस्य कर्मणः स्वर्लोकफलमेव दैवशब्देन कथ्यते। पुरुषो लोके उत्पद्यते, वर्धते जीर्यते च। तस्य बाल्ययौवनजराभिधास्तिस्रोऽवस्था भवन्ति। यथा ता दृश्यन्ते, तथा दैवं क्वापि न दृश्यते—

---

१. योगवासिष्ठे मुमुक्षुप्रकरणे, सर्गे—८।३।

२. तत्रैव—८।११।

न दैवं दृश्यते दृष्ट्या न च लोकान्तरे स्थितम् ।
उक्तं दैवाभिधानेन स्वर्लोके कर्मणः फलम् ।
पुरुषो जायते लोके वर्धते जीर्यते पुनः ।
न तत्र दृश्यते दैवं जरायौवनबाल्यवत्[1] ॥

कदाचित् पौरुषेण कृतं कर्म दैवादभिविनश्यति—'तत्र नाशयितुर्ज्ञेयं पौरुषं बलवत्तरम्'; परन्तु ये विशिष्टाः पुरुषाः सन्ति, ते तु महता प्रयासेन विघ्नराशिमपि चूर्णीकुर्वन्ति। यथा मृगेन्द्रः पौरुषमवलम्ब्य पञ्जरान्निर्याति, तथा ते जगत्कुहरान्निर्यान्ति—

यस्तूदारचमत्कारः सदाचारविहारवान् ।
स निर्याति जगन्मोहान्मृगेन्द्रः पञ्जरादिव[2] ॥

केचनेत्थं वदन्ति यद् दैवप्रेरणयैव वयं कार्यं कुर्मः। दैवं यथा प्रेरयति, तथैवास्माकं कार्येषु प्रवृत्तिर्भवति। अतो दैवमेव विनियोजकं प्रेरकञ्चेति। इयं कल्पना स्वल्पधियामेव। ये प्राज्ञाः सन्ति, ते पौरुषमवलम्ब्य कार्यं कुर्वते, साफल्यं च लभन्ते। त एवोत्तमपदं च प्राप्नुवन्ति।

मूढैः प्रकल्पितं दैवं तत्परास्ते क्षयं गताः ।
प्राज्ञास्तु पुरुषार्थेन पदमुत्तमतां गताः ॥
ये शूरा ये च विक्रान्ता ये प्राज्ञा ये च पण्डिताः ।
तैस्तैः किमिव लोकेऽस्मिन् वद दैवं प्रतीक्ष्यते[3] ॥

महर्षिणा विश्वामित्रेण पौरुषमवलम्ब्यैकेनैव जन्मना ब्राह्मण्यमधिगतम्। अन्यैरपि मुनिभिस्तपस्विभिश्च पौरुषमाश्रित्य गगनगमनादिका दिव्याः शक्तयोऽणिममहिमलघिमादयो लब्धाः। हिरण्यकशिपुप्रभृतिदानवैः पौरुषामाश्रित्य देवसङ्घमुत्साद्य त्रिभुवनसाम्राज्यमायत्तीकृतम्। पौरुषमाश्रित्य देवैर्दानवान् विजित्य त्रैलोक्यराज्यमवाप्तम्। कश्चित् प्राणिविशेषः पौरुषेण प्रयत्नेन सुदुर्लभमैन्द्रं पदमुपागतः। पौरुषेणैव यत्नेन ब्रह्मणः पदमप्यवाप्यते। अपूर्वं तपः पौरुषं कृत्वा जनाः पुरुषोत्तमपदं लभन्ते। पौरुषेणैव यत्नेन कश्चन प्राणिविशेषोऽर्धनारीश्वरं चन्द्रशेखरपदमवाप्तवान् --

पौरुषेण प्रयत्नेन त्रैलोक्यैश्वर्यसुन्दराम् ।
कश्चित् प्राणिविशेषो हि शक्रतां समुपागतः ॥
पौरुषेणैव यत्नेन सहसाम्भोरुहास्पदम् ।
कश्चिदेव चिदुल्लासो ब्रह्मतामधिगच्छति ॥

---

१. यो० वा०, मु० प्र०—७।२२-२३; २. तत्रैव—६।२८।
३. तत्रैव—८।१६-१७।

सारेण पुरुषार्थेन स्वेनैव गरुडध्वजः ।
कश्चिदेव पुमानेव पुरुषोत्तमतां गतः ॥
पौरुषेणैव यत्नेन ललनावलिताकृतिः ।
शरीरी कश्चिदेवेह गतश्चन्द्रार्धचूडताम्[1] ॥

तच्च पौरुषं द्विविधं भवति - प्राक्तनमैहिकञ्च । प्राक्तनं पौरुषमद्यतनेन परिपुष्टेन शास्त्रनियन्त्रितेन यथाविधि सम्पादितेन च पौरुषेण जीयते । एवंविधेन पौरुषेण सर्वे मनोरथाः सिद्ध्यन्ति । परन्तु पौरुषे नैरन्तर्यमपेक्षितमाफलप्राप्तेः । कार्येष्वनेके विघ्नाः समायान्ति । अतः शास्त्रोक्तेन विधिना गुरूपदिष्टमार्गेण च प्रयतनीयम्, येन साफल्यमधिगतं भवेत्—

यो यमर्थं प्रार्थयते तदर्थं चेहते क्रमात् ।
अवश्यं स तमाप्नोति न चेदर्धान्निवर्तते[2] ॥

पौरुषमुच्छास्त्रं शास्त्रितञ्च द्विविधं भवति । तत्र शास्त्रविरुद्धं त्वनर्थाय कल्पते । यच्छास्त्रितं पौरुषं तत् परमार्थप्रसाधकं हितावहं च भवति । ऐहिकप्राक्तनपौरुषयोर्बलाबलपरीक्षणमपि भवति । तत्र यद् दुर्बलं भवति, तद् बलीयसा जीयते । अतः सर्वात्मना प्रयतितव्यं येनाद्यतनेन पौरुषेण प्राक्तनमशुभं पौरुषं जितम्भवेत् । प्राक्तनं जीयेत, चेत्तर्हि जीवने साफल्यं दुर्लभं भविष्यति । अतः परं पौरुषमाश्रित्य सर्वात्मना प्रयतनीयं येनाद्यतनः पुरुषार्थः प्राक्तनं जयेत ।

पुरुषैरनुद्योगपरैः कथमपि न भाव्यम् । यतो हि आलस्यं मनुष्याणां महान् रिपुः । अलसा जना निर्धना मूर्खाश्च भवन्ति । ते भृशं निन्द्याः परिहर्तव्याश्च—

आलस्यं यदि न भवेज्जगत्यनर्थको
न स्यादिह बहुधनको बहुश्रुतो वा ।
आलस्यादियमवनिः ससागरान्ता
सम्पूर्णा नरपशुभिश्च निर्धनैश्च[3] ॥

ये जना दैवं पुरुषकारेण निर्वर्तितुमिच्छन्ति, तेषां सर्वेऽपि मनोरथाः सिध्यन्ति । ये तूद्यमं विहाय दैवपरायणा भवन्ति, ते धर्ममर्थं कामं च नाशयन्ति ।

एवं योगवासिष्ठमतेनैतद् वक्तुं शक्यते यत् पौरुषादेव लोके विविधा रचना दृश्यन्ते । पौरुषादेव लोकव्यवहारः प्रचलति, पौरुषादेव चास्माकं जीवनम्, दैवं तु केवलमज्ञानविजृम्भितमिति शम् ।



---

१. योगवासिष्ठे, मुमुक्षुप्रकरणे—४।१३–१६; २. तत्रैव—४।१२; ३. तत्रैव—५।३० ।

# श्रीबेल्लंकोण्डरामरायकविः—तज्जीवनं कृतयश्च

**प्रो० पो० श्रीरामचन्द्रुडु**
**आचार्यः, संस्कृतविभागस्य,**

उस्मानियाविश्वविद्यालये
हैदराबाद

❀❀❀

श्रीमान् बेल्लंकोण्डोपनामधेयो रामरायकविः आन्ध्रप्रदेशे गुण्टूरमण्डलान्तर्गतं नरसरावपेटसमीपवर्तिनं पमिडिपाडु इति अग्रहारं क्रीस्तशकस्य पञ्चसप्तत्युत्तराष्टादशशततमे वर्षे (1875 A.D.) आत्मनो जन्मना समलञ्चकार। लब्धराजकार्यनियोगा बेल्लंकोण्डवंशीया नियोगिब्राह्मणाः, अग्रहाराधिपा रामरायस्य पूर्वजाः परमाढ्या भूस्वामिनश्चासन्। गोत्रेण भारद्वाजस्य, ऋक्शाखाध्यायिनः, आश्वलायनसूत्रस्य रामरायस्य पिता मोहनरायः, माता च हनुमाम्बा। प्रायः सर्वेऽप्येतद्वंशीयाः कविपण्डितादीनां पोषणे, अशननिवासादिदानपूर्वकं नैकेषां विद्यार्थिनामध्यापने च बद्धश्रद्धा आसन्।

पञ्चवर्षदेशीय एव रामराये, पिता मोहनरायो दिवं जगाम। तदाप्रभृति निरूढात्मसंरक्षणभारेण पितृव्येण आङ्गलविद्याभ्यासार्थं गुण्टूरनगरं प्रेषितो रामरायः। तत्र कतिचिदेव हायनान् स्थातुमशकत्; यतो यदा यदा स पाठशालामगच्छत्, तदा तदा रुग्ण आसीत्। आत्मनो हूणविद्याभ्यासविषये दैवं प्रतिकूलमिति मत्वा गृहं प्रत्यागत्य संस्कृतभाषाशास्त्राभ्यासं प्रारभत। तत्तच्छास्त्रपण्डितेभ्यस्तेषां तेषां शास्त्राणाम् एकवारश्रवणेनैव समधिगतनिरुपमपाण्डितीकेन रामरायेण 'प्रपेदिरे प्राक्तनजन्मविद्याः' इति न्यायेन सर्वाण्यपि शास्त्राणि प्रपेदिरे। पञ्चदशवर्षदेशीय एवासौ सहजकविताप्रतिभाशाली नैकानि काव्यानि ग्रथितुमारेभे।

बेल्लंकोण्डवंशीयाः सर्वेऽपि विशिष्टाद्वैतमतावलम्बिन आसन्। आदौ रामरायकविः श्रीमद्रामानुजाचार्यविरचितं गीताभाष्यम् अपठत्। तत्पठनसमये तस्य मनसि समुद्गताः किल केचन संशयास्तथैवासन्। कालान्तरे प्रतिवर्षं स्वास्थानीमागच्छद्भ्यो विद्वद्वरेभ्यः पञ्चदश्यादीन्यधीत्य श्रीमच्छङ्करभगवत्पादविरचितं गीताभाष्यमप्यध्यैष्ट। तदाप्रभृति किल श्रीमद्रामानुजीयभाष्ये तस्यादरः किञ्चिन्न्यून इवाभवत्।

प्राय: प्रतिवर्षं तिरुपतिपुरीतो वैष्णवाचार्यः कश्चिदागत्य स्वशिष्यान् बेल्लंकोण्ड-वंशीयाननुग्रहीतुं कतिचिद्दिनानि तैर्दत्तान् पूजापारितोषिकादीन् गृह्णंस्तस्मिन् ग्रामे वसति स्म। एकस्मिन् वर्षे स आचार्योऽन्यैः शिष्यैः साकं रामरायकवीन्द्रायापि तप्तमुद्राङ्कनरूपं समाश्रयणं दातुमैच्छत्। तदेतत् शास्त्रविरुद्धमिति वदन् रामरायः तद्ग्रहीतुं निराचकार। कुपितश्च स वैष्णवाचार्यः 'त्वं नैव विशिष्टाद्वैतमतावलम्बी' इति तं निनिन्द, तदाप्रभृति रामरायस्य मनसि विशिष्टाद्वैतविषयेऽनादरः, अद्वैतविषये महानादरश्च प्रतिदिनं ववृधे। विशिष्टाद्वैतखण्डनपरान् अद्वैतसिद्धान्तप्रतिपादनपरांश्च नैकान् ग्रन्थान् निर्मातुं रामराय आरेभे। अतीवाल्पीयस्येव काले सार्धशतं काव्य-शास्त्र-तद्व्याख्यारूपान् ग्रन्थान् निर्माय चतुर्दशोत्तरैकोनविंशतिशततमे (१९१४) वर्षे एकोनचत्वारिंशद्वर्षायुरेव रामरायः परं पदमवाप।

**श्रीरामरायस्य कृतयः —**

अत्यल्प एवायुषि विरचितबहुग्रन्थजातस्य श्रीरामरायकवेः कीदृशी वा प्रतिभेति सहृदयैः स्वयमेवाभ्यूहितुं शक्यते। श्रीहयग्रीवोपासनाविकासितापूर्वधीशक्तिरयं विद्वत्कविर्वक्ष्यमाणान् ग्रन्थान् जग्रन्थ—

१. श्रीमद्भगवद्गीताभाष्यार्कप्रकाशिका नाम्नी भगवद्गीताशाङ्करभाष्यव्याख्या; २. शाङ्कराशाङ्करभाष्यविमर्शः; ३. शारीरकचतुःसूत्रीविचारः; ४. वेदान्तमुक्तावली; ५. अद्वैतविजयः; ६. देहदेहिभावनिर्मूलनम्; ७. वेदान्तनिश्चयः, ८. त्रिमतसंमतम्; ९. सिद्धान्तसिन्धुः; १०. अद्वैतामृतम्; ११. वेदान्तसंग्रहः; १२. वेदान्तदीपिका; १३. वेदान्तदिनकरः; १४. वेदान्ततत्त्वामृतम्; १५. अद्वैतान्यमतखण्डनम्; १६. लोकायतादिमतखण्डनम्; १७. वेदान्तकौस्तुभम्; १८. भागवतचतुःश्लोकीव्याख्या; १९. कृष्णोद्धवसंवादव्याख्या; २०. मोक्षप्रादादर्श्चेति वेदान्तग्रन्थानां विंशतिः; २१. शरद्रात्रिः (सिद्धान्तकौमुदीव्याख्या); २२. रुक्मिणीपरिणयचम्पूः; २३. कृष्णलीलातरङ्गिणीति सप्ततरङ्गात्मकं काव्यम्; २४. कन्दर्पदर्पविलासभाणम्; २५. गरुडसन्देशः; २६. समुद्रमन्थनचम्पूः; २७. कविभूषणम्; २८. रमापरिणयचम्पूः; २९. भागवतचम्पूव्याख्या; ३०. अनर्घराघवव्याख्या, ३१. सुमनोमनोरञ्जनम्, ३२. समस्यारत्नाकरश्चेत्यादयो ग्रन्था अस्य रामरायकवेर्व्याकरणपाण्डित्यम्, काव्यनिर्मितिकौशलम्, व्याख्याग्रथननैपुणीं च प्रकाशयन्ति। ३३. धर्मप्रशंसा; ३४. काममीमांसा; ३५. विद्यार्थविद्योतनम्; ३६. ब्राह्मणशब्दविचारः; ३७. नियोगिवैदिकहितोपदेशः; ३८. धनवर्णनम्; ३९. स्वीकारनिर्णयश्चेत्यादयो ग्रन्थास्तस्य सामाजिकविषयज्ञानं संसूचयन्ति। अष्टक-शतकादिरूपेण निबद्धानि, नैकदेवतासम्बद्धानि च सप्तसप्ततिसंख्यानि (७७) स्तोत्राण्यस्य महाकवे-

स्तत्तद्देवताभक्तिमावेदयन्ति; अद्वैततत्त्वचिन्ताप्रवणतां च संसूचयन्ति ।

श्रीरामरायकविना विरचितेषु वेदान्तशास्त्रग्रन्थेषु श्रीभगवद्गीताशाङ्करभाष्य-व्याख्यारूपो भाष्यार्कप्रकाशः, शाङ्करभाष्यविमर्शः, श्लोकरूपेण उपनिषदर्थान् संगृह्णन्ती वेदान्तमुक्तावली च विषयवैपुल्येन ग्रन्थविस्तरेण च वादग्रन्था इति वक्तुं शक्यते । अन्ये च सर्वे प्रकरणग्रन्थाः । तत्र तावद्भाष्यार्कप्रकाशस्य द्वित्राणि स्थानानि परिशील-यामः ।

श्रीमद्भगवद्गीताद्वितीयाध्याये 'यं हि न व्यथयन्त्येते' (२।१५) इत्यादिश्लोकं रामानुजाचार्यं एवं व्याचख्यौ—"यं पुरुषं धैर्ययुक्तम्, अवर्णनीयदुःखं सुखवन्मन्यमानम् अमृतत्वसाधनतया स्ववर्णोचितं युद्धादिकर्मानभिसंहितफलं कुर्वाणं तदन्तर्गताः शस्त्रपातादिमृदुक्रूरस्पर्शा न व्यथयन्ति, स एवामृतत्वं साधयति, न त्वादृशो दुःखा-सहिष्णुरित्यर्थः' इति । तदेतद्व्याख्यानं रामरायकविरित्थमखण्डयत्—'तत्तुच्छम्—तादृशो हि पुरुषो युद्धे मृतश्चेद्वीरस्वर्गं साधयति, जयी चेत् परराज्यम्, अथवा चित्त-शुद्धिमेव; न त्वमृतत्वम्, मोक्षस्य ज्ञानैकसाध्यत्वात् । सांख्यप्रकरणे चात्र कर्मकीर्तनमनु-चितम्, पुरुषर्षभशब्दे काकाश्रयणं चायुक्तम्, भगवतः परमार्थोपदेष्टुरत्र काकुसम्बोधन-प्रयोगानौचित्यात् । अर्जुनस्य परमार्थतः पुरुषाधमत्वे तं प्रति शास्त्रोपदेशस्यैवायुक्तत्वा-दिति" इति । परन्तु 'पुरुषर्षभ'शब्दे काकुरिति रामानुजाचार्यैर्भाष्ये नैवोक्तम् । अथापि "न त्वादृशो दुःखासहिष्णुरमृतत्वं साधयेत्" इत्युक्ते 'पुरुषर्षभ' इति संबोधनं कथम् इत्याशङ्कोदेति । तदाऽत्र काकुर्वा विपरीतलक्षणा वाऽङ्गीकर्तव्येति समाधानं वक्तव्यं भवेत् । तन्मनसि विधाय कैश्चिद् व्याख्यातृभिरभिहितं वा दृष्ट्वा रामरायेणैवमुक्तं भवेत् ।

"नासतो विद्यते भावः" ( २।१६ ) इत्यादिश्लोके शङ्करभगवत्पादा ब्रह्मण एकस्यैव सत्त्वम्; तदन्यस्य सर्वस्यापि कार्यप्रपञ्चस्यासत्त्वमेव" इति प्रत्यपीपदन् । तत्प्रसङ्ग एवं दृश्यते भाष्ये—"कार्यस्य मृदादिकारणस्य च तत्कारणव्यतिरेकेणानुपलब्धेर-सत्त्वम्, तदसत्त्वे सर्वाभावप्रसङ्ग इति चेन्न—सर्वत्र बुद्धिद्वयोपलब्धेः, सद्बुद्धिरसद्-बुद्धिश्चेति । यद्विषया बुद्धिर्न व्यभिचरति, तत् सत्, यद्विषया व्यभिचरति, तदसदिति सदसद्विभागे बुद्धितन्त्रे स्थिते सर्वत्र द्वे बुद्धी सर्वैरुपलभ्येते—सामानाधिकरण्येन नीलोत्पलवत्, सन् घटः, सन् पटः, सन् हस्तीत्येवं सर्वत्र । तयोर्बुद्ध्योर्घटादिबुद्धिविषयोऽसत्, व्यभिचारा न तु सद्बुद्धिविषयोऽसत्; अव्यभिचारात्" इति । अत्र "सदसद्विभागे बुद्धितन्त्रे स्थिते सर्वत्र द्वे बुद्धी सर्वैरुपलभ्येते, सामानाधिकरण्येन नीलोत्पलवत्" इति भाष्यभाग एवं विवृतो रामरायेण—"बुद्धितन्त्रे, बुद्ध्यधीने-बुद्धेरव्यभिचारत्वसव्यभिचारत्वाभ्यां सदसद्विभागस्य

जातत्वादिति भावः। 'स्थिते' इत्यनन्तरं सतीति पूरणीयम्। नीलोत्पलवत् सामानाधिकरण्येन सन् घटः, सन् पटः, सन् हस्तीत्येवं सर्वत्र द्वे बुद्धी सर्वैरुपलभ्येत इत्यन्वयः। सामानाधिकरण्येन समानाश्रयवृत्तित्वेन, अभेदसम्बन्धेनेति यावत्। यथा नीलत्वोत्पलत्वयोः सामानाधिकरण्याद् नीलाभिन्नमुत्पलमिति शाब्दबोधः। एवं 'सन् घटः' इत्यादौ सत्त्वघटत्वयोः सामानाधिकरण्यात् सदभिन्नो घट इति वोधः। एवं नीलोत्पलयोरिव सद्घटयोः सामानाधिकरण्ये सति तद्बुद्ध्योरपि सामानाधिकरण्यं संभवति, एकस्मिन्नेव नीलोत्पलपदार्थे नीलबुद्धेरुत्पलबुद्धेश्च जातत्वात्। एकस्मिन्नेव विद्यमानघटे सद्बुद्धेर्घटबुद्धेश्च जातत्वात्" इति ( द्र० पृ० ३५ )।

अत्र भाष्ये सामानाधिकरण्येन नीलोत्पलवद् इति पाठस्य स्थाने "समानाधिकरणे, न नीलोत्पलवत्" इति पाठमङ्गीकृत्य आनन्दगिरिणा 'सन् घटः' इत्यादिकी प्रतीतिः "नीलम् उत्पलम्" इत्यादेः प्रतीतेर्भिन्नेति प्रतिपादितम्। तत् सयुक्तिकं निराचख्यौ रामरायकविः—"अत्र श्रीशाङ्करभाष्ये सामानाधिकरण्येनेति स्थले 'समानाधिकरणे न' इति पाठमाश्रित्य—सन् घटः, सन् पटः, सन् हस्तीत्येवं सर्वत्र समानाधिकरणे द्वे बुद्धी सर्वैरुपलभ्येते, न नीलोत्पलवदित्यन्वयं प्रकल्प्य पदयोः सामानाधिकरण्यं बुद्ध्योरुपचर्यते, सोऽयमिति सामानाधिकरण्यवत्। घटः सन्नित्यादिसामानाधिकरण्यमेकवस्तुनिष्ठम्, वस्तुभेदे घटपटयोरिव तदयोगादित्यर्थः। नीलमुत्पलमितिवद्धर्मधर्मिभावस्य सुवचत्वान्न वस्त्वैक्यविषयत्वमिति चेन्नेत्याह—न नीलोत्पलवदिति। नहि सामान्यविशेषयोर्भेदेऽभेदे च तद्भावः, भेदाभेदौ च विरुद्धौ। अतो जातिव्यक्त्योः सामानाधिकरण्यं नीलोत्पल इव न गौणम्; किन्तु व्यावृत्तमनुवृत्ते कल्पितमित्येकनिष्ठमित्यर्थः। सामान्यविशेषयोरुक्तन्यायं गुणगुण्यादावतिदिशति—एवमिति, इति व्याख्यातमानन्दगिरिणा।

अत्र विचार्यते—समानमधिकरणं ययोस्तयोर्भावः सामानाधिकरण्यमिति वस्तुद्वयनिष्ठमेव सर्वत्रापि सामानाधिकरण्यम्। तद्धि पदद्वयस्य विशेषणविशेष्यभावेनाभेदान्वये प्रयोजकम्—यथानीलमुत्पलमित्यत्र नीलभिन्नमुत्पलमिति शाब्दबोधाद् नीलत्वोत्पलत्वयोरेकाधिकरणवृत्तित्वेन तत्सामानाधिकरण्यस्य नीलोत्पलपदार्थद्वयनिष्ठत्वम्। पदयोः सामानाधिकरण्यं च पदार्थयोः सामानाधिकरण्याधीनम्; तच्च पदार्थयोः सुतरां भेदेऽभेदे वा न संभवति। अत एव 'घटः पटः' इति, 'घटो घटः' इति च प्रयोगाभावः। न चैवं गुणगुणिनोर्नीलोत्पलयोः सुतरां भेदात् कथं नीलोत्पलप्रयोग इति वाच्यम्, ततो नीलपदस्य नीलगुणवद्द्रव्ये शक्तत्वात्, "अथ त्रिषु द्रव्ये" इत्यमरशासनात्, लक्षणया वा तद्बोधात्। ततश्च "नीलगुणवद्द्रव्याभिन्नम् उत्पलम्" इति शाब्दबोधसिद्धिः।

एवं सति पदार्थयोः सामानाधिकरण्यं सर्वत्रापि सामान्यविशेषभावाधीनमेव। तथाहि नीलमुत्पलमित्यत्र नीलपदं नीलगुणवद्द्रव्यसामान्यवाचि; उत्पलपदं तु द्रव्यविशेषवाचीत्युभयोः सामानाधिकरण्यम्। गौर्मुण्ड इत्यत्र गोपदं गोत्वसामान्यवद् व्यक्तिमात्रवाचि; मुण्डपदं व्यक्तिविशेषवाचि। 'मृद्घटः' इत्यत्र मृत्पदं मृत्सामान्यवाचि, घटपदं कम्बुग्रीवाद्याकारवन्मृद्विशेषवाचि। अयं सर्प इत्यत इदं शब्दः पुरःस्थितवस्तुसामान्यवाची; सर्पशब्दस्तद्विशेषवाची। सन् घट इत्यत्र सच्छब्दः सत्तावद्वस्तुमात्रवाची, घटशब्दस्तद्विशेषवाची, यद्वा "मृद्घटः" इत्यादिषु कार्यकारणभावाधीनं सामानाधिकरण्यम्, अन्यत्र तु सामान्यविशेषभावाधीनमित्यस्तु, धर्मधर्मिभावगुणगुणिभावाद्यधीनं तु नास्ति सामानाधिकरण्यम्, धर्मधर्मिणोर्गुणगुणिनोश्च सुतरां भेदात्।

न चैवं कार्यकारणयोः सामान्यविशेषयोर्वा सुतरां भेद एवेति वाच्यम्, मृदादेः सकाशाद् घटादीनां सुतरां भेदादर्शनात्? नापि सुतरामभेदः, कार्यं कारणमित्यादिभेदव्यवहारलोपप्रसङ्गात्। तस्माद् भेदेनाभेदेन वा दुर्निरूपयोरेव पदार्थयोः सामानाधिकरण्यम्। इदं च सन् घट इत्यत्रेव नीलमुत्पलमित्यत्रापि तुल्यमेवेति कथमुच्यते न नीलोत्पलवदिति? न च सोऽयिमिति सामानाधिकरण्यवत् सन् घट इति सामानाधिकरण्यं सामान्यविशेषभावाद्यनाक्रान्तमेवेति वाच्यम्, सोऽयमित्यत्र तदिदमर्थयोः सामानाधिकरण्यासंभवेनैव भागत्यागलक्षणास्वीकारात्। नहि "सोऽयं देवदत्तः" इत्यत्र तदभिन्नोऽयं देवदत्त इति वाक्यार्थः; किन्तु देवदत्त इत्येव। सन् घट इत्यत्र नैवं सन्मात्रमित्यर्थः; किन्तु सदभिन्नो घट इत्येव। सत्त्वघटत्वयोस्तदिदमर्थयोरिवाविरोधात्। विरोधे सति हि लक्षणाश्रयणम्। ब्रह्म घट इत्युक्तौ हि विरोधस्फूर्तिः, तस्मान्नीलमुत्पलमितिवत् सन् घट इत्यत्रापि सामानाधिकरण्यम्, न तु सोऽयमितिवत्; सोऽयमित्यत्र सामानाधिकरण्यस्यैव बाधितत्वात्" इत्येवमन्या अपि युक्तीः प्रदर्श्य रामरायकविः—"तस्मात्सामानाधिकरण्येनेति पाठ एव समीचीनः, अन्वयक्लेशरहितश्च" इति उपसमाहार्षीत्। अत्र रामरायोक्तं युक्तमिति प्रतिभाति, यदि आनन्दगिर्युक्तः पाठ एवाभिमतोऽभविष्यत् भगवत्पादानां वाक्यरचनारीतिरन्यथाभविष्यत्—"द्वे वुद्धी सर्वैरुपलभ्येते समानाधिकरणे सन् घटः...." इत्येवम्; न तु पुनर्नीलोत्पलवत्" इत्यादिरूपेण। वस्तुतः 'न नीलोत्पलवत्' इति वाक्यांशयोजनमेवात्र आवश्यकं नाभविष्यत्।

अन्ते च अस्य श्लोकस्य श्रीरामानुजाचार्यकृता व्याख्या इत्थं खण्डिता रामरायकविना—"अत्राह रामानुजः—असतो देहस्य सद्भावो न विद्यते, सतश्चात्मनो नासद्भावः। उभयोर्देहात्मनोरुपलभ्यमानयोर्यथोपलब्धिस्तत्त्वदर्शिभिरन्तो दृष्टः—निर्णया-

न्तत्वान्निरूपणस्य। निर्णय इहान्तशब्देनोच्यते। देहस्याचिद्वस्तुनोऽसत्त्वमेव स्वरूपमात्मनश्चेतनस्य सत्त्वमेव स्वरूपमिति निर्णयो दृष्ट इत्यर्थः। विनाशस्वभावो ह्यसत्त्वमविनाशस्वभावश्च सत्त्वमिति।

अत्र विचार्यते—सत ईश्वरादुत्पन्नमिदं कार्यं जगत्सदेवेति सत्कार्यवादिनः स्वस्यासतो देहस्येत्यर्थवर्णनं स्वमतप्रच्युतिरूपदोषावहम्, परमतप्रवेशरूपदोषावहं च। असतो देहस्येति देहमानग्रहणं चायुक्तम्, शीतोष्णादेरपि तादृशस्य सत्त्वात्। मूले भाव इति श्रूयमाणस्य पदस्य सद्‍भाव इत्यर्थवर्णनं चायुक्तम्। तथा अभाव इत्यस्यासद्भाव इति च योग्यत्वमयोग्यत्वमिति चार्थान्तरप्रतीतेः। सद्भावः सत्ता, असद्भावोऽसत्ता इत्यर्थग्रहणस्य क्लिष्टत्वात्। सत आत्मन इत्यप्ययुक्तम्; स्वमते प्रकृतिपुरुषेश्वराणां त्रयाणां सत्यत्वाद् नित्यत्वाच्च। आत्मनां च बहुत्वादेकत्ववचनं चायुक्तम्. देहात्मनोरुपलभ्यमानत्वोक्तिश्चायुक्ता; देहस्योपलभ्यमानत्वेऽपि आत्मनः प्रमातुरुपलब्धृत्वेन उपलभ्यमानत्वाभावात्। अन्यथा उपलभ्यमानत्वे देहादिवदात्मनोऽपि जडत्वं स्यादेव। तत्त्वदर्शिभिरित्यस्य यथोपलब्धीति शेषपूरणं चायुक्तम्, शेषपूरणं विनैवार्थलाभात्। शेषपूरणस्य मूलकारासम्मतत्वात्। देहस्याचिद्वस्तुनोऽसत्त्वमेव स्वरूपमित्यप्ययुक्तम्, असत्त्वस्य गुणत्वेन स्वरूपत्वाभावात्। असत्त्वमेवेत्येवंकारेण स्वरूपान्तरनिषेधश्च संभवति; तच्चानिष्टम्, अचिद्रूपवस्तूनाम् अचित्स्वरूपत्वात्। तथा आत्मनः सत्त्वमेव स्वरूपमित्यप्ययुक्तम्, ज्ञानैकाकारत्वादात्मनः। विनाशस्वभावो ह्यसत्वमित्यप्ययुक्तम्; स्वमते सत्यत्वनित्यत्वयोर्भेदाद् जगदिदं सत्यमनित्यमिति स्वसिद्धान्तात्। अत एवाविनाशस्वभावश्च सत्त्वमित्यप्ययुक्तमिति।

प्रायः प्रधानेषु श्लोकेषु इयं व्याख्यारीतिरनुसृता रामरायकविना—प्रथमतः भगवत्पादमतानुसारेण श्लोकार्थनिरूपणम्, तन्मताविरोधेन तदनुक्तानामपि केषाञ्चिदर्थानां प्रतिपादनम्; ततो भाष्याशयस्य स्पष्टतया विवृतिः, अन्ते च श्रीरामानुजाचार्यव्याख्यादोषप्रदर्शनञ्चेति।

द्वित्रार्थप्रतिपादनोदाहरणमेकं प्रदर्श्यते—"कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः" इत्यादिश्लोकं शङ्करभगवत्पादाः—आत्मसमवेततया सर्वलोकप्रसिद्धे कर्मणि नदीकूलस्थेष्विव वृक्षेषु गतिप्रातिलोम्येन अकर्म कर्माभावम्, यथा भूतगत्यभावमिव वृक्षेषु यः पश्येत्, अकर्मणि च कार्यकरणव्यापारोपरमे कर्मवदात्मन्यध्यारोपिते, तूष्णीमकर्मा सुखमास इत्यहङ्काराभिसन्धिहेतुत्वात् तस्मिन्नकर्मणि च यः कर्म पश्येत्, स बुद्धिमान् पण्डितो मनुष्येषु स युक्तो योगी कृत्स्नकर्मकृच्च" इति व्याचख्युः।

श्रीरामरायकविः श्लोकस्यास्य अर्थचतुष्टयं प्रत्यपादयद् भाष्यव्याख्यानात् पूर्वम्—"कर्मण्यकर्मणीति कर्माकर्मणोर्विहितायाः सप्तमीविभक्तेर्वैषयिक आधारोऽर्थं इति केचित्, अभिन्यायकाधारोऽर्थ इत्यन्ये। तत्राद्यपक्षे श्लोकस्यायमर्थः—यः कर्मणि देहादिचेष्टाविषये, अकर्म कर्माभावमात्मानं पश्येत्, जानीयात्; अकर्मणि देहादिव्यापारोपरमे कर्माभावे कर्म च पश्येत्.... इत्यादि।

अयम्भावः—लोक आत्मानं कर्मत्वेन, देहादिव्यापारोपरमम् अकर्मत्वेन च गृह्णाति भ्रान्त्या, यथा मन्दान्धकारगतं गुणं सर्पत्वेन, सर्पं च गुणत्वेन गृह्णाति तिमिराद्युपहतदृष्टिः पुरुषस्तद्वत्। एवं स्थिते य आत्मानमात्मत्वेन देहादिव्यापारोपरमं कर्मत्वेम च गृह्णाति, स बुद्धिमत्त्वादिगुणशाली.......। न च कर्माभावस्य कथमात्मत्वमिति वाच्यम्; कल्पिताभावस्याधिष्ठानात्मकत्वात् कर्मण आत्मनि कल्पितत्वेन कर्माभाव आत्मैवेति, यथा गुणकल्पितसर्पाभावो गुण एव तद्वदिति...."।

अस्मिन्नेव पक्षे अर्थान्तरमवगम्यते—कर्मणि, कर्माश्रयत्वात् कर्तृत्वेनाज्ञजनाभिमते जीवे, अकर्म....निष्क्रियं ब्रह्म यः पश्येत्....."अयमात्मा ब्रह्म" इति श्रुतेरिति भावः। तथा अकर्मणि ब्रह्मणि विषये च कर्म जीवं पश्येत्, अन्यत्वेन, परोक्षत्वेन, ईश्वरत्वेन चाज्ञजनाभिमतं ब्रह्म स्वत्वेन, प्रत्यक्षत्वेन, प्रत्यक्त्वेन चात्मानं यः पश्यतीत्यर्थः "तत्त्वमसि" इति श्रुतेरिति भावः...."।

तृतीयोऽप्यर्थोऽत्रावगम्यते—कर्मणि कर्माश्रये देहादिसंघाते विषये, अकर्म, ब्रह्म, यः पश्येत्, संघातस्य ब्रह्मणि कल्पितत्वेन सङ्घातं ब्रह्माभिन्नं यः पश्यतीत्यर्थः कल्पितस्याधिष्ठानानतिरेकादिति भावः। अत एव "सर्वं खल्विदं ब्रह्म" इति श्रूयते, तथा कर्माण्युपरतव्यापारे च संघाते विषये कर्म, तूष्णीमासनरूपकर्माश्रयं यः पश्येत्; उपरतव्यापारमपि संघातं तूष्णीमासनरूपकर्माश्रयं यः पश्यतीत्यर्थः। संघातस्य निष्क्रियत्वायोगादिति भावः...."।

द्वितीयपक्षे तु ( अभिव्यापकाधारपक्षे ) श्लोकस्यायमर्थः—यः कर्मणि, कर्माश्रये कर्तरि, अकर्म, कर्मराहित्यं पश्येत्, अकर्मणि कर्माभावे देहादिचेष्टोपरमे कर्म कर्मत्वं च पश्येत्, स बुद्धिमत्त्वादिगुणशालीति"।

इत्थं स्वसिद्धान्तविरोध्यर्थचतुष्टयं प्रतिपाद्य ततो भाष्यविवृतिमकरोच्छ्रीरामरायकविः। एवं बृहत्प्रमाणसहस्रपुटसंमितेऽस्मिन्नतिविस्तृते व्याख्याने प्रतिपदं रामरायकवेः प्रतिभा, अद्वैते श्रद्धा, तदन्यमतेषु, विशेषतश्च श्रीमद्रामानुजीये विशिष्टाद्वैतेऽप्रामाणिकताभावश्च गोचरीभवन्ति।

श्रीशङ्कराशङ्करभाष्यविमर्शाख्ये विस्तृते (एकसप्तत्युत्तरशतत्रयबृहत्पत्रमिते) ग्रन्थे श्रीरामरायकविना विशिष्टाद्वैतिभिरद्वैतविषय आपादितानां दोषाणां खण्डनपूर्वकम् अद्वैतसिद्धान्तविषया नितरां सुलभया सम्यक्प्रतिपादिताः। तत्र द्वित्रा उदाहरणतया निरूप्यन्ते। 'अथातो ब्रह्मजिज्ञासा' इतिसूत्रेऽथशब्दस्य श्रीशङ्करभगवत्पादोक्तरीत्या 'साधनचतुष्टयसम्पत्त्यनन्तरम्' इत्यर्थो वा, उत श्रीरामानुजाचार्योक्तरीत्या पूर्वमीमांसाध्ययनानन्तरमित्यर्थो वेति सविस्तरं विमृशता रामरायकविना एवं प्रतिपादितम्—"अत्र 'अथ' शब्दस्यानन्तर्यमर्थं इति सम्पन्नम्; परन्तु शमादिसाधनचतुष्टयसंपत्त्यानन्तर्यमिति शङ्करः; धर्मशास्त्राध्ययनानन्तर्यमिति रामानुजः। तत्रान्यतमस्य समीचीनत्वनिर्णयाय मयायं विचारो विधीयते। तथाहि—कर्मज्ञानं विना ब्रह्मणो ज्ञातुमशक्यत्वाद् ब्रह्मजिज्ञासुना तावत्कर्मज्ञानाय पूर्वमीमांसाध्ययनं कर्तव्यमिति किं रामानुजस्याशयः? किं वा अज्ञातकर्मणः पुरुषस्य ब्रह्मजिज्ञासोरपि ब्रह्मज्ञाने नास्त्यधिकार इति ब्रह्मज्ञानसिद्ध्यर्थकर्मज्ञानाय पूर्वमीमांसाध्ययनं कर्तव्यमिति? यद्वा पूर्वमीमांसान्यायानामेवोत्तरमीमासायां दर्शनात् तदवगमाय पूर्वमीमांसाध्ययनं कर्तव्यमुत्तरमीमांसाध्ययनं चिकीर्षुणेति? अथवा कर्मभिः शुद्धचित्तस्यैव ब्रह्ममीमांसायामधिकार इति कृत्वा कर्मकरणार्थं कर्मज्ञानाय पूर्वमीमांसाध्ययनं कर्तव्यं ब्रह्ममीमांसुनेति विकल्प्य श्रुतियुक्तिपुरःसरं सर्वानपि विकल्पान् निराकृत्य श्रीशाङ्करं व्याख्यानं समर्थितं रामरायकविना (पृ० ८)।

'नेह नानास्ति किञ्चन' इत्यादिश्रुते रामानुजाचार्योक्तार्थखण्डनप्रसङ्गे ब्रह्मणोऽचिद्रूपतामतमित्थं खण्डयामास रामरायकविः—"योऽत्राकारि सुदर्शनाचार्येण कोलाहलस्तत्र प्रति वक्तव्यम्। तथाहि सुदर्शनः—सद्गुणस्य दुर्गुणेन जगता सहैक्यं श्रुतिर्न प्रतिपादयति, व्याहतत्वादित्यवोचत्। तत्सत्यम्—अत एव ब्रह्मपरिणामभूतं जगदिति तव वादोऽयुक्तः, परिणामपरिणामिनोर्हि सालक्षण्येन भवितव्यम्, मृद्घटयोस्तथा दर्शनात्। मम मते तु सद्गुणस्य ब्रह्मणो दुर्गुणजगदाकारविवर्तः संभवत्येव—रज्जुसर्पयोरिव। विवर्तवादे कार्यकारणयोः सालक्षण्यानपेक्षणात्, नन्वपारमर्थिकेनापि हेयेन जगता सह ब्रह्मण सम्बन्धो हेयप्रत्यनीकस्य नोपपद्यत इति चेत्, सत्यम्—तवैव मते हेयेन जगता सह ब्रह्मणः सम्बन्धः; सूक्ष्मचिदचिद्विशिष्टं ब्रह्मैव स्थूलचिदचिद्विशिष्टमिति त्वन्मतात्, मन्मते तु सम्बन्धिजगतोऽपारमार्थिकत्वात् सम्बन्धोऽप्यपारमार्थिक एवेति। न हि कपेरैन्द्रजालिकत्वेन मिथ्यात्वे तत्संयोगः सत्यो भवेद्वृक्षस्य। न चैवं सम्बन्धसम्बन्धिनोर्मिथ्यात्वे नेह नानेति तन्निषेधो न युक्त इति वाच्यम्, मिथ्यात्वादेव तन्निषेधो युज्यते। न हि सत्यं वस्तु निषेद्धुं शक्यते; भ्रान्त्या प्रतीयमानस्य जगतस्तत्सम्बन्धस्य च ब्रह्मणि निषेधः क्रियते खलु श्रुत्या, सत्यस्यैवाप्रसक्तस्यापि निषेधायोगात्। तस्माच्छुक्तिरजत-

योरिव ब्रह्मजगतोरैक्यं श्रुतिः प्रतिपादयेदेव इत्यादिना।

एवमन्यत्र—विशिष्टाद्वैतोपष्टम्भकतया गृहीतं विष्णुपुराणमपि निर्विशेषब्रह्मप्रतिपादनपरमेवेति षड्विधतात्पर्यलिङ्गनिरूपणपूर्वकं प्रत्यपादि रामरायकविना अतीव विस्तरेण (पृ० २४०-२४७)। पुराणान्तराणि, भारतमप्यद्वैतपरमेवेत्युपपादितम्। एवमयं शङ्कराशङ्करभाष्यविमर्शो न केवलमद्वैतसिद्धान्तानाम्, विशिष्टाद्वैतसिद्धान्तानामपि ज्ञाने नितरामुपकुरुते।

श्रीरामरायकविः ईश-केन-कठ-प्रश्न-मुण्ड-माण्डूक्य-तैत्तिरीय-छान्दोग्य-बृहदारण्यक-ऐतरेय-कैवल्य-श्वेताश्वतरोपनिषदां सारं नवत्युत्तरसप्तशत्या श्लोकानां शार्दूलविक्रीडितवृत्तोपनिबद्धानां संगृह्य तेषां विस्तृतां व्याख्यामप्यरचयत्। अस्यैव च ग्रन्थस्य नाम वेदान्तमुक्तावलीति। द्वादशानामुपनिषदां साररूपत्वात् 'दिनकरः' इत्यपि नामान्तरं व्यधायि रामरायकविना।

अत्र केचित् श्लोका उदाहरणरूपेण उद्ध्रियन्ते—ईशोपनिषत्सम्बद्धोऽयं श्लोकः "तदेजति तन्नैजति" इत्यादीनां पञ्चम-षष्ठ-सप्तममन्त्राणामर्थं संगृह्णाति—

नेदीयो विदुषां विभात्यविदुषां दूरस्यवद्यत्पुनः
सर्वान्तर्बहिरास्थितं तदयते भूतेषु सर्वेषु यः।
भूतान्यात्मनि तत्र पश्यति च यो भूतानि यस्याप्यसा-
वात्मैवास्ति यदा तदास्य विदुषः कः शोकमोहोदयः॥ (१-३)

केनोपनिषत्प्रसिद्धा यक्षरूपधारिणो ब्रह्मणः कथा एवं सन्दृब्धा रामरायकविना—

यस्यानुग्रहतो विजिग्युरसुरानिन्द्रादयो देवताः
शक्नोति स्म तृणं न दग्धुमनलः क्षेप्तुं च नैवानिलः।
यस्यानुग्रहवर्जनादधिगतं देवैरुमाभाषिता-
द्यक्षाकारधरं च यल्लसति तद्विद्योतनं विद्युताम्॥ (१-११)

कठोपनिषद्गतानां "नाविरतो दुश्चरितात्" इत्यादीनां मन्त्राणामर्थः संगृहीतोऽस्मिन् श्लोके—

योऽशान्तो न समाहितो न विरतो दुष्कर्मणोऽशान्तहृ-
न्नात्मार्थी न परात्मवित्स पुरुषं जानातु तं वा कथम्।
सर्वं यस्य जगत्प्रयात्यशनतां ब्रह्मेन्द्ररुद्रादिकं
स्तम्बान्तं च तथोपसेचनपदं मृत्युश्च यस्याञ्चति॥ (१-२४)

प्रश्नोपनिषद्गतस्य "अरा इव रथनाभौ" इत्यादिमन्त्रद्वयस्यार्थं इत्थं संदृब्धो रामरायकविना—

प्राणे सर्वमिदं प्रतिष्ठितमरा नाभौ रथाङ्गस्य वा
वेदानां त्रितयं कृतं च मुखजः प्राणस्तथा क्षत्रियः।
प्राणोऽयं हि विराट् पितुश्चरति वा गर्भे रसात्माशिशुः
मातुश्च प्रतिजायते सुतमयोऽमुष्मै बलिं तन्वते॥ (१-६५)

मुण्डकोपनिषद्गतस्य "गताः कलाः पञ्चदश प्रतिष्ठाः" इत्यादेः, "यथा नद्यः स्यन्दमानाः समुद्रे" इत्यादेश्च मन्त्रस्यार्थं दृष्टान्तान्तरप्रदर्शनपूर्वकमेवं समगृह्लाद् रामरायकविः—

कुण्डोपाधिलयान्महाभ्रमयते कुण्डाम्बरं चाननं
प्रत्यास्यं मुकुरक्षयाद् बृहदसौ लिङ्गक्षयादेति ना।
सिन्धुं प्राप्य यथा नदी कलयते निर्नामरूपैकतां
तेनैवं बृहदेत्य ना भवति वै निर्नामरूपो बृहत्॥ (१-१२१)

माण्डूक्यान्तर्गतस्य "नान्तःप्रज्ञम्" इत्यादेर्मन्त्रस्यार्थं इत्थं संगृहीतो रामरायकविना—

नान्तर्यस्य बहिर्न नाप्युभयतः प्रज्ञा न च ज्ञातृता
न प्रज्ञानघनत्वमस्ति जडता नो नेन्द्रियग्राह्यता।
तच्चाचिन्त्यमशब्दगम्यमपदं चैकात्मधीसारम-
द्वैतं शान्तमजं बृहत्तु चरमो ज्ञेयः स आत्मा स हि॥ (१-१२७)

"न कर्मणा न प्रजया" इत्यादेस्तैत्तिरीयोपनिषदन्तर्गतस्य मन्त्रस्यार्थं एवं श्लोके संदृब्धः कविना—

ब्रह्माभिन्नपरात्मतत्त्वविषया नेयं स्मृतिः कर्मणा
लभ्या न प्रजया धनेन न तथा त्यागेन लभ्या बुधैः।
त्यक्त्वा सर्वमिदं जितेन्द्रियचया एकाग्रचित्ता बुधा
ज्योतिः स्वात्मनि संस्थितं परतरं स्वर्गाद्रियन्ते बृहत्॥ (१-२०४)

"वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इत्यादिप्रघट्टके छान्दोग्योपनिषदि प्रतिपादितमर्थमेवं समगृह्लद् रामरायकविः—

यस्य ज्ञानवशाद्भवेदधिगतं सर्वं यदप्यश्रुतं
यच्चादृष्टमतर्कितं च मनसा ज्ञेयं तदेकं तु सत्।
मृद्वस्तु प्रतिबोधतो हि सकलं मृत्कार्यमाज्ञायते
वागालम्बनमेव नाम विकृतिर्मिथ्यैव सत्या तु मृत्॥ (१-३३५)

बृहदारण्यके प्रसिद्धम्—"न वा अरे पत्युः कामाय पतिः प्रियो भवति" इत्याद्यर्थमित्थं न्यबध्नात् कविः—

पूर्णा वित्तगणैरियं वसुमति सर्वाऽपि पुंसोऽमृतं
शक्नोत्येव न दातुमेत्य विरतिं स्वात्मानमेवाश्रयेत् ।
पत्युः कामकृते पतिः प्रियतमो नैव स्त्रिया आत्मनः
कामायैव पतिः प्रियः सुतधनक्षोण्यादि विद्यादिति ॥ (२-९५)

"कोऽयमात्मेति वयमुपास्महे, कतरः स आत्मा—येन पश्यति येन वा शृणोति" इत्याद्यैतरेयोपनिषद्गतो मन्त्रोऽर्थत एवमनूदितो रामरायकविना—

शब्दं येन शृणोति जिघ्रति यतो गन्धं च येनेक्षते
रूपं येन वचांसि वक्ति च रसं जानाति येनैष ना ।
तत्प्रज्ञानमुदीर्यते श्रुतिगणैरात्मेति संज्ञानवि-
ज्ज्ञानाज्ञानमनोधृतिक्रतुमतिप्रज्ञाभिधानं च तत् ॥

कैवल्योपनिषन्मन्त्रार्थमेवं जग्रन्थ रामरायकविः—

स्वस्यान्तःकरणेऽरणौ तमधरे कृत्वोत्तरं चारणिं
वेदादिं बृहदस्म्यहं तदिति निध्यानात्मकं मन्थनम् ।
आधायात्र ततः प्रभूतपरमब्रह्मात्मसाक्षात्कृति-
ज्ञानात्मज्वलनेन संसृतिमयं पाशं दहेत्पण्डितः ॥ (२-२२०)

श्वेताश्वतरोपनिषद्गतस्य "या ते रुद्र शिवा तनूः" इत्यस्य मन्त्रस्य श्लोकबन्धोऽयं रामरायकविकृतः—

या ते रुद्र शिवा तनूर्विजयतेऽघोराघहृत्काशिनी
तन्वास्मान् गिरिशन्त संकलय भो आनन्दमय्या तया ।
क्षेप्तुं यामिषुमीशितः कलयसे हस्ते शिवा तां कुरु
त्वं मा पीडय भो गिरित्र पुरुषं कृत्स्नं जगच्चात्मना ॥ (२-३२१)

अन्ते च षड्भिः श्लोकैरद्वैतस्य प्रशंसां कृत्वा श्रीमान् रामरामकविर्ग्रन्थारम्भे द्वितीयश्लोकेन—

भित्त्वा तमोऽखिलपदार्थविभासकः सन्
पद्मान्तरङ्गसुविकासविधायको यः ।
ब्रह्मास्पदाधिगतये बुधमण्डलस्य
द्वारायते दिनकरस्य गतिर्ममास्तु ॥

इति श्लेषेण सूचितदिनकराभिधानां वेदान्तमुक्तावलीम्—

द्वादशात्मा दिनकरो निरामयमयं पदम् ।
स्वभक्तानां दिशत्येव समस्तार्थप्रदायकः ॥

इति श्लोकेनोपसमाहार्षीत् ।

श्रीरामरायकविना विरचितेषु वेदान्तप्रकरणग्रन्थेषु पद्यरूपाः शङ्करभगवत्पादानां शतश्लोक्यादीन् स्मारयन्ति । केचित् संवादरूपाः केचिच्च गद्यरूपा अद्वैतसिद्धान्तं नितरां स्पष्टमुपपादयन्ति ।

लोकायतादियोगान्तमतखण्डनमिति ग्रन्थे चार्वाक-माध्यमिक-योगाचार-सौत्रान्तिक-वैभाषिक-आर्हत-रामानुज-द्वैत-नकुलीश-शैव-प्रत्यभिज्ञा - रसेश्वर-काणाद- अक्षपाद-जैमिनि-पाणिनि-सांख्य-पातञ्जलमतानि खण्डितानि ।

शारीरकचतुःसूत्रीविचारे शाङ्करमताविरोधेन चतुःसूत्री व्याख्याता । तत्प्रसङ्गे—'अतः'शब्दस्यैकशतमर्थान् प्रत्यपादयद् रामरायकविः । एवं श्रीरामरायकविना कृताः सर्वेऽप्यद्वैतसिद्धान्तसंबद्धा ग्रन्थाः, ते व्याख्यारूपा वा, वादग्रन्थरूपा वा, प्रकरणग्रन्थरूपा वा भवन्तु, अद्वैततत्त्वज्ञाने सम्यगुपकुर्वन्ति तज्जिज्ञासून् ।

रामरायकविः सिद्धान्तकौमुद्याः सरलां कामपि टीकां 'शरद्रात्रिः' नाम्नीमरचयत् । तदात्वे उपलभ्यमाना एकैकव्याख्या तत्त्वबोधिनी मन्दबुद्धीनां नैवातितरामुपकर्त्रीति धिया रचितेयं व्याख्येति ग्रन्थप्रारम्भेऽकथयत् कविः—

ज्ञानेन्द्रवाणीकृतया तत्त्वबोधिन्यभिख्यया ।
व्याख्यया कौमुदी मन्दबुद्ध्यामन्दसुदुर्ग्रहा ॥
जिज्ञासितव्याकरणामन्दं मन्दधियां तथा ।
सुखबोधाय कौमुद्याः शरद्रात्रिर्विधीयते ॥

इत्यादिना यद्ययं कविर्वासुदेवदीक्षितविरचितां बालमनोरमाम् अद्रक्षत, व्याख्याया अस्या रचनां नाकरिष्यत्, यतोऽत्रत्या विषयप्रतिपादनशैली तादृङ्मनोहरा, विपुला वा नास्ति । द्वित्रस्थानानि पश्यामः—

'वासः क्षौमम्' इत्यादौ 'कुप्वोः ≍क≍पौ च" (८-३-३७) इति सूत्रेण विसर्जनीयस्य जिह्वामूलीयं भवति वा, उत "शर्परे विसर्जनीयः" (८-३-३५) इति सूत्रेण विसर्जनीय एव भवति वा इत्याशङ्कायाम्, "येन नाप्राप्त" इति न्यायेन "विसर्जनीयस्य सः" (८-३-३४) इत्यस्यापवादोऽयम्, न तु शर्परे विसर्जनीय इत्यस्य । तेन 'वासः क्षौमम्'

इत्यादौ विसर्ग एवेति निरधारि भट्टोजिदीक्षितेन। तद्व्याख्यावसरे रामरायकविर्विस्तृतं विचारमकरोत्। "येन नाप्राप्तिन्यायेनेति—"येन नाप्राप्तौ ( प्राप्ते इति भवितव्यम् ) यो विधिरारभ्यते, स तस्यैव ( तस्य ) बाधको भवति" इति न्यायेन। निरवकाशमूलकः तक्रकौण्डिन्यन्यायमूलकश्चेति अपवादो द्विविधः। "सर्वेभ्यो ब्राह्मणेभ्यो दधि दापयति ( दीयताम् ) तक्रं कौण्डिन्याय" इत्ययमेव येन नाप्राप्तिन्यायः। येन उत्सर्गशास्त्रेण "विसर्जनीयस्य सः" इत्यादिना सत्वादेर्नाप्राप्तावावश्यकप्राप्तौ सत्यां 'घनाघनः क्षोभणः' इत्यादिस्थल इत्यर्थः, यो विधिः कुप्वोः ≍क≍पौ च इत्यादिरारभ्यते, स तस्यैवोत्सर्गशास्त्रस्य बाधकः, न तु पुनस्तदन्यस्य "शर्परे विसर्जनीयः" इत्यस्य विशेषशास्त्रस्येति तदर्थः।

अयम्भावः—सामान्यशास्त्रम्, विशेषशास्त्रम्, अपवादशास्त्रं च यत्र लक्ष्ये प्रवर्तते, तत्र विशेषशास्त्रेणैव सामान्यापवादशास्त्रं बाध्यते। यत्र सामान्यमपवादश्च प्रवर्तते, तत् सामान्यमपवाद्यते अपवादशास्त्रेण। तेन सामान्यशास्त्रबाधनार्थं प्रवृत्त्या चरितार्थत्वेन दुर्बलमपवादशास्त्रं विशेषशास्त्रेण बाध्यत इति।

ननु विशेषशास्त्रमपवादशास्त्रमेवेति विशेषापवादयोः को भेद इति चेदुच्यते—निरवकाशमूलकोऽपवादो विशेषशास्त्रमिति, तक्रकौण्डिन्यन्यायमूलकोऽपवादोऽपवादशास्त्रमिति च बुद्ध्या मयात्र व्यवहृतम्, खरि परतः, शर्परकखरि परतः, कुप्वोः परतश्च विहितं विधित्रयम्। तत्र प्रथमं प्रति द्वितीयतृतीयशास्त्रे विशेषशास्त्रे एव। द्वितीयतृतीययोरेकं प्रत्यपरं विशेषशास्त्रम्। न तत्रेदं विशेषशास्त्रमिति निर्णेतुं शक्यते, शर्परकेऽपि सरि कुप्वोर्विशेषत्वात्, कुप्वोरपि शर्परकखरो विशेषत्वात्, अतः केन विशेषशास्त्रेण किं विशेषशास्त्रं बाध्यत इति सन्देहनिबर्हणार्थेयं न्यायमूला परिभाषा। कुप्वोरिति सूत्रं खरि परतो जायमानस्य विसर्जनीयसस्य बाधनार्थमारब्धं वा, उत शर्परकखरि परतः जायमानविसर्जनीयबाधनार्थमिति विकल्प्य तदुभयोर्मध्ये यत्सामान्यं विसर्जनीमसत्वम्, तस्य प्रचुरत्वेन तद्बाधनार्थमेव, न त्वप्रचुरशर्परे विसर्जनीयस्येति बोध्योऽत्र न्यायः। तेन यद्बाधनार्थं यमपवादशास्त्रं प्रवृत्तम्, तद्बाधने तस्य चरितार्थत्वेन दुर्बलं तदपवादशास्त्रं सबलेनान्येनापवादशास्त्रेण बाध्यत इति।

नन्वयं न्यायस्तत्रापि संयोज्य एव। तथा हि 'शर्परे विसर्जनीयः' इति सूत्रं विसर्जनीयसत्वबाधनार्थं प्रवृत्तं वा, उत कुप्वोः परतः≍क≍प बाधनार्थमिति। विकल्प्य-पूर्वस्य प्रचुरत्वेन तद्बाधनार्थमेवेति तत्र तच्चरितार्थमन्येन कुप्वोरिति सूत्रेण सबलेन तद्बाध्यत इति चेन्मैवम्, कुप्वोरपि शर्परत्वे विसर्गस्य भाव्यत्वेन शर्परे सूत्रस्य विशेषेणापवादत्वात्। खर्दृष्ट्या कुप्वोर्विशेषत्वेऽपि शर्परकखर्दृष्ट्या न विशेषत्वम्। शर्परकखरन्तर्गत-कुप्वोरपि विसर्गस्य भाव्यत्वात् अशर्परकखरन्तःपाति कुप्वोरेव हि≍क≍प प्राप्तिः।

तस्माद् विसर्जनीयसस्य कुप्वोरिति विशेषशास्त्रम्। तस्य तु शर्पर इत्येतद्विशेषशास्त्र-मित्ययं न्याय इति चेत्, तथास्तु" इति।

रामरायकवेः सर्वोऽयं श्रमो निरर्थक इति प्रतिभाति। येन नाप्राप्तपरिभाषा ह्यपवादशास्त्रस्वरूपं निरूपयितुं प्रवृत्ता, तदनुसारेण 'कुप्वो≍क≍पौ' इत्यस्य "विसर्जनीयस्य सः" इति सूत्रं प्रत्येवापवादता, न पुनः "शर्परे विसर्जनीयः" इति सूत्रं प्रतीत्येव सिद्धान्तकौमुद्यां प्रतिपिपादयिषितोऽर्थः। "राम≍करोति"; इत्यादिषु "कुप्वो≍क≍पौ" इति सूत्रं प्रवृत्तिस्थानेषु शर्परसूत्रस्य नाप्राप्ताभावात्। अपवादत्वाभावेऽपि परत्वात् "घनाघनः क्षोभणः" इत्यादिषु शर्परसूत्रं बाधित्वा परत्वात् कुप्वोः सूत्रं कुतो न प्रवर्तते इन्यत्र काशिकादिषु "सूचितेन पूर्वत्रासिद्धे नास्ति विप्रतिषेधः" इत्यादि समाधानेनैवालम्। अतो निरर्थकैवेयमपवाद-विशेषशास्त्रभेदचिन्ता।

कारकप्रकरणे "इत्थं भूतलक्षणे" इति सूत्रं व्याचक्षाणेन रामरायकविना इत्थं प्रतिपादितम्—"इत्थं भूतेति लुप्तषष्ठीकं पदम्। लक्षणे लक्ष्यलक्षणभावरूपसम्बन्धे द्योत्ये सतीत्त्थंभूतस्य तृतीया स्यात्। इत्थंभूत इत्यस्य कञ्चित् प्रकारं प्राप्त इत्यर्थः। यथा 'जटाभिस्तापसः' केशा एव निरन्तराभिषवणेन कञ्चित् प्रकारं प्राप्य जटात्वेन कथ्यन्त इति जटा इत्थम्भूताः। तासां तापसस्य च लक्ष्यलक्षणभावः सम्बन्धः। तदेव दर्शयति—जटाज्ञाप्यतापसत्वविशिष्ट इति"।

तदिदं सूत्राक्षराननुगुणं सकलव्याख्याविरुद्धं च, "इमं प्रकारं प्राप्तस्य, लक्षणे ज्ञापके (सम्बन्धे द्योत्ये) तादृशज्ञापकस्य तृतीया स्यादित्येव सूत्रार्थः। यतित्वप्रकारं प्राप्तस्य यतित्वद्योतिका जटाः। अतो जटाशब्दस्य तृतीया, अतश्च इत्थम्भूतत्वं न जटानाम्; परन्तु तापसस्यैव, "भस्मना शैवः", "ऊर्ध्वपुण्ड्रैर्वैष्णवः" इत्यादिष्वपि शैवत्ववैष्णवत्व-प्रकारं प्राप्तानां सूचकानां भस्मोर्ध्वपुण्ड्रादिशब्दानां तृतीयायां प्रयोग एवमेव साधनीयः। एवं सत्स्वपि केषुचिद्दोषेषु रामरायकविकृता 'शरद्रात्रिः' तत्त्वबोधिन्याद्यपेक्षया सुलभया पठितृसुलभग्राह्यया च रीत्या प्रावर्ततेति वक्तुं शक्यते।

तदेवं विरचितपरः शतग्रन्थः, विशेषतश्च वेदान्ते कृतभूरिपरिश्रमः श्रीमान् रामरायकविर्न केवलमान्ध्रदेशे, सर्वेऽपि भारतेऽङ्गुलीपरिगणनीयेषु, एकोनविंशति-विंशतितमशताब्दीसम्बद्धेषु विद्वत्कवितल्लजेषु परिगणनामर्हतीति शम्।



# अग्निपुराणेऽगदतन्त्रम्

**डॉ० पारसनाथद्विवेदी**

**साहित्य-संस्कृति-संकायाध्यक्षः,**

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

वाराणसी

❀ ❀ ❀

आयुर्वेदस्याष्टाङ्गेष्वगदतन्त्रमप्येकमङ्गमस्ति, यस्योल्लेखः सुश्रुतेन कृतः। सुश्रुतानुसारेण सर्पकीटलूतामूषकादिदष्टविषलक्षणव्यञ्जकं विविधविषजन्यविकृत्युपशमनार्थमुपायं च यत्र वर्ण्यते तदगदतन्त्रमिति।[1] अग्निपुराणे यद्यप्यगदतन्त्रमिति नाम नोल्लिखितम्, तथापि दष्टचिकित्सा-विषहृन्मन्त्रौषधादीनां चर्चा तत्रोपलभ्यते। दष्टचिकित्सा विषविद्या विषशास्त्रमपीदमुच्यते।

विषं नाम शरीरप्रवेशानन्तरमन्तर्ग्रहणद्वारा श्वसनक्रियाद्वारा वा शरीरान्तर्गतं हानिकारकपरिणामजनकं द्रव्यमिति। वस्तुतस्तु मात्राधिक्येनौषधिरपि विषरूपो जायते तथा न्यूनमात्रायां विषमप्यौषधिरूपं भवति। तद्विषं संक्षारकं क्षोभकं विक्षिप्तकं तदितरच्चेति चतुर्विधं भवति। तत्र क्षोभकान्तर्गतं वनस्पतीनां विषं स्थावरविषं सर्पवृश्चिकादीनाञ्च विषं जैविकविषं प्राणिविषं वोच्यते। तत्र प्राणिविषं जङ्गमविषनाम्नाऽपि प्रथितम्। एवं चाग्निपुराण-सुश्रुतादिमतानुसारेण द्विविधं विषम्—स्थावरं जङ्गमञ्चेति।[2] तत्र स्थावरविषमूर्ध्वगामि जङ्गमविषञ्चाधोगामि च। तत्र स्थावरं विषं जङ्गमविषं हन्ति, जङ्गमं विषं च स्थावरविषं हन्ति। यथा चोक्तं चरकसंहितायां चरकेण—

**तस्माद् दंष्ट्राविषं मौलं हन्ति मौलं च दंष्ट्रजम्॥ इति।**

---

१. अगदतन्त्रं नाम सर्पकीटलूतामूषकादिदष्टविषव्यञ्जनार्थं
विविधविषसंयोगोपशमनार्थं च। (सुश्रुते सूत्रस्थानम्–१।१४)

२. (क) ..................................द्विविधं विषमुच्यते।
जङ्गमं सर्पमूपादि शृङ्गचादि स्थावरं विषम्॥ (अग्निपुराणम्–२९५।२)

(ख) स्थावरं जङ्गमञ्चैव द्विविधं विषमुच्यते॥ (सुश्रुतकल्पस्थानीयम्–२)

(ग) स्थावरं जङ्गमञ्चैव द्विविधं विषमुच्यते। (माधवनिदाने, पृ० ३७५.१)

अथर्ववेदसंहितायामप्युक्तम्—

**चक्षुषा ते चक्षुर्हन्मि विषेण हन्मि ते विषम्[1]।**

महाभारते चाप्युक्तम्—

**हृतं सर्पविषेणैव स्थावरं जङ्गमेन तु[2]।**

एवमनुश्रूयते यत् समुद्रमन्थनसमये भगवता महादेवेन समुद्रमन्थनोद्भवं हलाहल-विषं पीतम्, किन्तु कण्ठे वेष्टितस्य सर्पस्य विषप्रभावादेव तद्विषमधो न गतम्। तस्य प्रभावः शिरसि जातः; किन्तु गङ्गाया शैत्यजलधारापातेन तस्यौष्ण्यमपाकृतम्। ललाटस्थ-चन्द्रशीतरश्मिप्रभावात्तत्कालुष्यमपि गतम्। एवमेवैकदा दुर्योधनेन भीमं हन्तुं भोजने विषं दत्तम्। मूर्च्छायां संजातायामसौ नद्यां पातितः। तत्र सर्पेण दष्टस्य तस्य काल-कूटविषं जङ्गमसर्पविषप्रभावान्नष्टम्[3]। यतो हि जङ्गमविषं स्थावरं विषं हन्तीति श्रुतिरत एवाहिफेनभक्षकं जनं जङ्गमं सर्पविषं न प्रभावयति।

जङ्गमेषु विषेषु सर्पविषं मुख्यमस्ति। अत एवाग्निपुराणे सर्पाणां जातिभेदाः, दंशलक्षणानि, दष्टचिकित्सा, विषहृन्मन्त्रौषधयश्च विशेषरूपेण विवेचिताः सन्ति। सर्पदंशेन समुत्पन्ना वेगाः, लक्षणानि, चिकित्सासु मन्त्रप्रयोगाद्भिन्नान्यगदान्यपि निरूपितानि सन्ति।

सरसविषं स्वच्छमम्बरवर्णं पारदर्शि द्रवं चास्ति। शुष्के सति तद्विषं पीतं कणिकामयं च भवति, यस्य क्रियाशीलताऽनेकवर्षाणि यावत्तिष्ठति। विषस्य मूर्च्छाद्याः सप्त वेगाः भवन्ति, विषेण शरीरे यत्परिवर्त्तनमावेशो वा जायते, तद्वेगशब्देनोच्यते। धातोर्धात्वन्तरगमनाद् विषरोगाः सप्तधा भवन्ति। विषदंशः प्रथमं ललाटं ततो नेत्रं ततो मुखं मुखाच्च नाडीं प्रविश्य धातून् प्राप्नोति[4]। विषं मारकं कथं भवति? तदुच्यते यद् विषस्य लघुरूक्षाशुविशदव्यवायितीक्ष्णविकासिसूक्ष्मोष्णानिर्देश्यरसेति दश गुणाः स्मृताः[5], ये चौजसो दशगुणव्यतिरिक्ता भवन्ति। अत एव विषं मारकं भवति।

---

१. अथर्ववेदसंहिता—५।१३।४; २. महाभारते, आदिपर्वणि—१२७।५७।

३. महाभारतम्, आदिपर्वणि—१२७।५३-५९।

४. विषदंशो ललाटं यात्यतो नेत्रं ततो मुखम्।
आस्याच्च वचनीनाड्यौ धातून् प्राप्नोति हि क्रमात्॥ ( अग्निपुराणम्—२९४।४१ )

५. लघुरुक्षमाशु विशदं व्यवायी तीक्ष्णं विकासी सूक्ष्मं च।
उष्णमनिर्देश्यरसं दशगुणमुक्तं विषं तज्ज्ञैः॥ ( माधवनिदानटीका )

लोकेषु यत् सर्पति तत् सर्पपदेनोपतिष्ठते[1]। सर्पशरीरं दीर्घं पुच्छं च लघु भवति, अङ्गानि न सन्ति। स उरसा गच्छतीत्युरगपदेनाप्यभिधीयते। शरीरस्य पृष्ठभागे निकासच्छिद्रमेकं भवति। निकासच्छिद्रस्य पृष्ठभागं पुच्छमभिधीयते। स्थलीयसर्पाणां पुच्छानि वर्तुलानि समुद्रीयसर्पाणां च विततानि भवन्ति। सर्पशरीरं शल्कैराच्छादितं भवति। शिरस्यक्षिद्वयं नासिकाछिद्रद्वयं च भवति। श्रोत्रे न भवतः। श्रोत्रकार्यं चक्षुर्भ्यां करोत्यत एव चक्षुःश्रवा इत्युच्यते। सर्पाणामक्षीणि पारदर्शीनि भवन्ति। नेत्रतारे वर्तुले दीर्घे च भवतः। अक्षिषु पक्ष्माणि न भवन्त्यत एवाक्षोणि सदैवोन्मिषितानि सन्ति। अधोभागस्थजम्भेऽस्थिद्वयमग्रतो नम्यं स्नायुनद्धं च भवति। ऊर्ध्वस्थजम्भेनाधोभागस्थजम्भस्य सन्धिर्न सुष्ठु भवति, येन सर्पस्य मुखमधिकं विस्तृतं भवति। जम्भेषु तालुषु च सूक्ष्माः शिताः तीक्ष्णाः पश्चान्नम्या दन्ता भवन्ति। नम्यदन्तैराखेटं गृह्णाति सः। ऊर्ध्वप्रान्तस्थदन्ताः परिवर्त्तिता विषदन्ता उच्यन्ते। यदि विषदन्ता भग्नाः स्युस्तदा पुनरपि जायन्ते। विषदन्ता विंशतिदिनानन्तरं षट्सप्ताहाभ्यन्तरे समुद्भवन्ति।

विषधरसर्पेषु दन्ता दीर्घतरा दृढा खातिकायुताश्च भवन्ति। खातिकया विषं प्रवहणशीलं भवति। एते विषधरा वस्त्रोपरिष्टादपि दष्टुं शक्नुवन्ति। एतेषां विषं घातकं भवति। समुद्रीयसर्पाणां विषदन्ता लघवः खातिकायुताश्च भवन्ति। एते वस्त्रोपरिष्टाद् दष्टुमशक्ता भवन्ति। यदि दशेच्चेत्तदपि विषं न प्रवहति। सर्पाणां जिह्वा भागद्वये विभक्ता भवत्यत एव द्विजिह्वाशब्देनोच्यन्ते सर्पा इति।

आषाढमासादारभ्य मासत्रयपर्यन्तं सर्पिणीनां गर्भस्थितिर्भवति। गर्भोत्पत्तिकालः चतुर्थमासे भवति। एका सर्पिणी चत्वारिंशदधिकशतद्वयान्यण्डानि प्रसूते। किन्तु सर्पिणी तान्यण्डानि निर्भिद्य निर्गतान् शावान् ग्रसति। कृष्णसर्पशावाः सप्तदिनानन्तरमक्षीण्युन्मीलन्ति, द्वादशदिनानन्तरं ज्ञानमुत्पद्यते, विंशतिदिनानन्तरं सूर्यदर्शनात् द्वात्रिंशद्दन्ताश्चतस्रो दंष्ट्रिकाश्च जायन्ते। सर्पाणां कराली मकरी कालरात्री यमदूतिका चेति सविषा दंष्ट्रा भवन्ति। एतास्ताः सविषा दंष्ट्रा वामदक्षिणपार्श्वयोः स्थिता भवन्ति। षण्मासानन्तरं ते कृत्तिं मुञ्चन्ति, विंशत्युत्तरशतवर्षाणि च जीवन्ति[2]।

चिकित्साशास्त्रदृष्ट्या सर्पा द्विविधाः परिगण्यन्ते—विषधराः, विषहीनाश्च। तत्र विषधराः सर्पाः नाग-राजनाग-कोरलप्रभृतयः सन्ति। विषधराः सर्पाश्च त्रिप्रकाराः

---

१. सर्पणात्तेऽभवन्सर्पा हीनत्वादहयः स्मृताः ( वह्निपुराणात्—हलायुधकोशः )।

२. अग्निपुराणम्—२९४।९-१३।

प्रदर्शिताः सन्ति—तन्त्रिकाविषात्मका नागादयः, रक्तवाहिकाविषात्मका हरितसर्पाः, गर्तकयुताः समुद्रीयसर्पाः पेशिकाविषात्मकाश्च। तत्र नागाः कृष्णवर्णा भवन्ति, तेषां शरीरं दीर्घं गोलाकारं च भवति। शिरसो विस्तारो ग्रीवापरिणाहसमो भवति। नेत्रतारा गोलाकृतिर्भवति। विषदन्ता लघवः स्थिरा वाहिकायुताश्च सन्ति। विषदन्तातिरिक्ता अपि दन्ता भवन्त्येषाम्। नागविषतन्त्रिका विषात्मकत्वेनाक्षेपपातौ करोति। क्रुद्धो नागः फणां विस्तारयति। राजनागो नागाद्दीर्घोऽतिवयो हरित-पीत-धूसरवर्णः श्वेत-पट्टयुतश्च भवति। करैतसर्पाः भास्वरकृष्णाः श्वेतरेखाङ्किता नवनीतसदृशश्वेतोदर-युताश्च भवन्ति। हरितसर्पा रक्तवाहिकाविषयात्मका गर्तकयुताश्च भवन्ति। गर्तं नेत्र-नासिकयोर्मध्ये भवति, शरीरं त्रिकोणाकारं संश्लिष्टं ग्रीवाभ्योऽधिकं विततं च भवति। ग्रीवा तनुः नेत्रतारा दीर्घाकृतिश्च भवति। केवलं विषदन्ता भवन्ति, विषदन्ता दीर्घाश्च-पला वाहिकायुताश्च सन्ति। रक्तवाहिका विषात्मिका भवति। दंशस्थाने रक्तस्रावः शोथश्च जायते। सामुद्राः सर्पाः पेशिकाविषात्मका भवन्ति। एते समुद्रीयकूलेषु दृश्यन्ते। एषां सर्पाणां शिरो लघु पुच्छं चाभुग्नं भवति। नासाछिद्रे तुण्डाग्रे स्थिते भवतः। उदरे शल्कं विततं न भवति, पृष्ठभागे शल्कमस्पष्टं गुलिकायुतं च भवति। विषयन्त्रं कोमलं भवति। एवंविधः सर्पो दंशं न करोति। विषहीनाः सर्पा दृढदन्तयुताश्च भवन्ति। ते जनं न पीडयन्ति।

अग्निपुराणानुसारेण शेषवासुकितक्षककर्कोटपद्ममहापद्मशङ्खपालकुलिकाश्चेत्यष्टौ नागाः श्रेष्ठा उक्ताः। एषु द्वौ विप्रौ द्वौ क्षत्रियौ द्वौ वैश्यौ द्वौ च शूद्रौ। ते च वर्णचतुष्टया नागाः क्रमशः सहस्राष्टाशतपञ्चशतत्रिशतफणयुता भवन्ति। एषां वंशजाः पञ्चशतानि सन्ति। तेभ्योऽसंख्यनागानामुत्पत्तिर्जाता। आकृतिभेदेन फणिनो मण्डलिनो राजिलस्त्रिविधाः सर्पा भवन्ति। एते वातपित्तकफप्रधाना भवन्ति। एतदतिरिक्ताः व्यन्तर-दोषमिश्र-दर्वीकर-जातीया अपि सर्पाः स्मृताः सन्त्यग्निपुराणे। एते चक्र-हलच्छत्रस्वस्तिकांकुशलक्ष्यलक्षिताः सन्ति। गोनसाः सर्पविशेषा विविधमण्डलचित्रिता दीर्घकाया मन्दगामिनो भवन्ति। राजिलजातीयाः सर्पविशेषाः स्निग्धा ऊर्ध्वं पार्श्व-भागं च रेखाभिश्चित्रिताः सन्ति। व्यन्तरसर्पास्तु मिश्रैश्चिह्नैश्चिह्निता भवन्ति। एषा-माप्यः पार्थिव आग्नेयो वायव्यश्चेति चत्वारो मुख्यभेदाः षड्विंशविधाश्चावान्तरभेदाश्च सन्ति। गोनससर्पाणां षोडशभेदाः, राजिलजातीयानां सर्पाणां त्रयोदशभेदाश्च सन्ति। सर्पोत्पत्तिकालाद्भिन्नकाले जायमानाः सर्पा व्यन्तरा उच्यन्ते, तेषां एकविंशतिभेदा भवन्ति[1]।

---

१. अग्निपुराणम्–२९४।२-८।

शेषवासुकितक्षककर्कोटपद्ममहापद्मशङ्खपालाश्चेति सप्त नागाः क्रमशः सूर्यसोमभौमबुधगुरुशुक्रशनिवासरादीनामधिपतयो भवन्ति। ते स्वेषु वासरेष्वेव बहिर्निर्गच्छन्ति; किन्तु कुलिको नाम नागः प्रतिवासरं सन्धिकाले बहिर्निःसरन्ति। महापद्मशङ्खपालाभ्यां सह कुलिकस्योदयो मतः। स कालः सर्वत्र विशेषतः सर्पदंशे दुष्टो मतः[१]।

सर्पदंशेऽश्विनीभरणीकृत्तिकारोहिण्याद्राऽऽश्लेषापूर्वाफाल्गुनीहस्तचित्रास्वातीविशाखामूलपूर्वाषाढाश्रवणपूर्वाभाद्रपदेति नक्षत्राणि शनिभौमाविति वारद्वयं तृतीयाचतुर्थी-पञ्चमी-षष्ठ्यष्टमी-नवमी-चतुर्दशी-तिथयश्च निन्द्या मताः। सन्ध्याचतुष्टययोगो दग्धयोगो दग्धराशिश्चानिष्टकराः सन्ति[२]।

**सर्पदंशलक्षणानि**—एको द्वौ त्रयो वा दंशा वेदनाजनका रक्तस्रावकराश्च। विषयुक्तदंशेनाङ्गेषु दाहः शरीरे पिपीलिकारिङ्गणवदनुभवः कण्ठशोथश्च जायते। अन्यत्पीडाजन्यलक्षणं व्यथाजनकं सग्रन्थिदंशनं सविषमुच्यते। एतस्माद् भिन्नं दंशनं निर्विषं भवति[३]।

**सर्पाणामाश्रयस्थानानि**—सर्पा देवालये शून्यगृहे वाल्मीकोद्यानवृक्षकोटरेषु, मार्गसन्धिषु, श्मशाने, नदीसागरसङ्गमेषु, चतुष्पथेषु, राजप्रासादेषु, द्वीपेऽब्जे, पर्वतशिखरेषु, विलद्वारेषु, जीर्णकूपेषु, जीर्णगृहभित्तिषु, जम्बूदुम्बरवटवेणुवनेषु जीर्णप्राकारेषु खातेषु च निवसन्ति[४]।

**सर्पदंशस्याशुभस्थानानि**—इन्द्रियच्छिद्रेषु, मुखे, हृदि, कक्षयोः, जत्रुणि, तालौ, ललाटे, ग्रीवायां, शिरसि, चिबुके, नाभौ पादेषु च सर्पदंशा अक्षमाः प्रोक्ताः[५]।

**दूतमहत्त्वम्**—पुष्पहस्तः शुक्लवस्त्रोऽमलः शुचिः सुवाक् सुधीर्दूतः स्याच्चेत्तर्हि शुभः प्रोक्तः। यदि च विवर्णवासाः प्रमादी शस्त्री पाशादिहस्तो भूमौ दत्तदृष्टिरार्द्रवासा गद्गदवाग्युक्तोऽपद्वारगतः शुष्ककाष्ठाश्रितः खिन्नो रक्तकृष्णपुष्पयुक्तः कुचमर्दी नखच्छेदी गुदस्पृक् केशमुक् तृणच्छेदी पादेन भूमिं विलिखन् दष्टजनसमानलिङ्गवर्णो दूतो भवेत्तर्ह्यशुभः प्रोक्तः[६]। दूतो यदङ्गं स्पृशति, तस्मिन्नङ्गे दंशमुदाहरेत्। दूतस्य पादो दोलायते चेदशुभं भवेत्, स्थिरश्चेच्छुभं स्यात्। कस्यापि जनस्य पार्श्वभागे स्थितो

---

१. तदेव—२९४।१३-१५; २. तदेव—२९४।१६-१८।

३. अग्निपुराणम्—२९४।१९-२१; ४. तदेव—२९४।२१-२४।

५. तदेव—२९४।२४; ६. तदेव—२९४।२५-२८।

दूतः शुभः, भागान्तरस्थितस्त्वशुभः प्रोक्तः। सर्पदंशनिवेदनकाले कस्यापि जीवस्य तत्रागमनं शुभं गमनञ्चाशुभं भवति। दूतस्य वाक् प्रदुष्टा चेन्निन्दिता भवेत्[1]।

**शुभाशुभसूचकशब्दाः**—चिकित्सकस्य प्रस्थानकाले मङ्गलमयं वचनं मेघगर्जनं गजचीत्कारो दक्षिणपार्श्वे सफलो वृक्षः, वामभागे पक्षिणः कलरवो गीतादिशब्दाश्च शुभसूचकाः। प्रस्थानकाले विप्रो वेश्या राजा कन्या गौर्गजः पताका पटहो घृतं दधि शङ्ख-जल-च्छत्राणि भेरी फलं सुराः तण्डुलानि सुवर्णं रूप्यञ्चेति शुभसूचकानि। प्रस्थानकाले सकाष्ठोऽग्नियुक्तः शिल्पी मलिनाम्बरभारवाही पुरुषः शृगालगृद्धोलूकास्तैल-कार्पासाश्चाशुभाः प्रोक्ताः[2]।

**सर्पदंशचिकित्सा**—

अग्निपुराणे सर्पदष्टजनस्य चिकित्साविधानं मन्त्रध्यानौषधिद्वारा प्रतिपादितं वर्तते। सुश्रुते मन्त्रचिकित्साया यः संङ्केतः कृतस्तस्य विशदविवेचनमग्निपुराणे लभ्यते। पुराणेऽस्मिन् सर्पदष्टचिकित्सायै विविधा मन्त्राः प्रतिपादिताः सन्ति। अत एवास्य पुराणस्य विषहृन्मन्त्रशास्त्रदृष्ट्याधिकं महत्त्वं वरीवर्त्ति।

**विषहृन्मन्त्रमहत्त्वम्**—विषहृदुपायेषु मन्त्रशक्तेर्महत्त्वमायुर्वेदशास्त्रे वर्णितमस्ति। ऋषिकल्पिता मन्त्राः कदापि व्यर्थतां न यान्ति, तेऽतिभयङ्करं विषमपि नाशयन्तीति सुश्रुतः[3]। महाभारते कथितमस्ति यत् सप्तमे दिने परीक्षित-रक्षणाय गच्छन्तं ब्रह्मर्षिं काश्यपं दृष्ट्वा तक्षकोऽपृच्छत्—महर्षे? वेगेन कुत्र गच्छसि? काश्यपेनोक्तम्—अहं परीक्षितं गच्छामि। अद्य तक्षकस्तं दङ्क्ष्यति, तदाहं तं जीवयिष्यामि। तदा तक्षके-णोक्तम्—अहमेव तक्षकः। वृक्षमेनं दशामि. त्वं जीवय इत्युक्त्वा तक्षकेण वृक्षो दष्टः। काश्यपश्च तं वृक्षं जीवयामास—

> यद् वृक्षं जीवयामास काश्यपस्तक्षकेण वै।
> नूनं मन्त्रैर्हृतविषो न प्रणश्येत काश्यपात्[4]॥

एतेन प्रसङ्गेन ज्ञायते यन्मन्त्रस्य प्रभावः सर्पदंशेऽवश्यं जायते। एत एवाग्नि-पुराणे सर्पदंशोपशमनार्थमनेके मन्त्राः प्रदर्शिताः। अग्निपुराणे **'ॐ नमो भगवते नीलकण्ठाय'** इति मन्त्र उल्लिखितो वर्तते। अस्य मन्त्रस्य जपनाद्विषनाशो जायते। घृतेन सह गोमयरसस्य गोमूत्रस्य वा पानं सर्पदंष्टजनस्य जीवनरक्षणमौषधमस्ति[5]।

---

१. अग्निपुराणम्–२९४।३०-३२; २. तदेव–२९४।३६-४०; ३. सुश्रुतम्, कल्पस्थानम्–५।९-१०। ४. महाभारतम्, आदिपर्वणि–५०।३४; ५. अग्निपुराणम्–२९५।१-२।

**तार्क्ष्यमन्त्रप्रयोगविधिः—**

अग्निपुराणे सर्पदष्टचिकित्सामन्त्रेषु शान्तस्वरान्वितो ब्रह्मा लोहितः तारकः शिवश्चेति वियतिसंज्ञकः तार्क्ष्यमन्त्रो निगदितः—

**"ॐ ज्वल महामते हृदयाय गरुडविडालशिरसे गरुडशिखायै गरुडविषभञ्जन प्रभेदन प्रभेदन वित्रासय वित्रासय विमर्दय विमर्दय कवचाय अप्रतिहतशासनं वं हूं फट् अस्त्राय उग्ररूपधारक सर्वभयङ्कर भीषय सर्वं दह दह भस्मीकुरु कुरु स्वाहा नेत्राय"।**

वेदिकायां मातृकामयमष्टदलकमलं निर्माय पूर्वादिदलेषु द्वयोर्द्वयोः क्रमेण कवर्गादि-सप्तवर्गान्तियुग्मवर्णान् लिखेत्। तस्य कमलस्य केशरभागं वर्गाणामाद्याक्षरैरवरुध्य कर्णिकायामग्निबीजं रं लिखेत्। मन्त्रसाधकस्तत् पद्मं हृदिस्थं कृत्वा वामहस्ततले तच्चिन्तयेत्। अङ्गुष्ठादिषु वियतिमन्त्रस्य वर्णान् न्यसेत्, तैश्च भेदिताः कला अपि चिन्तयेत्। तदनन्तरं भुवि चतुष्कोणं पीतवर्णं वज्रवेष्टितमैन्द्रदैवतं मण्डलमारचयेत्। पद्माद्र्ध्वं शुक्लवर्णमर्द्धचन्द्राकारमण्डलं वरुणदैवतमस्ति। तदनन्तरं स्वस्तिकचिह्नाङ्कितं त्रिकोणाकारं वह्निदैवतं तैजसं मण्डलं चिन्तयेत्। ततो बिन्दुयुक्तं वृत्ताकारं कृष्णमाला-सुशोभितं वायुदैवतमण्डलं चिन्तयेत्। इमे चत्वारोऽङ्गुष्ठ-तर्जनी-मध्यमानामिकाङ्गुलीनां मध्यपर्वसु स्थिताः सुवर्णमयनागवाहनवेष्टितेषु स्ववेश्मसु विराजमानाः सन्ति। एवं चिन्तनपूर्वकं क्रमशः पृथिव्यादितत्त्वानङ्गुष्ठादीनां मध्यपर्वसु न्यसेत् तथा वियतिमन्त्रस्य चतुरो वर्णान् क्रमशो न्यस्य रूपरहितशब्दतन्मात्रामयं शिवदैवतमाकाशतत्त्वं कनिष्ठि-कायाः मध्यपर्वणि चिन्तयित्वा तदभ्यन्तरं वेदमन्त्रस्याद्यमक्षरं न्यसेत् तथा नागाना-माद्याक्षराणि स्वमण्डलगतानि न्यसेत्। तदनन्तरं पृथिव्यादिभूताद्यक्षराण्यङ्गुष्ठाद्यङ्गुली-नामन्त्यपर्वसु न्यसेत्। ततो बुधस्तन्मात्रादिगुणानङ्गुलीषु न्यसेत्। एवं न्यासं कृत्वा ध्यानपूर्वकं तार्क्ष्यमन्त्रेण रुग्णस्य हस्तस्पर्शनं कृत्वा मन्त्रवेत्ता स्थावरजङ्गमविषाणि हन्यात्[1]।

विद्वान् पुरुषो भूमण्डलादिषु विन्यस्तस्य वियतिमन्त्रस्य चतुरो वर्णान् मध्य-मानामिकाभ्यामङ्गुलिभ्यां देहस्य नाभिस्थानेषु पर्वसु च न्यस्य गरुडस्वरूपं ध्यायेत्। मन्त्रज्ञो विद्वानात्मानमपि गरुडरूपे चिन्तयेत्। एवं गरुडरूपेण मन्त्रप्रयोक्तुः वाक्या-न्मन्त्रो विषे प्रभवति। यदि गरुडकरमुष्टी रुग्णस्य हस्तस्थितो भवेत्, तदा तस्याङ्गुष्ठ-विषमपहन्ति। मन्त्रवेत्ता गरुडरूपं स्वहस्तमुद्यम्य तत्पश्चाङ्गुलिचालनात् स्तम्भादीन् कुर्यात्[2]।

---

१. अग्निपुराणम्—२८५।४-१२; २. तदेव—२८५।१२-१६।

आकाशाद् भूबीजपर्यन्तं पञ्चबीजानि 'पञ्चाक्षरमन्त्रराज' नाम्नाभिधीयते। तस्य स्वरूपमस्ति—हं यं रं वं लं। अस्य मन्त्रस्योच्चारणेन मन्त्रवेत्ता विद्वान् विषं स्तम्भयितुं शक्नुयात्। व्यत्यस्तभूषणबीजमन्त्रोऽयं यदि साधुसाधितो भवेत्तथा मन्त्रस्यादौ 'सम्प्लवः प्लावय प्लावय' वाक्यमिदं संयोज्य मन्त्रप्रयोक्ताऽस्य प्रयोगेण विषमपहर्तुं शक्नोति[1]।

यदि चेद्भूबीजं लं तेजोबीजं रं च परावर्त्य हं यं लं वं रं इति रूपेण कुर्यात्, तर्हि विषं नाशयत्येव। एवमेव भूबीजं लं वायुबीजं यं च परावर्त्य हं लं रं वं यं इति रूपोऽयं मन्त्रो विषं संक्रामयत्येव। अग्निबीजं रं जलबीजं वं ( रं वं ) इति मन्त्रं निजगेहस्थो जपेत्, तर्हि विषं नश्यति। यदि च गरुडरूपो मन्त्रवेत्ता गरुड-वरुण-मन्दिर-स्थोऽस्य मन्त्रस्य जपं कुर्यात्, तर्हि विषं नाशयेत्। यद्येषां मन्त्राणामादौ 'श्री' अन्ते च 'स्वधा' इति योजयेत्तदा 'जानुदण्डिमन्त्रः' इत्युच्यते। अस्य मन्त्रस्य जपपूर्वकं स्नानात् पानाद्वा सर्वविषापहारो भवेत्[2]।

**विषहृन्मन्त्राः—**

**"ॐ भगवते रुद्राय छिन्द २ विषं ज्वलितपरशुपाणये च। नमो भगवते पक्षि-रुद्राय दष्टकं उत्त्थापय २ दष्टकं कम्पय २ जल्पय २ सर्पदष्टमुत्त्थापय लल २ बन्ध २ मोचय २ वररुद्र गच्छ २ वध २ त्रुट २ बुक २ भीषय २ मुष्टिना संहर विषं ठ ठ।"**

अनेन मन्त्रेणाभिमन्त्रणात् सर्पदष्टस्य जनस्य विषं दूरं याति[3]।

**स्तम्भकमन्त्रः—**

**"ॐ नमो भगवते रुद्र नाशय विषं स्थावरजंगमं कृत्रिमाकृत्रिमविषमुपविषं नाशय नानाविषं दष्टकविषं नाशय धम २ दम २ यम २ मेघान्धकारधाराकर्षनिर्विषी-भव संहर २ गच्छ २ आवेशय २ विषोत्थापनरूपं मन्त्रान्ताद्विषधारणम् ओं क्षिप ओं क्षिप स्वाहा। ॐ ह्लाँ ह्लीँ खीँ सः ठन्द्रौँ ह्लीँ ठः"।**

मन्त्रवेत्ता मन्त्रमिमं जपादिना साधयेत्। मन्त्रानुष्ठानात् सिद्धो जनः सर्वदा सर्पान् बध्नाति[4]।

**पातालक्षोभको मन्त्रः[5]—**

**"ॐ नमो भगवते रुद्राय प्रेताधिपतये गुल्व २ गर्ज्ज २ भ्रामय २ मुञ्च २ मुह्य २ कट २ आविश २ सुवर्णपतङ्ग रुद्रो ज्ञापयति ठ २"।**

---

१. अग्निपुराणम्–२९५।१६-१८; २. तदेव–२९५।१८-२२; ३.तदेव– २९७।१। ४. तदेव–२९७।२; ५. तदेव–२९७।३।

पातालक्षोभकोऽयं मन्त्रः। मन्त्रेणानेनाभिमन्त्रितस्य रुग्णस्य विषं नश्यति।

**गोनसादिविषहृन्मन्त्रः[1]—**

**"ह्रौं ह्रौं अमलपक्षि स्वाहा"।**

मन्त्रवेत्ता पुरुषोऽनेन मन्त्रेणाभिमन्त्रितस्य ताम्बूलस्य प्रयोगान्मण्डलिनः सर्पस्य विषं हरेत्।

**गर्दभविषहृन्मन्त्रप्रयोगविधिः[2]—**

**"ॐ नमो भगवते रुद्राय चिवि २ छिन्द २ किरि २ भिन्द २ खड्गेन छेदय २ शूलेन भेदय २ चक्रेण दारय २ ॐ ह्रूं फट्"**

अनेन मन्त्रेणाभिमन्त्रितस्यौषधेः प्रदानेन गर्दभादीनां विषं नश्यति। सुश्रुतेन गर्दभादिविषशान्त्यै स्वग्रन्थे न क्वचिदुल्लेखः कृतः। अग्निपुराणस्य मौलिकीयमुद्भावना।

**विषघ्नमन्त्रः[3]—**

**"ॐ क्षौं नमो भगवते नारसिंहाय ज्वालामालिने दीप्तदंष्ट्राय अग्निनेत्राय सर्वरक्षोघ्नाय सर्वभूतविनाशाय सर्वज्वरविनाशाय दह २ पच २ रक्ष २ हूँ फट्"।**

मन्त्रवेत्तृद्वारा साधितोऽयं नारसिंहमन्त्रो विषशामकोऽस्ति।

**मन्त्रसिद्धिः—**

'सिद्धो मन्त्रः फलदायः' लक्षजाप्यतः मन्त्रसिद्धिः स्यादिति कृत्वा प्रयोगात् पूर्वं मन्त्रं साधयेत्। मन्त्रसाधकः श्रद्धाभक्तिविनयावनतो भूत्वा मन्त्रविद्याविशारदस्य निग्रहानुग्रहसमर्थस्य सिद्धतपस्विनो धीरस्य गुरोः सकाशान्मन्त्रविद्यामवाप्य नियमविधिपूर्वकं जपं कृत्वा होमार्च्चनादिक्रियाभिर्मन्त्रं साधयेत्। जपाद्दशांशं हवनं तद्दशांशं तर्पणमार्जनादिकं कुर्यात्। जपपूजाहुतादिना सिद्धेन मन्त्रेण साधकस्याभीष्टसिद्धिः स्यात्। सिद्धं मन्त्रं ग्रहणाद्यवसरेषु पुनः साधयेत्, ततोऽभिमन्त्रणेन मन्त्रकर्म समाचरेत्।

अग्निपुराणानुसारेण मन्त्रद्वारोत्पादितौषधिरेव सफलो भवति। पुरा लोकपितामहो भगवांश्चतुर्मुखो ब्रह्मा सुभद्रादेवीमादिशत्— यज्जनैर्विना विधिविधानेन यान्योषधानि गृह्यन्ते, तेषां बीजं त्वया ग्राह्यमित्यतः सुभद्रादेवीं नमस्कृत्यौषधीन्परितः मुष्टिना यवान् विकीर्य 'ॐ सुभद्रायै नमः; सुप्रभायै नमः' इति मन्त्रं दशवारं जप्त्वा तदौषधिं

---

१. तदेव २९८।१; २. तदेव २९८।११; ३. अग्निपुराणम् ३०६।१८।

नत्वा 'ऊमूर्ध्वनेत्रां त्वामुत्पाटयामि' इति विधिनौषधीनुत्पाटयेत्। तदनन्तरमधोलिखित-मन्त्रेणौषधीन् भक्षयेत्—

नमः पुरुषसिंहाय नमो गोपलकाय च।
आत्मनैवाभिजानाति रणे कृष्णपराजयम्।
एतेन सत्यवाक्येन अगदो मेऽस्तु सिद्धयतु[1]॥

प्रयोगात् पूर्वं मन्त्रमिमं विधिना साधयित्वा ततः प्रयोगं कुर्यात्। एवं च मन्त्र-सिद्धौषधान्येव विषापहरणयोग्यानीति कृत्वौषधिग्रहणोत्पाटने विधाने प्रयोगे भक्षणे च मन्त्रा निगदिताः। सर्पादिविषापनोदनकराणि कानिचिदौषधान्यत्र वक्ष्यन्ते। प्रथमं सर्पदष्टजनस्य विषशान्त्यै प्रज्वलितकाष्ठतप्तशिलाज्वालोष्णकमलैश्च दंशस्थानं दहेत्। केचन योगाः प्रदर्श्यन्ते—

(१) शिरीषबीजपुष्पार्कक्षीरबीजकटुत्रयम्।
विषं विनाशयेत् पाललेपनेनाञ्जनादिना॥ १॥

(२) शिरीषपुष्पस्य रसभावितं मरिचं सितम्।
पाननस्याञ्जनाद्यैश्च विषं हन्यान्न संशयः॥ २॥

(३) कोषातकीवचनाहिङ्गुशिरीषार्कपयोयुतम्।
कटुत्रयं समेषाम्भो हरेन्नस्यादिना विषम्॥ ३॥

(४) इन्द्रबलाग्निकं द्रोणं तुलसी देविका सहा।
तद्रसाक्तं त्रिकटुकं चूर्णं भक्ष्यं विषापहम्[2]॥ ४॥

(५) भक्षणं निम्बपत्राणां सर्पदष्टस्य भेषजम्[3]।

वृश्चिकादिविषचिकित्साऽप्युक्ताऽग्निपुराणे। तत्र केचन प्रयोगा अत्रोद्ध्रियन्ते। प्रथमं वृश्चिकविषचिकित्सा प्रदर्श्यते—

मञ्जिष्ठा चन्दनं व्योषपुष्पं शिरीषकौमुदम्।
संयोज्याश्चतुरो योगा लेपादौ वृश्चिकापहाः[4]॥

लूताविषचिकित्सामाह—

पद्मकं पाटली कुण्ठं नतमुशीरचन्दनम्।
निर्गुण्डी शारिवा शेलु लूतार्त्तं सेचयेज्जलैः[5]॥

---

१. अग्निपुराणम्–२९८।१६-२०; २. तदेव–२९७।४-८; ३. तदेव–२७९।५६।
४. तदेव–२९८।१०; ५. तदेव–२९८।८-९।

मूषकविषचिकित्सामाह—

मूषिकाः षोडश प्रोक्ता रसं कार्पासजं पिबेत् ।
सतैलं मूषिकार्त्तिघ्नं फलिनीकुसुमं तथा ॥
समागरगुडं भक्ष्यं तद्विषारोचकापहम्[1] ॥

अलर्कविषचिकित्सामाह—

यष्टिव्योषगुडक्षीरयोगः शुनो विषापहः[2] ।
अर्कक्षीरं तिलं तैलं पललं च गुडं समम् ।
पानाज्जयति दुर्वारं श्वविषं शीघ्रमेव तु[3] ॥

एवमेवाग्निपुराणे कीटपतङ्गादीनामपि दंशचिकित्सोक्ता। एषां सर्पकीटादीनां दष्टचिकित्सावर्णनमायुर्वेदशास्त्रदृष्ट्या अतिमहनीयं वरीवर्त्ति । औषधिचिकित्सया सह मन्त्रचिकित्साया विवेचनमग्निपुराणस्य निजं वैशिष्ट्यमस्ति, गर्दभदष्टचिकित्सात्वग्नि-पुराण एव प्रथमं दृग्गोचरीभवति । सुश्रुत-चरकाद्यायुर्वेदग्रन्थेषु नास्याश्चिकित्सायाश्चर्चा दृश्यते। मानौषधीनां संयुक्तरूपेण विवेचनमौषधीनां निर्माणे मन्त्रप्रयोगविधानं विष-नाशकबीजमन्त्राणां च निरूपणमग्निपुराणस्य विषशास्त्रस्य बाढं महिमानमाख्यान्ति ।

---

१. अग्निपुराणम्–२९८।६-७;  २. तदेव–२९८।१५;  ३. तदेव–२७९।५८-५९ ।

# अखण्डमहायोगभारतीयास्तिकदर्शनयो-र्गोपीनाथकविराजस्य प्रातिभानुभूतिः

डॉ० अशोकशास्त्री,
अध्यक्षः, संस्कृतविभागस्य,
कालिकाताविश्वविद्यालये

❋❋❋

अखण्डमहायोगस्य प्रवक्तुर्दिवङ्गतस्य गोपीनाथकविराजमहापुरुषस्य समग्र-जीवनव्यापिन्याः साधनायास्तथा योगानुभूतेश्च फलीभूतानि खल्वखण्डमहायोगस्य तत्त्वानि तदनुसारेणानुष्ठानानि च। अखण्डमहायोगोऽयं हि तत्रभवतामुत्सृष्टात्मनाम् आध्यात्मिकप्रातिभानुभूतेः सारनिष्कर्षविशेषः।

न खण्ड्यते न विभज्यत इत्यखण्डम्। संयोगार्थकात् समाध्यर्थकाद् वा युज्धातो-र्निष्पन्नस्य योगशब्दस्यार्थः संयोगः समाधिर्वा। सर्वोत्कृष्टसारो यो योगः, स एव महान् योगो भवति। तस्मादन्तःसारतः स्वभावतश्चैवंविधो योऽखण्डितो योगपदार्थस्तस्यैव महत्त्वमखण्डत्वञ्च। कविराजमहोदयप्रकल्पितस्याखण्डमहायोगस्यायमेव प्राथमिकः पारिभाषिकोऽर्थो निष्पाद्यते। चेतनेयमखण्डमहायोगस्य तत्रभवतामासीदभिप्रेततमेति परार्धसंख्यकजनानां कृते समुपस्थापितो महानयमखण्डो नाम योगः। न केवलं मानव-जातेरपि तु सर्वकालीननिखिलसृष्टजीवानां कृत एव परमपुरुषार्थो मोक्षो विचिन्तितोऽ-स्मिन्नखण्डे महायोगे कविराजमहायोगिभिः। मोक्षो नामायं परमपुरुषार्थः खलु सर्वजनीन इति परिभाष्यम्। अथवैष महायोगो निखिलजीवमोक्षात्मकं परमपुरुषार्थ आधुनिकमनीषिभिस्तथा युक्तिविद्भिश्च परमसुखस्वर्गराज्यरूपेणापि चिन्त्यते। किन्त्वहो! दार्शनिकचिन्तनं तदनुसारेणानुष्ठाञ्च परस्परविपरीतकोटिकम्। प्रतीच्य-मनीषिणां प्लेटोमहोदयानामुक्तिर्यथा—"न केवलं लेखनमाध्यमेन दार्शनिकसत्यं प्रापयितुं शक्यते। केवलं ह्यपरोक्षसंसर्गेणैवैकस्मादात्मनो दीपः प्रवर्त्तयितुं शक्यतेऽ-परस्मिन्नात्मनि"।

महामहोपाध्यायमहोदयेन साधकयोगिनोः प्रभेदो विहितो विस्पष्टभाषया। सिद्धदशायां चिदाकाशे निराधारमवस्थानं भवति साधकस्य भूमिस्तु तत्र नाधिगता।

या नाम योगभूमिः, सा तु लभ्यते केवलं योगिनैव। निराकारचिद्दशायाः सर्वोच्चस्थितिः साधकस्य। योगिनस्तु या स्थितिः, सा परा स्थितिरतिपार्थिवम्।

स्वस्वक्षेत्रेष्वाचरणगतमपि महत् पार्थक्यं वर्त्तते योगिसाधकयोः। तथा हि, केवलम् आत्मगतसुखदुःखयोरेव नियुक्तः साधकः। नासौ तु शक्नोत्येवात्मानं विस्मृत्य चिन्तयितुमपरविषयमधिकृत्य। आत्मनः पार्थिवदुःखमोचनार्थमेव तस्य सफलप्रयासः। यन्नाम कर्म केवलं परोपकारायैव, न तु युगपदात्मनो दुःखनिराकरणार्थमपि, तत्तु कर्म तं साधकं समाकर्षतीति न जातु परिदृश्यते। कामं विस्पष्टमिदं यत् साधकस्य प्रयासः खलु स्वस्यैव शान्तये सुखाय तृप्तये चेति निःसंशयसिद्धान्तः। योगिनस्तु दृष्टिभङ्गी कार्त्स्न्येन भिन्ना। अपरजनस्य कल्याणं साधनीयम् इत्येव तस्य मुख्यलक्ष्यम्। यथा आत्मनस्तथापरजनस्यापि दुःखं प्रति नासौ पर्युदासीनः। एवमात्मनो दुःखनिवारक-परमानन्दान्वेषी हि योगीति न संशयः।

एतत्तु तत्रभवति तदेव सम्भवति, यदासावपरदुःखनिराकरणेन परां शान्ति लभते। अपरस्यानन्दे तस्यानन्दः, अपरस्य क्लेशोपशमेनात्मानं मन्यतेऽसौ कृतकृत्यञ्च। साधकस्य केवलात्मविषयकचिन्ताव्याकृतचित्तापेक्षया योगिनश्चित्तम् अधिकतरं व्यापकम्। योगिदशा नैवाधिगम्यते यदि तावत् स्वार्थबुद्धेः स्थानं न लभते सर्वजनीनता, तथापि स्वार्थशून्यता सार्वजनीनता चेत्यनयोरस्ति मात्रागतः प्रभेदः। इतरप्राकृतजनान् स्वजनरूपेण मन्यमानस्तेषां क्लेशराशिं सहमानश्च योगी नूनमेव साधकानामग्रणीतोऽप्युत्कृष्टतरः, तथापि शतजनानां क्लेशानात्मक्लेशरूपेण सहमानो योगी तत्प्राक्तनयोग्यपेक्षया श्रेयान्। एवमस्मादायाता योगिजनेषु विविधस्तरभेदाः। परोत्कर्षः खलु लभ्यते तदेव, यदा नाम कश्चन योगी निखिलानां जीवानां निखिलानि सुखानि निखिलानि दुःखानि निखिलानि कर्म्माणि स्वेच्छया गृह्णात्यात्मनः स्कन्धे, स्वीकुरुते च तान्यात्मनि परमानन्देन। चरमेयं दशा योगिना नैवाधिरोढुं शक्यते यावन्नात्मनि समाकृष्यन्ते भूतवर्त्तमानभविष्यत्कालिका निखिला जीवा उच्चतमनिम्नतम-दशानिर्विशेषम्। कविराज-महायोगि-प्रवर्त्तितोऽयमखण्डो नाम महायोगः, तस्य सार-मर्मावगमार्थमेतानि वैशिष्ट्यानि खलूल्लेखार्हाण्युपादानानि।

खण्डाखण्डावान्तरभेदद्वयभिन्ना हि योगिनः। आद्यस्य पुनर्द्वैविध्यम्—खण्डयोगी, महाखण्डयोगीति च। अखण्डयोगिनो या शक्तिः, सा त्वपरिमिता काले सर्वस्मिन्नेव। आरोहति खण्डयोगी "महाभावदशाम्," महाखण्डयोगी तु महाभावदशामपि समुत्तीर्य विश्वचैतन्यात्मकतामवगाहते।

अखण्डमहायोगवादतो विशेषतो विश्वजनीनमुक्तिरित्यखण्डमहायोगवादस्यानु-सिद्धान्तत एतदेव विशदं यत् तुङ्गतमोत्कर्षंगतोऽखण्डमहायोगी आत्मनः प्राज्यशक्त्या सकलकालेषु मानवानां तथा निखिलजीवानमेव मुक्तिं प्रदातुमलमिति।

पतञ्जलेर्योगसूत्रम्, काश्मीरः शैवागमः, अद्वैतवेदान्तः, न्यायदर्शनम्, गौडीय-वैष्णवदर्शनम्, अलङ्कारशास्त्रञ्चेति प्रासङ्गिकभारतीयदर्शनप्रस्थानानां सिद्धान्तालोके-नैवाखण्डमहायोगस्य दार्शनिकतत्त्वानि दर्शनीयानि।

सर्वजनीनमुक्तिरिति भावनाया यद् बीजं तत्त्वनुसन्धेयमद्वैतभावनायाम्। तत्रा-स्त्येको वादः सर्वमुक्तिरिति—यो वादो युक्तिभिः किञ्चित् प्रतिष्ठां लभते दार्शनिक-समाजेऽपि। एतन्मतानुसारेण स्थितमिदमेव यन्निखिलाः खलु जीवा अन्ते मुक्तिं प्राप्स्य-न्तीति जीवात्मपरमात्मनोरभिन्नतया न जातु भवति जीवस्यावर्तनमस्यां संसारभूमौ। सकलजीवदेवदानवगन्धर्वप्रभृतयस्तथा पशवः पक्षिणश्च नूनं क्रमेणोच्चतरस्तरं लभेरन्। तथाहि—अधस्तनस्तरीया जन्मलाभं कुर्वन्ति मनुष्यरूपेण, अन्ते चेत्थं सर्व एवैते ज्ञान-योगेन विलीना भवन्ति परमात्मनि। इत्थं च क्रमेण काले काले जीवात्मनां संख्याह्रासो जायते। सकलस्तरीयजोवानामेव परमात्मनि लयप्राप्तिरवश्यम्भाविनी। किन्त्वद्वैत-दर्शनस्य सर्वमुक्तिवादेऽस्मिन् सर्वोत्कृष्टस्याखण्डमहायोगिनो न कमपि समुल्लेखं पश्यामः—यस्तावदखण्डमहायोगी शक्नुतेऽतिप्राकृतयोगशक्तिबलेन निखिलानामेव जीवानां कृते मुक्तिमादातुम्। यदि तावद्योगपद्येन ब्रह्माण्डस्याखिलस्य विलयः सम्भवति, तदैवाद्वैतसम्मतस्य सर्वमुक्तिवादस्यास्य तत्त्वं कोडीकर्त्तुं शक्यते।

नैयायिकानां मतेन तु निखिलब्रह्माण्डस्य युगपद्विलयस्य प्रामाण्याभावात् सर्वमुक्तिरिति वादो न सङ्गच्छते। पतञ्जलियोगसूत्रभाष्ये प्रतिपादितं यद् ईश्वरो हि चिरस्वतन्त्रश्चिरविभुः। तस्य खल्वैश्वर्यपूर्णत्वं प्रकृष्टसत्त्वगुणत्वं च स्वीक्रियते चेर्त्तीहि समुदेतीयं पृच्छा—तथाविधप्रकृष्टसत्त्वगुणोपेततया मुक्ति कामयमान ईश्वरतत्त्वं प्रति-पद्यमानश्चेश्वरवन्मुक्तः स्थातुमर्हति न वा? नेति प्रत्युत्तरं न सम्भवति प्रश्नेऽस्मिन् पातञ्जलयोगदर्शने। मार्गस्त्वत्र मनाग् भिन्न इत्यभ्युपेयम्। तथाहि—ईश्वरतत्त्वमव-गाहमानो मुमुक्षुर्योगी तावदसम्प्रज्ञातसमाधिमाश्रयते—यस्मिंस्तावत् समाधावीश्वर-भक्तिवशान्न किञ्चिदास्ते ध्येयवस्तु। एवम्प्रकारकः समाधिस्तत्समुत्था प्रज्ञा ईश्वर-करुणयैव लम्भनीया। तद्भाषितं भाष्ये—"ईश्वरस्तमनुगृह्णाति अभिध्यानमात्रेणेति"। अस्यायमर्थः—ईश्वरः केवलमात्मेच्छयैव तमनुगृह्णाति, यस्तस्मिन् समर्पितात्मेति। ईश्वर-स्येयमिच्छा सकलाप्रतिरोध्यैव। ईश्वरस्यानेनानुग्रहेण तथाविधाः पुरुषा अभिधीयन्ते

स्वतन्त्रा ईश्वराः। अलमतस्तादृशनित्येश्वराभ्युपगमेन। एतत्तु न सहनीयं यतस्तद्भक्त-पुरुषस्य यदैश्वर्यं तत्तु जन्यते सर्वशक्तेरीश्वरादेव, यतो जगन्नियन्त्रण आकुलीभावतया ईदृशीश्वरेच्छा तत्पक्षेऽचलावस्थाजनिका। पातञ्जलयोगदर्शनेऽभिहितं यदनन्तैश्वर्यपूर्णता-गुणमुपेततया पुरुषो जगन्नियमविपर्यासमर्थोऽपि परमेश्वरसंकल्पविरुद्धामात्मशक्ति नियोजयितुं नोत्सहते। अतो योगभाष्यम्—"शक्तोऽपि पदार्थविपर्यासं न करोतीति"।

अपि चोक्तं तत्र—"एवम्भूतं चित्तम् अवसिताधिकरणात्मकल्पेन व्यवतिष्ठते प्रलयं गच्छतीति"। अवसितकार्यतया पुरुष आत्मेव व्यवतिष्ठते, आहोस्विन् महाप्रलयं संश्रयते इत्यर्थः। पुनश्चात्र शङ्का—एवम्भूतयोर्द्विविधयोश्चित्तयोर्विवेकाय को नामाभ्युपायः—ययोरेकतरन्महाप्रलयमधिगच्छति, इतरच्च पुरुषेऽतितिष्ठतीति। समाधानं यथा—असति चित्तानामभिलाषे, सर्वथाऽसक्तानि निखिलचित्तानि परमे कारण एव प्रलीनानि भवन्तीति। केवलं भक्त्यैव सायुज्यमीश्वरस्य लब्धुकामानि चित्तानि तथाविधं मुक्ति-मधिगच्छेयुरिति कुतोऽत्राऽसङ्गतिः?

प्रतिपादितञ्च द्वैतशैवागमेऽपि यन्मुक्तोऽपि पशुरर्थाद् जीवः कदापि पत्याऽर्थाद् शिवेन समतामधिरोहतीति। पशुनामान्तरको जीवः कदापि पत्या तुल्योऽर्थात् शिवसमो भवेद् वा, तथापि सायुज्यं लभमानानामपि मुक्तात्मनां जगन्नियन्त्रणे नास्ति कापि स्वतन्त्रता।

ततो निःसंशयं वक्तुमिदं शक्यते यत् सर्वमुक्तिवादो नाम यो वादः, स किञ्चिद-द्वैतदर्शनेन सङ्गतिं लभमानोऽपि न लभते सङ्गतिमितरदर्शनेषु। सर्वकालीनदार्शनिक-प्रकाण्डतया महाध्यात्मिकतया च तत्रभवान् कविराजमहायोगी निखिलजीवानां मुक्ति-प्रतिपादकम् अखण्डमहायोगमेव प्रतिष्ठापयति। ईश्वरानुग्रहमेव तत्रभवान् महायोगी वारं वारं समुल्लिखति—येन कश्चिदखण्डो महायोगी मानवादिनिखिलजीवकुलं मोच-यितुमीश्वरः।

वस्तुतस्तु विश्वस्य सर्वे जीवा जन्ममृत्युधारानुसारेण मुक्ता भविष्यन्तीति पौराणिकक्रमविवर्त्तनवादः। अखण्डमहायोगिने तु मध्यममार्गो नैव रोचते। तस्य तु चरमं लक्ष्यं निखिलजीवमुक्तिस्तदर्थमेव तस्य प्रयासोऽनुक्षणं भावना च।

शैवागममतेन प्रधानसंविदः प्राणरूपेण परिणामः (प्राक् संवित् प्राणे परिणतः) शुद्धचैतन्ये महाशक्तिर्निलीना। प्राणानां क्रमपरिणतिमनुसृत्य भगवतः शिवस्य तथा षट्त्रिंशत्तत्त्वात्मकभुवनानाम् आविर्भावः। एषु षट्त्रिंशत् संख्याकेषु तत्त्वेषु सांख्य-सम्मतानि पञ्चविंशतितत्त्वान्येव गृहीतानि। नियतिः, कालः, रागः, विद्या, कला, मायेति

षट् तत्त्वानि। अन्तिमावशिष्टानि शुद्धानि पञ्च तत्त्वानि यथा—शुद्धविद्या, ईश्वरः, सदाशिवः, शक्तिः, शिवश्चेति। एतदतिरिक्तं यत्तत्त्वं तदेतत्-षट्त्रिंशत्-तत्त्वानामुपरि, तच्चानिर्वाच्यम्। तन्न तत्त्वरूपेण संख्येयम्। तत् तावदनभिव्यक्तम्, शिवशक्त्योः सहतत्त्वरूपेण गणनीयम्। दशेयं यथा प्रपञ्चानुगा, तथा प्रपञ्चातिगा च। एतानि तत्त्वानि संविच्छक्तिनामान्तरकप्राणतत्त्वान्तर्भूतानि।

महाचार्यस्तात्पर्याचार्यदेव एकदा समुद्घोषयामास—"संविदेव हि भागवती वस्तूपगमे नः शरणम्" इति। शक्तिरर्थात् कुण्डलिनी हि योगिनश्चिरन्तनसहस्थायिनी। शक्त्या सहात्मनः सङ्गम एव यथार्थतो योगः। रुद्रयामलमतेन शक्तिरर्थाद् ऐश्वरी माता हि खलु सहभाविनी वायुरूपा। कविराजमतेन त्वनयाऽलौकिकजनन्या साधकः कदापि सङ्गतो भवितुं नार्हति। सिद्धदशायामेव साधकोऽनया स्वयं संवित्स्वरूपयाऽतिगया जनन्या अभिन्नतां लभते। किन्त्वतिरिक्त-शक्त्यभाववशात् साधकस्तत्काले स्वस्येमाम् अतिगां परां दशां नोपलब्धुमीष्टे। फलतश्च तदा साधकोऽन्तिमदशारूपेण निरवलम्ब-विशुद्धचिदाकाश एवावतिष्ठते। किन्तु किञ्चिद्दौर्भाग्यत एव साधकस्तदा तन्मातुः शक्तिं लभमानस्तस्याः क्रोडे आश्रयं लब्धुं न शक्नोति।

भगवतः परमशिवस्याऽऽत्मनः पञ्चकृत्यानि यथा—सृष्टिः, स्थितिः, संग्रहः, निग्रहोऽथवा तिरोधानम्, अनुग्रहश्चेति शैवागमे वर्णितानि। जीवान् प्रत्यनुग्रहप्रदर्शनमेव तस्य प्राथमिकं कृत्यम्। इतरत् कृत्यचतुष्टयमेतस्यैव प्रपञ्चभूतम्।

विविधगुरुमाध्यमेन दैवजनन्या अनुग्रह आपतति व्यक्तिजीवमभि। गुरूणां भूमयस्तिस्रो यथा—दिव्यौघः ( दिव्यभूमिः ), सिद्धौघः ( सिद्धभूमिः ), मानवौघश्च ( मानवभूमिः ) इति। दिव्यजनन्या महामातुरवस्थानं तु मायातत्त्वमतिक्रम्य। इयं हि दशा निर्विशेषदशाऽथवा पारिभाषिकतया बिन्दुदशा। अभिधानान्तरञ्चास्या यथा बैन्दव-भुवनमिति। अस्मिन् भुवनेऽसंख्यानि भुवनानि जीवाश्च सन्ति, तथापि नास्त्येतेषु सविशेषप्रातिस्विकता। एतद्भूमेरापतति मन्त्रशक्तिर्विविधगुरुषु। गुरूणाञ्चापि जीवान् प्रति कृतज्ञतायतो जीवाः खलु स्वस्वशक्त्यनुसारेण दैवानुग्रहं लभन्ते विविधगुरु-माध्यमेन।

शब्दानुशासनाभिमतेन वाचः परावस्था हि पश्यन्ती। आगमेषु परावाक्स्वरूपं व्याख्यातम्। पश्यन्तीदशामतिक्रम्येयं दशा राजते। अनिर्वाच्या हीयं परावाक्। आध्यात्मिकवर्णैर्गुरुः शिष्यं दीक्षितं कुरुते—ये वर्णाः शिष्यांस्त्रायन्ते पार्थिवचिन्ता-कवलात्। वागियं वैखरीवाचा मध्यमवाचा वा विनिर्मिता। एभिर्मन्त्रैर्दीक्षिता लभन्ते पश्यन्तीदशाम्। परावाग् हि स्वयं संवित्स्वरूपा। इयमनिर्वाच्या। सर्वशक्तिमतः

प्रसादेन आध्यात्मिकयात्रापथेऽखण्डमहायोगी परावाग्दशां प्राप्नुयाद् आहोस्विन्निष्काम-पदार्थतया एतद्दशारूढः स योगी सर्वकालिकमानवादिजीवान् मोचयितुमना भवेद् वेति दार्शनिकप्रश्नः खलूभयतः पाशारज्जुदशामेवानुसरति ।

निष्प्रयोजनोऽयं समुल्लेखो यत् कुण्डलिनीजागरणं विना साधकस्येयं यात्रा नैव सम्भवति । षट्चक्राणि हि षड्यन्त्राणि मानवशरीरे । कुण्डे = आश्रये यल्लीयते, तत् कुण्डलिनी । शक्तिर्यावदत्र वर्त्तते, तावत् सा कुण्डलिनीसंज्ञां लभते । निराधारा निराश्रया सत्येव सोद्दीपिता भवति । एतस्यां दशायां नास्यास्तु कुण्डलिनीत्वम् । अत्रैव सद्यो भवति जीवोऽहङ्कारविमुक्तः । शक्तिर्यदा शिवं गृह्णाति, अर्थान्निराधारा भवति, यदा शक्तिस्तदेव भवति कुण्डलिनीजागरणम् । द्विदलयोः शून्यावस्था हि शक्तेर्निराधारावस्था । उत्तिष्ठ-मानः साधकोऽत्र प्रार्थयते—"निराधारं मामीश्वरस्त्रायताम्" इति । द्विदलयोः पार्श्वद्वयं तयोर्हि प्रान्तद्वयम् । एताभ्यां प्रान्ताभ्यां द्वौ मार्गौ । उपरि परमकारणरूपम् अव्यक्तम्, अधश्चास्ते दृश्यमानानि वस्तूनि । मुमुक्षुर्यदैव भवति निराधारः, केवलं तदैव तस्य स्वभावतश्चिरं भिद्यन्ते षट् चक्राणि । अन्ततश्च सहस्रचक्रे सर्वे वर्णा अवर्णाश्च समसङ्गतिं लभन्ते । भूमावस्यां प्राणकुण्डलिनी मिलति कुण्डल्या । अतः शिवभावारोहणे शक्तिसाधनाऽवश्यम्भाविनो । कुण्डलिनीजागरणं विना शक्तिसाधनायाः साफल्यं कथमपि न सम्भवति । गुरवः स्वस्वशक्त्यनुसारेण विविधसिद्धासनेषु शिष्यान् दीक्षितान् कुर्वन्ति । कुण्डलिनीजागरणस्य पूर्णदशायां चित्तस्याद्वैतभावो यथार्थतोऽधिगम्यते । अप्राकृतेयं दशा शैवागमेऽभिधीयते पूर्णाहन्तेति, उपनिषदि चोच्यते परमं साम्यमिति । इयं दशा यथा प्रपञ्चानुगा, तथा प्रपञ्चातिगा च । एवमखण्डमहायोगी शिवस्य निखिल-जीवमुक्तिकामो भवेदस्यां परमसाम्यदशायां पूर्णाहन्तादशायां वेति नास्त्यत्राऽऽगम-शास्त्रीयप्रामाण्यम् ।

एतत् प्रसङ्गे गौडीयवैष्णवदर्शनमतमपि ग्राह्यम् । महाप्रभुश्रीचैतन्यस्यानुगामिनो मन्यन्ते यन्मुक्तेः पञ्चावस्थाम् अतिक्रम्य भक्तो हि निष्कामः सदातृप्तस्तिष्ठति, तदासौ भाग्यवान् केवलं भगवत्कृष्णसेवायामेवात्मनियोगं कुरुते । दूरमास्तामियम् अहङ्कारा-त्मिका चिन्ता यद् विश्वस्य सर्वे जीवा मोचनीया इति । भक्तो हि केवलं मञ्जरीसाहायकेन भगवन्तं कृष्णं राधाञ्च सेवते । प्रेम ह्यत्र दैवप्रेम, येन भगवत्कृष्णस्येन्द्रियाणि तृप्यन्ते । भक्तस्याऽऽत्मन इन्द्रियतृप्तिविधानं खलु कामः, प्रेम । महाप्रभुरेवमादिशति शिक्षाष्टके—त्वं हि ईश्वरस्य सेवको भृत्यः—भयावहसंसारसागरे पतितस्य पादपद्मस्योपरि रजःकणाविशेषोऽसि त्वम् । एवं सर्वमुक्तिवादो न रोचते पूर्णात्मसमर्पणसमर्थके गौडीय-वैष्णवदर्शने । भक्तानां भगवान्, अद्वैतवेदान्तानां ब्रह्म, योगिनां परमात्मेति यो हि

भगवान् श्रीकृष्णस्तस्यैव चरणकमले भक्तवैष्णवानां सकलकामनावासनानां समर्पणम् ।

आलङ्कारिका अभिमन्यन्ते यद् भक्त्यर्थमतिकामनामृते ब्रह्मोपलब्धिर्न सम्भवति । अतो जडा ब्रह्मोपलब्धिवर्जिताः, यतो नास्ति तेषां भक्त्यर्थमुत्कण्ठता ।

हीनयानबौद्धमते तूत्तिष्ठमानो योगी आर्हतपदवीं तथा निर्वाणञ्च विन्दमानोऽपि बुद्धत्वं तु नानायासेन प्राप्नोति । बुद्धत्वाधिगमाय गोत्रभूरवश्यमेव भवेत् । अस्यायमर्थः—अर्हत् कुर्य्याज्जन्मग्रहणमवश्यमेव बुद्धगोत्रे । अत ईश्वरभक्तिरपेक्ष्यते पूर्णात्मसमर्पणम् । अखण्डमहायोगी त्वपरिहार्य्यतया सर्वतःप्रथमं भवेदात्मसमर्पको भक्तः—तेनैवासौ लभेत महामायायाः योगमायाया अनुग्रहम् ।

निराकरणीयमतथा वा प्रारब्धकर्म अथवा प्राङ्निर्दिष्टा नियतिरप्यत्र प्रसङ्गतो विवेचनीया । वस्तुतस्तु प्रारब्धकर्माऽनिराकरणीयम् । केवलं भोगेनैव तस्य निवृत्तिः । कामं यौगिकप्रक्रियादिभिरप्युपायैः प्रारब्धकर्म निःसंशयं निराकरणीयम्; किन्तु शरीरस्याऽनित्यतयाऽवश्यध्वंसाभ्युपगमान्मतमिदं नोपादेयम् ।

नन्वत्युत्कृष्टोऽखण्डमहायोगी सर्वकालीननिखिलमानवादिजीवानां निखिलप्रारब्धं विफलीकर्त्तुं शक्नोति किम् ? एकदा भगवतो बुद्धस्य शिष्यः कश्चित् पप्रच्छ यदि तावन्निखिलजीवा निर्वाणं लभन्ते, तर्हि का गतिः स्यात् सृष्टसंसारस्य ? कियत्कालं तूष्णीमवलम्ब्य तदनु प्राह भगवान् न खलु युगपत् सर्वजीवानां मुक्तिर्भवेदिति, सृष्टिप्रक्रिया प्रवर्त्तते यथापूर्वम् । यदि तावदिदमभ्युपगच्छामो यद् अत्युत्कृष्टोऽखण्डमहायोगी विश्वस्य सकलकालीनसकलजीवानां सुखदुःखादिभोगमात्मसात्कर्त्तुं नालमिति तर्हि वयम् अत्याधुनिकचेतनासम्पन्नरूपेण नापि गमनीयतापदवीं गच्छेम । अतो विस्पष्टमिदं विश्वमुक्तिवादो भारतीयास्तिकदार्शनिकमतयल्पमेव लभते समर्थनम् । रुष्टवृष्टशुम्भासुरेण स्पर्धितेन महामाया पृष्टा प्रत्युवाच—"एकैवाहं जगत्यत्र द्वितीया का ममापरा" इति । परमेश्वरी माता महामायैव शक्नोति दिव्यसुकरसर्वमुक्तिवादं सफलीकर्तुम्, यतो विविधानां देवानां योगिनाञ्चालौकिक्यो याः शक्तयस्ताः खलु परमजनन्या माहात्म्यमेव ।

अयमेव मार्गः समालोकितः कविराजमहायोगिना, येन मार्गेणोत्तिष्ठमानो योगी-यस्मिन् कस्मिन्नपि सम्प्रदाये भवतु वाऽसौ योगी-आत्मानं महामायानुग्रहभाजं विधातुं समर्थो भवति । सर्वशक्तिं प्रत्यलौकिकप्रज्ञाप्रगाढप्रेमत एवापतति सामर्थ्यमिदं तस्मिन् महायोगिनि । योगिवरो महानयं मानवो निखिलभारतीयदार्शनिकभावधाराम् आत्मनि समन्वितवानात्मनो मौलिकमनीषया, आध्यात्मिकप्रातिभानुभावेन च । इत्थमतस्तत्रभवतामखण्डमहायोगभावनाऽधुनापि राजते सर्वोत्कृष्टा सर्वथा निरुपमतया ।



# यज्ञतत्त्वदर्शनम्

डॉ० युगलकिशोरमिश्रः
आचार्योऽध्यक्षश्च,
वेदविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी

❀❀❀

सृष्टेः प्रारम्भे प्रजाकल्याणार्थं विधात्रा वेदशब्दराशेरुपदेशो विहित इति शास्त्रेषु बहुधा वर्णितमस्ति। वेदानाञ्च मुख्यः प्रतिपाद्यो विषयो यज्ञविद्येति। अत एवोक्तम्— "वेदा हि यज्ञार्थमभिप्रवृत्ताः"[1]। सेयं यज्ञविद्या न केवलं सृष्टिप्रपञ्चस्याऽऽधारभूता, प्रत्युत प्रकृतेरनामयपूर्णस्य साधुसञ्चालनस्य विकासस्य च कृते महत्त्वपूर्णं साधनमस्ति यद् वरदानतया मानवेभ्यः प्रदत्तम्। तथा चोक्तं श्रीमद्भगवद्गीतायाम्—

सह यज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्[2]॥

तदेतस्य महनीयगुणगणविशिष्टस्य यज्ञपदार्थस्य कोऽर्थः, किञ्च स्वरूपमिति जिज्ञासायामुच्यते—

'यज्ञ'-शब्दः 'यज्' धातोः, 'यज्-याच्-यत्-विच्छ-प्रच्छ-रक्षो नङ्'[3] इति सूत्रेण 'नङ्' प्रत्यये कृते सिद्ध्यति। 'अनेकार्था हि धातवः' इति न्यायेन 'यज्' धातुः, देवपूजा-सङ्गतिकरणदानेष्विति त्रिष्वर्थेषु प्रयुक्तः। तेन 'यज्ञ'इति पदस्य क्रमेण व्युत्पत्तिलभ्या अर्था एवं भवितुमर्हन्ति—

(क) यजनं इन्द्रादिदेवानां पूजनं सत्कारभावनं यज्ञः।

(ख) यजनं धर्म-देश-समाजमर्यादारक्षायै महामनसां विचारकाणामेकीकरणं यज्ञः।

(ग) इज्यते परब्रह्मणि सर्वस्वं निधाप्यते येन, स यज्ञः।

(घ) इज्यन्ते चत्वारो वेदाः साङ्गाः सरहस्याः सच्छिष्येभ्यः सम्प्रदीयन्ते (उपदिश्यन्ते) सदाचार्य्यैर्येन स यज्ञः।

---

१. विष्णुधर्मोत्तरपुराणम्–९।१०४; २ श्रीमद्भगवद्गीता–३।१०; ३. पा० ३।३।९०।

भाट्टदीपिकाकारस्तु—"यत्र प्रक्षेपाङ्गको देवतोद्देशपूर्वको द्रव्यत्यागोऽनुष्ठीयते, स यागपदार्थः[१]" इत्युपदिशति। अतश्च मन्त्रैर्देवतामुद्दिश्य द्रव्यस्य दानं याग इति मीमांसकानामभिमतम्। पौराणिकास्तु—

देवानां द्रव्यहविषां ऋक्सामयजुषां तथा।
ऋत्विजां दक्षिणानां च संयोगो यज्ञ उच्यते[२]।। इत्यभिप्रयन्ति।

समेषामेतेषां पर्यालोचनेनेदं प्राप्तं भवति यत् सृष्टिकल्याणार्थं देवपूजनम्, विचारकाणामेकीभवनम्, स्वसाधनानां ज्ञानविषयाणां वा सम्प्रदानं यज्ञ इति।

**वैदिकयज्ञास्तेषां भेदाश्च—**

सोऽयं यज्ञो द्विप्रकारको मूलयया वर्त्तते। एकः प्राकृतापरनामा स्वयम्भूयज्ञः, तदनुकृतिरूपः कृत्रिमयज्ञोऽन्यः। तत्र परमे व्योमनि पृथ्वी-सूर्य-चन्द्रादिग्रहाभिमानिनीभिः देवताभिरनवरतभाव्यमानः प्राकृतिकः स्वयम्भूयज्ञः। अनुकृतिरूपः कृत्रिमयज्ञस्तु—ऐहिकामुष्मिकफलोद्देश्येन मानवेभ्योऽनुष्ठीयमानः। अस्यैव प्रवृत्तिलक्षणधर्म इति संज्ञया व्यवहारः समुपलभ्यते। प्रवृत्तिलक्षणधर्मात्मकस्य यज्ञस्य द्वौ वर्गौ श्रौत-स्मार्त्तरूपौ स्तः। तत्र येषां साङ्गोपाङ्गतया श्रुतौ साक्षादुपदेशो विहितस्ते श्रौतयज्ञाः। येषां साङ्गोपदेशः स्मृतौ समुपलभ्यते, ते हि स्मार्त्तयज्ञाः। कुत्रचिद् ग्रन्थेषु यज्ञस्य त्रयो वर्गाः—वैदिक-(श्रौतः) स्तान्त्रिको मिश्रश्चेति नाम्ना समुपलभ्यन्ते। तान्त्रिकमिश्रमखयोः स्मार्त्तवर्गेऽन्तर्भावो भवितुमर्हति। श्रीमधुसूदनौझामहोदयेन पाकयज्ञहविर्यज्ञ-महायज्ञातियज्ञ-शिरोयज्ञतया पञ्चवर्गाः स्वीकृताः।

**श्रौतयज्ञाः, तद्भेदाश्च—**

श्रुत्या साक्षादुपदिष्टानां श्रौतयज्ञानां मुख्यतस्त्रयो भेदाः सन्ति—इष्टिः, पशुः, सोमश्चेति। पशुहिंसारहिता आज्याहुतिसंयुक्ता इष्टयः। वपामांसप्रदानयुक्ताः श्रौतयागाः पशुपदवाच्याः। ग्रहसंज्ञकपात्रविशेषद्वारा सोमरसाहुतिसंयुक्ता यागाः सोमयागाभिधानाः। ऐतरेयब्राह्मणे श्रौतयज्ञस्य पञ्चविधत्वम्—अग्निहोत्र-दर्शपूर्णमास-चातुर्मास्यपशु-सोमतया निरूपितम्। कल्पसूत्रकारैस्तु श्रौतयज्ञानां स्वरूपगतसाम्याऽऽधारेण हविर्यज्ञसंस्थस्सोमसंस्थश्चेति वर्गद्वये सन्निवेशः कृतः। तत्र—अग्न्याधेयम्, अग्निहोत्रम्, दर्शपूर्णमासौ, आग्रयणम्, चातुर्मास्यानि, निरूढपशुबन्धः, सौत्रामणी, पिण्डपितृयज्ञश्चेति सप्त हविर्यज्ञसंस्थाः। पर्यालोचनेनेदं विज्ञातं भवति यद् हविर्यज्ञसंस्थेषु यागेषु त्रीन् उपविभागान् कर्त्तुं शक्नुमः। तेन हि—अग्न्याधेय-अग्निहोत्र-दर्शपूर्णमास-आग्रयण-चातु-

---

१. भाट्टदीपिका–४।२।१२;
२. मत्स्यपुराणम्–१४४।४४।

मस्यानाञ्चान्तर्भावो हविर्यज्ञसंस्थात्मके 'इष्टि'इति पदवाच्य उपविभागे वर्त्तते। एतदतिरिक्तं 'इष्टय्यनानां (=इष्टिविकृतिरूपाणामयनयागानां) काम्येष्टीनाञ्च सर्वासामप्यस्मिन्नेवोपविभागे समावेशः। पश्वाख्ये हविर्यज्ञसंस्थोपविभागे येषां समावेशोऽस्ति, ते सन्ति निरूढपशुबन्धयागः, अग्नीषोमीयपशुबन्धयागः, सौत्रामणीपशुबन्धयागः, चयनीयपशुबन्धयागश्चेति। वस्तुतस्तु पशुबन्धस्य द्वावुपविभागौ हविर्यज्ञ-सवयज्ञविधाख्यौ मन्तव्यौ। तत्र निरूढपशुबन्धस्य सौत्रामण्यन्तर्गतस्य पशुबन्धस्य च हविर्यज्ञविधाख्ये समावेशः। अग्नीषोमीयपशुबन्धस्य चयनीयपशुबन्धस्य चान्तर्भावः सवयज्ञविधे भवितुमर्हति।

अग्निष्टोमः, अत्यग्निष्टोमः, उक्थ्यः, षोडशी, वाजपेयः, अतिरात्रः, आप्तोर्यामश्चेति सप्त सोमयज्ञसंस्था यागाः। एतेषां सोमयज्ञसंस्थानां यागानां पञ्चसु—एकाहः, अहीनः, रात्रिसत्रम्, अयनसत्रम्, महासत्रम् इत्यभिधेयासु श्रेणिषु विभजनमुपयुक्ततरमस्ति। तत्रैकदिनसाध्याः यागा एकाहपदाभिधेयाः। द्विरात्रप्रभृति दशरात्रपर्यन्ता अनेकदिवससाध्यायागा अहीनपदवाच्याः। एकादशरात्रमारभ्य शतरात्रपर्यन्ता अतश्च बहुरात्रसाध्या यागाः रात्रिसत्रसंज्ञाकाः। शतरात्रित ऊर्ध्वं सहस्ररात्रिपर्यन्तकालसाध्यान्ययनसत्राणि भवन्ति। भूतयज्ञः, मनुष्ययज्ञः, देवयज्ञः, पितृयज्ञः, ब्रह्मयज्ञश्चेति पञ्च महायज्ञाः[1] महासत्रकोटिमधिष्ठितास्सन्ति। एतदतिरिक्तं राजसूय-अश्वमेध-वाजपेय-अग्निचयनयागास्तु "अतियज्ञ"पदाभिधेयास्सन्ति। श्रौतकल्पेषु धर्म्मयाग-प्रवर्ग्ययागयोः शिरोयज्ञनाम्ना संव्यवहारः समुपलभ्यते। समेषामेतेषां पृथक् पृथङ्निरूपणमतिविस्तरसाध्यमित्यस्मिँल्लेखे तत् सर्वथा दुष्करमेव।

इदमत्रावबोधनमावश्यकं यद् उपर्युक्तानां श्रौतयागानां कोटिचतुष्टयेऽन्तर्भावः कल्पसूत्रकारैर्विहितः। ते च—प्रकृतिरूपयागाः, विकृतिरूपयागाः, उभयरूपयागाः, अनुभयरूपाश्चेति। उत्पत्तिवाक्ये येषां समग्राङ्गोपदेशस्ते प्रकृतियागाः। ते च प्रकृतियागास्त्रयः—अग्निहोत्रम्, इष्टिः, सोमश्चेति। येषां मुख्यकर्मणामेवोपदेशः, प्रकृतियाग-

---

१. (क)—छन्दोगपरिशिष्टे—

देवभूतपितृब्रह्ममनुष्याणामनुक्रमात् ।
महासत्राणि जानीयात्त एव हि महामखाः ॥

(ख)—तथा च मनुस्मृतौ (३।१०)—

अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् ।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥

तश्चाङ्गप्राप्तिस्ते विकृतियागः। यथा—मासाग्निहोत्रमग्निहोत्रस्य, काम्येष्टयो दर्शपौर्णमासेष्टेः, विश्वजिदादयः सोमयागस्य विकृतियागाः सन्ति। यत्रान्येषां यागाङ्गानामतिदेशः, अथ च स्वीयाऽसाधारणाङ्गानां धर्माणाश्चान्यत्र प्राप्तिर्भवति, स उभयात्मको यागः, यथा—ज्योतिष्टोमाङ्गभूतोऽग्नीषोमीयः पशुयागः। यत्रान्येषां यज्ञाङ्गानां नातिदेशः, न च स्वकीयाङ्गानां यज्ञान्तरेषूपयोगः, स यागोऽनुभयात्मकः। यथा—अग्न्याधेयम्, अग्निचयनमिति।

**स्मार्त्तयज्ञास्तेषां भेदाश्च—**

स्मृतिग्रन्थाधारेण प्रवृत्ताः स्मार्त्तयज्ञा मूलतया द्विप्रकारकाः सन्ति। (१) गृह्योक्ताः, (२) स्मृतिपुराणग्रन्थोक्ताश्च। तत्र गृह्योक्तानां यज्ञानां "पाकयज्ञ"-संज्ञया व्यवहारो भवति। चरुपाकमयत्वात्, स्वल्पकायत्वात्, हिंसाविरहितत्वाच्चैते पाकयज्ञसंज्ञया व्यवहृता भवन्ति। पारस्कराचार्याणां मतेन पाकयज्ञाश्चतुर्विधाः सन्ति—हुतः, अहुतः, प्रहुतः, प्राशित इति[1]। यत्र हवनं विधीयते, स हुतः। हवनं बलिहरणश्चेत्येतद्द्वयं यत्रानुष्ठीयते, स प्रहुतः। यत्र ब्राह्मणभोजनमात्रं कर्त्तव्यतयोपदिश्यते, स प्राशितः। एतदतिरिक्तप्रकारको यज्ञः 'अहुतः' इत्यभिधीयते। पाकयज्ञेषु सप्तपाकयज्ञा मुख्यरूपेण परिगणिताः सन्ति—औपासनहोमः, वैश्वदेवम्, पार्वणम्, अष्टका, मासिश्राद्धम्, श्रवणाकर्म, शूलगवश्चेति।

स्मार्त्तकर्मणः प्रसारविषय ऐतिहासिकदृशा विचारकाणां पाश्चात्यानामभिमतं वर्त्तते यच्छ्रौतयज्ञानां दुर्बोधत्वात्, दुःसम्पाद्यत्वात्, भक्तियोगस्य प्राबल्याच्च कालान्तरे स्मृति-पुराणग्रन्थेषु पञ्चदेवोपासनायाः सविशेषं महत्त्वं प्रतिपादितमभूत्, येन स्मार्त्तयज्ञानां काचन विशिष्टपरम्परा प्रसृताऽभवत्, यत्र देवोपासनायाः केन्द्रे यागप्रयोगस्य किञ्चनानुविकसितं त्रिपुटस्वरूपं—जपात्मकम्, होमात्मकम्, अभिषेकात्मकञ्च समुद्भूतम्। एषु प्रत्येकं त्रयो भेदाः—याग-महायाग-अतियागरूपेण सन्ति। भेदस्यास्याऽऽधारो जपाहुत्यावर्त्तनसंख्यायाः परिमाणभेदोऽस्ति। तत्र यागात्मके जपस्य, आहुतेः, आवर्त्तनसंख्यायाः यत् परिमाणं शास्त्रेषु निर्दिष्टम्, सामान्यतस्तद् द्विगुणितं ततोऽधिकं वा परिमाणं महायागे, तत्त्रिगुणितं ततोऽधिकं वा शास्त्रानुसारेण परिमाणमतियागे भवति। यथा—होमात्मके विष्णुयागे षष्टिसहस्रोत्तरलक्षाहुतिसंख्या प्रतिपादिता वर्त्तते। अतस्तद्द्विगुणितो विंशतिसहस्रोत्तरलक्षत्रयाहुत्यात्मको महाविष्णुयागः। एवं च त्रिगुणितोऽशीतिसहस्रोत्तरलक्षचतुष्टयाहुत्यात्मकोऽतिविष्णुयाग इत्यभिधीयते।

---

१. पा० गृ० १।४।१।

**यज्ञानामावश्यकता, महत्त्वञ्च—**

भारतीयसंस्कृतौ शास्त्रेषु च मानवजीवनस्यास्ति किञ्चित् सदुद्देश्यम्। तच्चोद्देश्यमस्ति रचनात्मकेषु कल्याणकर्मसु सततं संचेष्टनम्। तदिदं भगवती श्रुतिरेवमुपदिशति—

> कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः।
> एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे[1]॥

अयम्भावः—कर्माणि = अग्निहोत्रादीनि निष्कामानि मुक्तिहेतुकानि कुर्वन्नेवेह लोके शतं समाः शतवर्षपर्यन्तं जिजीविषेः = जीवितुमिच्छेः। एवं कर्म कुर्वतो जिजीविषतो मुक्तिरस्तीति। इतः प्रकारादन्यथा प्रकारान्तरेण मुक्तिर्नास्ति। स्वर्गादिप्राप्तौ यथा नानाप्रकाराः सन्ति, न तथा मुक्तावित्यर्थः। निष्कामकर्मानुष्ठाने शुद्धान्तःकरणस्यैव मुक्तिः। ननु कर्मणः फलेन भाव्यम्, तर्हि कथं मुक्तिरित्यत आह—न कर्मेति। मुक्त्यर्थं क्रियमाणं कर्म नरे मनुष्ये न लिप्यते = न सम्बध्यते। मुक्तिकारणान्तःकरणशुद्ध्यापादकत्वेनोपक्षीणशक्तित्वाद् यावदिच्छा, तावत् कर्मस्वधिकार इति दर्शितम्। उत्तरार्धस्यार्थान्तरमेवमपि दर्शयन्ति शास्त्रकाराः—एवं प्रकारे त्वयि जिजीविषति नरे, इतः = एतस्मात् कर्मकरणादन्यथा प्रकारान्तरं नास्ति, येन प्रकारेणाशुभं कर्म न लिप्यते। अतः शास्त्रविहितं कर्म कुर्वन्नेव जीवितुमिच्छेत् प्रत्यवायपरिहारायेत्यर्थः।

अमुमेव सिद्धान्तमुररीकृत्याचार्या मानवजीवनमिदं पुरुषार्थचतुष्टयेनाबध्नन्। तैत्तिरीयसंहितायामुक्तं यन्मानवः स्वसत्ताग्रहणकालत एवाधमर्णो भवति। ऋणस्यास्यापाकरणमस्मिन्नेव जन्मनि शास्त्रानुमोदितकर्मानुष्ठानद्वारा नितान्तमावश्यकम्। तद्यथा—"जायमानो वै ब्राह्मणस्त्रिभिर्ऋणैर्ऋणवान् जायते। ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य इति[2]।"

इदमत्रावधेयम्भवति यदृणस्यापाकरणं रचनात्मककर्मसदनुष्ठानेनैव सम्भवति, नान्यथा। अत एव श्रीमद्भगवद्गीतायां कर्मयोगस्य महत्त्वमुपदिशन् भगवानाह—

---

१. मा० सं० ४०।२।

२. (क)—तै० सं० ३।१०।५।

(ख)—श्रीमद्भागवते—(१०.८४.३९)ऽपि—

> "ऋणैस्त्रिभिर्द्विजो जातो देवर्षिपितॄणां प्रभो।
> यज्ञाध्ययनपुत्रैस्तान्यनिस्तीर्य त्यजन् पतेत्॥

नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः।
शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः[१] ॥ इति।

इत्थं कर्मणोऽनिवार्यत्वे सति किं श्रेष्ठतमं कर्मेति जिज्ञासायां पुनरप्याह—

कर्मब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम्।
तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम्[२] ॥ इति।

जनकाद्या राजर्षय आसक्तिविरहितेन यज्ञकर्मणा परां सिद्धिं लेभिर इति[३] कृत्वा यज्ञस्य महत्त्वं सर्वथा प्रतिष्ठितमेव। यज्ञकर्मणोऽनिवार्यत्वं गीतायां श्रीमद्भगवता वर्णितम्—

यज्ञदानतपः कर्म न त्याज्यं कार्यमेव तत्।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्[४] ॥ इति।

शास्त्रानुसारेण सृष्टिप्रपञ्चेऽस्मिन् प्रत्येकं चेतनाचेतनपदार्थजातं परस्परं सापेक्षभावमाश्रयति। अतश्चोपकार्योपकारकभावसम्बन्धः सृष्टेः कश्चन सनातनो धर्मः। पौराणिकमान्यतानुसारेण सृष्टिकर्त्ता प्रजापतिर्दिव्यशक्तिसमन्वितान् देवान् संसृज्य द्युलोकस्यानन्तवैभवप्रतिष्ठितं परमन्नोत्पत्तिसामर्थ्यविहीनं साम्राज्यं तेभ्यः सम्प्रायच्छत्। एवमेव स प्रजापतिर्मानवान्निर्माय तेभ्यः पृथिव्या भूमगुणवत्या अतश्च बहुसस्योत्पत्तिसामर्थ्ययुतायाः साम्राज्यमददात्। देवगणा मनुष्याश्च परस्परं भ्रातरः। अनयोर्मध्ये पारस्परिकः सहयोगः सद्भावश्च यथा सुप्रतिष्ठितो भवेदिति विचार्य द्युलोकस्य पृथिवीलोकाधीनत्वम्, पृथिवीलोकस्य च द्युलोकाधीनत्वं प्रजापतिना सम्पादितम्। अनन्तवैभवसत्त्वेऽपि द्युलोकस्था देवाः स्वपोषणार्थमन्नात्मकं हविर्यज्ञमुखेन मनुष्यसकाशात् कामयन्ते। अत एवोक्तं श्रुतौ—"इतः प्रदानाद् हि देवा उपजीवन्ति। यदन्नं होमान् जुहोति, देवानेव तत् प्रीणाति[५]।"

मनुष्यास्तु यज्ञं सम्पादयन्तो द्युलोकस्थान् देवबान्धवान् हविप्रदानद्वारा प्रीणयन्तः प्रत्युपकाररूपेण सर्वविधान्न-रसनिष्पादनसमर्थां सुत्रामयीं जलवृष्टिं देवगणसकाशात् प्राप्नुवन्ति। अत एवोक्तम्—"यज्ञाद् भवति पर्जन्यः" इति[६]। अतश्च यज्ञाख्यं कर्म देवमनुष्ययोः पारस्परिकसद्भावरूपायाः संस्कृतेरेकं प्रतीकमस्ति, यत्रानन्तनवनवानन्दानु-

---

१. गीता–३।८; २. तत्रैव–३।१५।
३. "कर्मणैव हि संसिद्धिमास्थिता जनकादयः" (गीता–३।२०)।
४, गीता–१८।५; ५. श० ब्रा० १३।२।१।१; ६. गीता–३।१४।

भूतेः संभावना निहिता वर्त्तते[1]। अत एवोक्तं भगवता श्रीकृष्णेन गीतायाम्—

देवान् भावयतानेन ते देवा भावयन्तु वः।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥
इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः।
तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः[2] ॥ इति।

**यज्ञस्याध्यात्मिकपक्षयुक्तत्वम्—**

ब्राह्मणादिग्रन्थेषु "त्रिवृद्धि यज्ञः" इति वचनाद् यज्ञस्याधिभौतिक-आधिदैविक-आध्यात्मिकाः पक्षाः प्रतिपादिताः। तत्र वृष्टि-राष्ट्रोन्नतिप्रभृतीन्याधिभौतिकपक्षफलानि, प्रकृतिप्रीणन-देवप्रीणनाद्याधिदैविकपक्षफलानि च सन्त्येव। आध्यात्मिकः पक्षः कीदृश इति विचारणायामेवमुक्तं भवति—यज्ञः खलु प्रजापतेः प्रतिमेति वेदवचनम्। तथाहि—"स देवेभ्य आत्मानम्प्रदायाथैतमात्मनः प्रतिमामसृजत यद्यज्ञन्तस्मादाहुः प्रजापतिर्यज्ञ इत्यात्मनो ह्येतम्प्रतिमामसृजत इति[3]।" प्रजापतेः स्वरूपं परतत्त्वरूपेण सच्चिदानन्दात्मरूपेण चेत्थं प्रतिप्रादितं श्रुतिवचनेषु— 'सत्यं हि प्रजापतिः[4]", "आत्मा वै प्रजापतिः[5]","अमृतः प्रजापतिः[6]"। सत्यमयत्वमात्ममयत्वममृतमयत्वञ्च परतत्त्व एव सङ्गच्छत इति यज्ञात्मकस्य प्रजापतेः परब्रह्मरूपत्वं सर्वथा शास्त्रसम्मतमस्ति। तेन हि—"आत्मा वा अरे मन्तव्यः श्रोतव्यो निदिध्यासितव्यः" इत्युपनिषद्भणितिर्यज्ञतत्त्वचिन्तने पर्यवस्यति। "यज्ञं कृत्वेदं सत्यं तनवामहै[7]" इत्यादीनि च वचनानि यज्ञस्याध्यात्मपरतां सूचयन्ति। न केवलमेतावदेव प्रत्युत वेदे प्रतिपादितानि वचनानि यज्ञस्य तमोरूपाज्ञाननिराकरणद्वारा नित्यस्य सुखरूपस्य प्रकाशरूपस्य चात्मज्ञानस्याधिगमे हेतुतां सूचयन्ति—

"तमसा वा असौ लोकोऽन्तर्हितः स एतेन ज्योतिषा तमोपहत्य स्वर्गं ल्लोकमुपसङ्क्रामति[8]।" "नौर्ह वा एषा स्वर्ग्या[9]।"

यज्ञफलरूपः स्वर्गो लोकः सच्चिदानन्दरूपस्य परब्रह्मण औपाधिकमुपनिषत्सु प्रसिद्धं कार्यब्रह्माभिधं ब्रह्मलोकापरनामकं रूपमेवेति मन्त्रवर्णैर्विज्ञायते। तथाहि—

---

१. "यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः" ( गीता ३।९ )। २. गीता—३।११-१२।
३. मा० श० ब्रा० ११.१.८ ३;
४. मा० श० ब्रा० ४.२-१ २६।
५. मा० श० ब्रा० ४.५-९.२;
६. मा० श० ब्रा० ६.३.१.७।
७. मा० श० ब्रा० ९.५.१.१८;
८. मा० श० ब्रा० ४.३.४.८।
९. मा० श० ब्रा० ४.२.५.१०।

'स्वर्यन्तो नापेक्षन्त आद्यां रोहन्ति रोदसी ।
यज्ञं ये विश्वतोधारं सुविद्वांसो वितेनिरे[1] ॥"

अस्यार्थस्तु—ये यजमानाः सुविद्वांसः सुष्ठु कर्मप्रकारं जानन्तो विश्वतोधारं जगद्धरणहेतुं यज्ञं वितन्वन्ति विशेषेण कुर्वन्ति, ते यजमाना द्यामन्तरिक्षस्वर्गस्थमादित्य-मण्डलं प्राप्नुवन्तोऽन्यत् किमपि स्थानं नापेक्षन्त इति ।

यज्ञकर्मणैवास्मत्पूर्वपुरुषा ऋषयश्चिन्मयतेजस्तत्त्वसारूप्यमलभन्त इत्यन्यस्मिन् मन्त्रवर्णे स्पष्टमुक्तम्—

"यदाकूतात्मसुस्रोद्धृदो वा मनसो वा संभृतं चक्षुषो वा ।
तदनु प्रेत सुकृतामु लोकं यत्र ऋषयो जग्मुः प्रथमजाः पुराणः[2] ॥"

अयम्भावः—हे मानवाः, यूयं तदनु प्रेत प्रजापतिकृतं कर्मानुगच्छतानुसरत । प्रजापतिशरीरादुत्पन्नं यत् कर्म वैदिकं तत् कुरुतेत्यर्थः । तत्र कर्मणि कृते सति सुकृतां पुण्यवतां चिन्मयलोकं गच्छत । प्रथमजाः पूर्वोत्पन्नाः पुराणाः पुरापि नवा अजरामरा ऋषयो यत्र लोकं जग्मुः । यद्धि कर्म प्रजापतेराकूतादभिप्रायाद् हृदो वा हृदश्च बुद्धे-र्मनसः संकल्पात्मकाच्चक्षुष = चक्षुरादीन्द्रियेभ्यश्च समसुस्रोत् = संस्रुतं प्रसृतम् । ब्रह्मणा यत् सर्वात्मना सृष्टं कर्म, तत् कृत्वा स्वर्लोकं गच्छतेत्यर्थः । कीदृशं कर्म ? संभृतं संभारैः पूर्णसामग्रीकर्मिति ।

अतश्च वैदिकं यज्ञकर्म चरमपुरुषार्थसाधकमिति शम् ।



---

१. मा० सं० १७।६८;

२. मा० सं० १८।५८ ।

# मृच्छकटिकस्य भाषिकी संरचना

डॉ० रामाशीषपाण्डेयः

संस्कृत-विभागाध्यक्षः,

मारवाड़ी-महाविद्यालयस्य

राँची ( विहार )

❀❀❀

भाषामधिकृत्य कृता संरचनेत्यस्मिन्नर्थे ठकि कृते स्त्रीत्वविवक्षायां 'भाषिकी' इति शब्दो निष्पद्यते। सम्यग् रच्यते इति सम्+रच् प्रतियत्ने+णिचि+युचि+टापि[1] च कृते संरचना, यद्वा सम्+रच्+ल्यु+टापि कृते संरचना। मृदो मृत्तिकायां शकटिका चारुदत्तपुत्रस्य रोहसेनस्य क्रीडनार्थं षष्ठे अङ्के वर्णितं मृत्तिकया निर्मितं क्रीडनकरूपं क्षुद्रशकटं यस्मिन्निति मृच्छकटिकम्। यद्वा मृदः शकटं मृच्छकट-मत्रास्तीति मृच्छकटिकम्[2]। मृच्छकटिकं नाम प्रकरणं महाकविना शूद्रकेण प्रणीतमिति विदितमस्ति संस्कृतजगति। तस्य प्रकरणस्य भाषिकी संरचना भाषिकसौन्दर्यञ्च प्रकृत-शोधलेखस्य विषयः।

आचार्ययास्केन स्वकीयनिरुक्ते देशकालानुसारेण शब्दानां भेदो विवेचितः। भाषिकाः शब्दा नैगमाः शब्दाश्च। एकेषु प्रदेशेषु प्रकृतय एव धातुशब्दानां भाष्यन्ते विकृतय एकेषु[3]। शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते विकारमस्यार्येषु भाषन्ते शव इति। दातिर्लवनार्थे प्राच्येषु दात्रमुदीच्येषु[4]। अनेन देशभेदाद् भाषाभेदः स्पष्टः। देशभाषायाः संकेतो मृच्छकटिकेऽपि 'वाग्देशभाषान्तरे'[5] इति प्रतिपादयता शूद्रकेणोप-स्थापितः।

---

१. ण्यासश्रन्थो युच्—अष्टा० ३।३।१०७ ( हला०—पृ० ५५६ ), पुनश्च वाच० भा० ६, पृ० ४७८९।

२. अत इनिठनौ—अष्टा०–५।२।११५।

३. धातोराख्यातपदभावेन यः प्रयोगः, सा प्रकृतिः। नामीभूतस्य तस्यैव यः प्रयोगः, सा विकृतिः ( नि० दु० वृ० २।१ )।

४. अथापि भाषिकेभ्यो धातुभ्यो नैगमाः कृतो भाष्यन्ते दमूनाः क्षेत्रसाधा इति। अथापि नैगमेभ्यो भाषिकाः, उष्णं घृतमिति—नि० २।१;    ५. मृ० ३।२०।

संस्कृतरूपकेषु भाषावैविध्यं प्राप्यते। तेषु विभिन्नानि पात्राणि नानादेशेभ्यः समागतानि विभिन्नस्तरीयाणि भिन्नसंस्कारयुक्तानि भवन्तीति विदितमस्ति। पात्रोचिता देशकालसंस्कारजन्या तेषां भाषाप्रभेदाश्च रूपके स्वाभाविकतया प्रकटनाय प्रयोक्तव्याः प्रयुक्ताश्च सन्ति प्रायेण संस्कृतसाहित्ये। प्राचीनसंस्कृतनाटकेषु सर्वत्र संस्कृतभाषाप्राकृतभाषा च प्रचलिता वर्तते। रूपकेषु प्रयुक्ता संस्कृतभाषा शिष्टानामुच्चस्तरीयपात्राणामाभिजात्यानां नायकादीनां व्यवहारभाषा तथा तेषु प्रयुक्ता प्राकृतभाषा विभिन्नप्रदेशेषु प्रचलिता क्षेत्रभूता तेषां निम्नवर्गीयपात्राणां स्त्रीशूद्रादीनां चेटशकारादीनां भाषा प्रसिद्धा। पुरा सामान्येन प्रयुक्ता राज्यशासनमानिता संस्कृतभाषा शिष्टाश्रया, तथा सर्वजनव्यवहार्या क्षेत्रभाषा तत्तत्स्थानभूता प्राकृतभाषाऽऽसीत्। 'अवस्थानुकृतिर्नाट्यम्'[1] इति दशरूपकवचनेन चतुर्विधानामाङ्गिकवाचिकाहार्यसात्त्विकानामभिनयेनावस्थानुकरणं नाट्यमिति वाचिकाभिनये पात्रानुरूपं तेषामवस्थानुरूपञ्च भाषायाः प्रयोगस्तेषु विहितः।

नाट्यशास्त्रानुसारेण देशरूपप्रयोगतो भाषा चतुर्विधा भवति—अतिभाषार्यभाषा जातिभाषा जात्यन्तरीभाषा चेति। तासु देवानामतिभाषा राज्ञामार्यभाषा संस्कारपाठ्यसंयुक्ता सम्यङ्न्यायप्रतिष्ठिता। जातिभाषा पुनः म्लेच्छशब्दोपचारा भारतं वर्षमाश्रिता च द्विविधा। ग्राम्यारण्यपशूद्भवा नाना विहगजा च जात्यन्तरीभाषा नाट्ये प्रयुक्ता। प्राकृतं संस्कृतञ्च भाषा चातुर्वर्ण्यसमाश्रया विद्यते[2]।

'रूपकं तत्समारोपाद् दशधैव रसाश्रयम्' इति[3] रूपकस्य दशसु प्रभेदेषु द्वितीयो भेदः प्रकरणरूपात्मको विद्यते। प्रकरणलक्षणेनोपेतं कविकल्पितलोकवृत्तानुसृतं शृङ्गाराङ्गीरसाप्लावितं हास्यबीभत्सादिरसाङ्गभूतं तैराह्लादितं चारुदत्तेन दरिद्रतायामपि

---

१. द० रू० १।७।

२. अतिभाषार्यभाषा च जातिभाषा तथैव च।
तथा जात्यन्तरी चैव भाषा नाट्ये प्रकीर्तिताः॥
अति भाषा तु देवानामार्यभाषा तु भूभुजाम्।
संस्कारपाठ्यसंयुक्ता सम्यङ्न्यायप्रतिष्ठिता॥
द्विविधा जातिभाषा च प्रयोगे समुदाहृता। म्लेच्छशब्दोपचारा च भारतं वर्षमाश्रिता॥
अथ या जात्यन्तरीभाषा गाम्यारण्यपशूद्भवा। नाना विहगजा चैव नाट्यधर्मी प्रयोगतः॥
(ना० शा० १८।२४-२८)

३. द० रू० १।७।

धर्मकामार्थतत्परेण धीरप्रशान्तनायकेन युक्तं धूता नाम्नी कुलजा वसन्तसेना नाम्नी वेश्या चेति नायिकाद्वयेन तृतीयभेदात्मकं धनञ्जयमतेन धूर्तसंकुलं संकीर्णं मृच्छकटिकं नाम प्रकरणमिति विदितमस्ति सुरभारतीसमाजे। तत्र प्रयुक्ता कालपात्राश्रिता संस्कृतप्राकृतापभ्रंशरूपा विभिन्नभाषाभाषिकसंरचनायामादौ द्रष्टव्याः, तथा च संवाद-प्रकारतां भाषायाः काव्यात्मकतां तस्याः सौन्दर्यञ्चेति द्रष्टव्यम्।

**मृच्छकटिके प्रयुक्ता संस्कृतभाषा—**

सम्+कृ+क्त इत्यनेन निष्पन्नः संस्कृतशब्दः प्रकृतिप्रत्ययादिभिः संस्कारैः संस्कृतः संस्कृतभाषात्वेन व्यवह्रियते। 'संस्कृतं नाम दैवी वागन्वाख्याता महर्षिभिः[१]' इति संस्कृतं वाग् दैवी वागिति विदितम्। रूपकेषु संस्कृतभाषायाः प्रयोगविषये नाट्यशास्त्रानुसारेण धीरोदात्तादिभिश्चतुर्विधनायकैः[२] संन्यासिभिर्मुनिभिः शाक्यैः श्रोत्रियैर्लिङ्गस्थैश्च संस्कृतभाषा प्रयोक्तव्या[३]। सर्वेषां नायकानां भाषा संस्कृतं भवेत् परं कारणव्यपदेशेनोत्तमानां नायकप्रभृतिपात्राणां प्राकृतं प्रयोज्यं भवति। साहित्यदर्पणे यथा—

पुरुषाणामनीचानां संस्कृतं स्यात् कृतात्मनाम्[४]।
'कार्यतश्चोत्तमादीनां कार्यो भाषाविपर्ययः[५]॥'

अत्रानीचानां मध्यमानां कृतात्मनामुत्तमानामिति ज्ञेयम्। कारणव्यपदेशेन प्राकृतं सम्प्रयोजयेदिति नाट्यशास्त्रेऽपि। राजवेश्याभिः शिल्पकारिणीभिश्च विशेषास्ववस्थासु संस्कृतभाषाव्यवहार्या[६]। ग्रहनक्षत्रादिकृतः शुभाशुभविचारः संस्कृतभाषायामेव करणीयः। लोकरञ्जनहेतवे नृपपत्न्याऽपि संस्कृतमाश्रयणीयम्। वेश्यानां पाठः क्रीडार्थं संस्कृतभाषायां निरूप्यते[७]।

---

१. काव्यादर्शे।

२. धीरोद्धते धीरललिते धीरोदात्ते तथैव च।
धीरप्रशान्ते च तथा पाठ्यं योज्यं तु संस्कृतम्॥ (ना० शा० १७।२९-३०)

३. परिव्राण्मुनिशाक्येषु चैक्षेषु श्रोत्रियेषु च।
द्विजा ये चैव लिङ्गस्थाः संस्कृतं तेषु योजयेत्॥ (ना० शा० १७।३४-३५)

४. सा० द० ६।१५८; ५ सा० द० ६।१६८।

६. राज्ञश्च गणिकायाश्च शिल्पकार्यास्तथैव च।
कार्यावस्थान्तरकृतं योज्यं पाठ्यन्तु संस्कृतम्॥ (ना० शा० १६।३५-३६)

७. ना० शा० १७।३६-४०।

रूपकेषु नायकस्य प्रधानत्वात् तेन प्रयुक्ता भाषा तत्र प्राधान्यमधिरोहति। मृच्छकटिके नायकस्य भाषा प्रधानपात्राणाञ्च भाषा संस्कृतमस्ति। प्रकरणसिद्धान्तानुकूलो धीरप्रशान्तश्चारुदत्तो नेतृत्वं करोति तथा सर्वत्र संस्कृतं व्यवहरति। प्रकरणस्यास्यारम्भे नायकेन प्रयुक्ता संस्कृतभाषाऽऽदर्शरूपेण द्रष्टव्या

यासां बलिः सपदि मद्गृहदेहलीनां
हंसैश्च सारसगणैश्च विलुप्तपूर्वः।
तास्वेव सम्प्रति विरूढतृणाङ्कुरासु
बीजाञ्जलिः पतति कीटमुखावलीढः[1] ॥

अत्र नायकस्य भाषा भावानुकूला सरला संयता च दृश्यते। पुनश्चास्य भाषायामालङ्कारिकतापि द्रष्टव्या—

अविज्ञातावसक्तेन दूषिता मम वाससा।
छादिता शरदभ्रेण चन्द्रलेखेव दृश्यते[2] ॥

द्रष्टव्यमस्ति यच्छरदभ्रेण च्छादिता चन्द्रलेखेव विराजमाना वसन्तसेना—'किं दूषिता नहि नहि शब्देनानेन भूषिता एव'।

विटः संस्कृतभाषी। अस्य भाषा शृङ्गाररससिक्ता सरसा सरला च विद्यते। स वसन्तसेनामुद्दिश्य कथयति—

किं त्वं भयेन परिवर्तितसौकुमार्या
नृत्यप्रयोगविशदौ चरणौ क्षिपन्ती।
उद्विग्नचञ्चलकटाक्षविसृष्टदृष्टिर्व्या-
धानुसारचकिता हरिणीव यासि[3] ॥ इति।

अस्य भाषायां तादृशं गाम्भीर्यं न विद्यते। यत्र तत्रायं मूर्खतायाः प्रदर्शनमपि करोति—"वेगादहं प्राविसृतः पवनं न रुन्ध्याम्[4]" इति। स्वीयात्मगुणवर्णनं स्वयं करोति। "त्वं पापीव लतेव नौरिव जनं वेश्यासि सर्वं भज[5]" इत्यनेन वेश्यायाः सर्वजनग्राहकतां प्रतिपादयति। यत्र तत्रास्य भाषाप्यलंकारपूर्णाऽस्ति—

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।
असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता[6] ॥ इति।

---

१. मृच्छ १।९; २. मृ० १।५४; ३. मृ० १।१७।
४. मृ० १।२२; ५. मृ० १।३२; ६. मृ० १।३४।

दर्दुरको द्यूतकरो वर्तते। भाषाप्यस्य द्यूतक्रीडाप्रकाशिकैव—

त्रेताहृतसर्वस्वः पावरपतनाच्च शोषितशरीरः।
नर्दितदर्शितमार्गः कटेन विनिपातो यामि[१] ॥

अत्र द्यूतक्रीडायां प्रयुक्तास्त्रेतापावरनर्दितकटप्रभृतिशब्दा द्यूतक्रीडकानां सांकेतिकशब्दविशेषा विद्यन्ते। दर्दुरको धूर्तोऽस्ति। अयं हि संवाहकं मोचयितुं यत्नं करोति, तथा संवाहकस्य कृते तपस्वीति शब्दं व्यवहरति।

शर्विलको जात्या ब्राह्मणः, कर्मणा चौरश्चतुर्वेदविदोऽप्रतिग्राहकस्य पुत्रो गणिका-मदनिकार्थं चौरकार्यं करोति। गोपालदारकस्यार्यकस्य बन्धनागारान्निःसारणे कारागारप्रधानद्वारभञ्जकस्तस्यार्यकस्य राज्याभिषेककर्ता शर्विलकः मृच्छकटिकस्य प्रधानपात्रेष्वन्यतमः संस्कृतभाषी विद्यते। यद्यपि चौरकर्मणि संसक्तोऽयं स्वकीयं कौशलं दर्शयितुं 'वाग्देशभाषान्तरे[२]' इति कथयित्वाऽहं बहुभाषाभाषीति प्रतिपादयति; परं मृच्छकटिके सर्वत्राऽयं संस्कृतभाषायाः प्रयोगं करोति। सन्धिच्छेदनकाले सन्धि-प्रकारान् प्रतिपादयंश्चौरशास्त्राभिज्ञतां प्रकटयति—"इह खलु भगवता कनकशक्तिना चतुर्विधः सन्ध्युपायो दर्शितः। तद्यथा—पक्वेष्टकानामाकर्षणम्, आमेष्टकानां छेदनम्, पिण्डमयानां सेचनम्, काष्ठमयानां पाटनमिति[३]।' पुनश्च कथयति—'नमो वरदाय कुमारकार्तिकेयाय, नमः कनकशक्तये ब्रह्मण्यदेवाय देवव्रताय नमो भास्करनन्दिने, नमो योगाचार्याय यस्याहं प्रथमः शिष्यः[४]।' अत्र भाषाऽस्य स्वाभाविकी विषयानुरूपा सरला च विद्यते। वेश्यानां व्यापारस्य स्त्रीणां चाञ्चल्यस्य च यथार्थवर्णनं सरलया भाषया करोति—

अन्यं मनुष्यं हृदयेन कृत्वा अन्यं ततो दृष्टिभिराह्वयन्ति।
अन्यत्र मुञ्चन्ति मदप्रसेकमन्यं शरीरेण च कामयन्ते[५] ॥

अस्य भाषा सूक्तिसंवलिता द्रष्टव्या—

न पर्वताग्रे नलिनी प्ररोहति न गर्दभा वाजिधुरं वहन्ति।
यवाः प्रकीर्णा न भवन्ति शालयो न वेशजाताः शुचयस्तथाङ्गनाः[६] ॥

अनेन प्रकारेण स्पष्टं भवति यद् शर्विलकस्य भाषा व्यावहारिकी सरला विषय-सम्बद्धा च वर्तते। अस्य भाषायामनेकानि सुभाषितान्यपि प्रयुक्तानि सन्ति।

---

१. मृ० २।९; २. मृ० ३।२०; ३. मृ० ३।पृ०१९९।
४. मृ० ३।पृ०२०२; ५. मृ० ४।१६; ६. मृ० ४।१७।

सूत्रधारः प्रकरणस्यारम्भे संस्कृतभाषां व्यवहरति परमनन्तरं स प्राकृतभाषी संवृत्तः। स स्वयमेव प्रकाशयति यदहं कार्यवशात् प्रयोगवशाच्च प्राकृतभाषी संवृत्तः[१]। नाट्यशास्त्रेऽप्येष सिद्धान्तः सम्मानितः[२]। पुनश्च 'स्त्रीषु ना प्राकृतं वदेत् शोभेन इति नियमेन सूत्रधारः प्राकृतभाषी बभूव। अस्य संस्कृतभाषा अलंकृता सरला च विद्यते—"वसन्त-वसन्तसेना इति[३]।" अत्रोपमालंकारस्य प्रयोगः दर्शनीयः। बिम्ब-ग्रहणाय यथार्थचित्रमुपस्थापयितुञ्च ध्वन्यात्मकशब्दानां प्रयोगोऽनेन कृतः—'अनेन चिर-संगीतोपासेन ग्रीष्मसमये प्रचलितदिनकरकिरणोच्छुष्कपुष्करबीजमिव प्रचलिततारके क्षुधा ममाक्षिणी खटखटायेते' इति[४]।' अत्र 'खटखटायेते' इति ध्वन्यात्मकः शब्दः 'खटत्' शब्दाड्डाचि प्रत्यये 'लोहितादिडाज्भ्यः क्यप्[५]' इति क्यपि, आत्मने पदे, प्रथमपुरुषस्य द्विवचने भवति।

आर्यकः संस्कृतभाषी विद्यते। अयं हि गोपालदारको भावी राजा बन्धनागारात् पलायितः। अस्यालंकृतभाषायां वाग्व्यवहारो द्रष्टव्यः—

> हित्वाऽहं नरपतिबन्धनापदेशव्यापत्तिव्यसनमहार्णवं महान्तम्।
> पादाग्रस्थितनिगडैकपापकर्षी प्रभ्रष्टो गज इव बन्धनाद् भ्रमामि[६]॥

आर्यकस्य चारुदत्तेन सह गीतिनाट्यभाषायां वाग्व्यवहारो दर्शनीयः—

| **चारुदत्तः** | **आर्यकः** |
|---|---|
| क्षेमेण व्रज बान्धवान् | ननु मया लब्धो भवान् बान्धवः |
| स्मर्तव्योऽस्मि कथान्तरेषु भवता | स्वात्मापि विस्मर्यते। |
| त्वां रक्षन्तु पथि प्रयान्तममराः | संरक्षितोऽहं त्वया |
| स्वैर्भाग्यैः परिरक्षितोऽसि | ननु हे तत्रापि हेतुर्भवान्[७]। |

अधिकरणिको न्यायकर्ता संस्कृतभाषी। अस्य भाषा न्यायविषयबोधिका विद्यते। सारल्यमप्यस्य भाषाया वैशिष्ट्यम्। यथा—'इह द्विविधो व्यवहारो वाक्यानुसारेण, अर्थानुसारेण च। यस्तावद् वाक्यानुसारेण, स खल्वर्थिप्रत्यर्थिभ्यः। यश्चार्थानुसारेण स चाधिकरणिकबुद्धिनिष्पाद्यः[८]।' अस्य न्यायकर्त्तुर्भाषाऽपि न्यायालयीयतर्केणोपेता विद्यते—

---

१. मृ० प्रस्तावना द्र०; २. कारणव्यपदेशेन प्राकृतं सम्प्रयोजयेद्—ना० शा० १८।३२।
३ मृ० १।६; ४. मृ० १।पृ० १४; ५. अष्टा०—३।१।१३।
६. मृ० ६।१; ७. मृ० ७।७; ८. मृ० ९।पृ० ५६१।

किं कुलेनोपदिष्टेन शीलमेवात्र कारणम् ।
भवन्ति नितरां स्फीताः सुक्षेत्रे कण्टकिद्रुमाः[१] ॥

पुनश्च—"अहो नगररक्षिणां प्रमादः । भोः श्रेष्ठिकायस्थौ ! न मयेति व्यवहारपदं प्रथममभिलिख्यताम्[२] ।" अत्रापि न्यायालयव्यवहारभाषा प्रयुक्ता ।

चन्दनकस्तु अवन्तीनगर्य्याः प्रधानरक्षको मूलतः प्राकृतभाषी परमार्यकेण साकं संस्कृतमाश्रित्य वदति—'अभयं शरणागतस्य[३]' इति ।

बन्धुला गणिकादारका भवन्ति । इमेऽपि संस्कृतमाश्रित्य वदन्ति । यथा—

परगृहललिताः परान्नपुष्टाः परपुरुषैर्जनिताः पराङ्गनासु ।
परधननिरता गुणेष्ववाच्या गजकलभा इव बन्धुला ललाम[४] ॥

वसन्तसेनाऽस्य प्रकरणस्य नायिका मूलरूपेण प्राकृतभाषिणी, तथापि चतुर्थाङ्के पञ्चमाङ्के च संस्कृतमाश्रित्य वदति । विशेषावस्थायां वेश्यया प्रयुक्ता भाषा संस्कृतमपि भवतीति नाट्यशास्त्रीयो विचारः[५] । वसन्तसेनायाः संस्कृतं सरला रसपेशला चास्ति । विदूषकेण साकं भाषमाणा सा कथयति—

गुणप्रवालं विनयप्रशाखं विश्रम्भमूलं महनीयपुष्पम् ।
तं साधुवृक्षं स्वगुणैः फलाढ्यं सुहृद्विहङ्गाः सुखमाश्रयन्ति[६] ॥

श्लोकोऽयं रूपकालङ्कारैरलंकृतश्चारुदत्तानुराग एव परमार्थ इति हेतुगर्भितः शोभतेतराम् । पुनः विटेन सार्थमपि सा संस्कृतमाश्रित्यैव वदति—"भाव ! किमनया स्त्रीस्वभावदुर्विदग्धयोपालब्धया" । पश्यतु—

मेघा वर्षन्तु गर्जन्तु मुञ्चन्त्वशनिमेव वा ।
गणयन्ति न शीतोष्णं रमणाभिमुखाः स्त्रियः[७] ॥

क्रीडालीलार्थकं वेश्यया संस्कृतस्य प्रयोगो नाट्यशास्त्रानुमोदितोऽत्रापि दृश्यते[८] । वसन्तसेनायाः संस्कृतभाषा विशेषतः प्रकरणस्यास्य पञ्चमाङ्के साहित्यिकमूल्येनोपेताऽलङ्कृता भावपूर्णा च विद्यते ।

---

१. मृ० ९।७; २. मृ० ९।पृ० ५५८; ३. मृ० ६।पृ० ४२३; ४. मृ० ४।२८ ।

५. राज्ञश्च गणिकायाश्च शिल्पकार्यास्तथैव च ।
कार्यावस्थान्तरकृतं योज्यं पाठ्यन्तु संस्कृतम् ॥
क्रीडालीलार्थकञ्चैव पाठ्यं वेश्यासु संस्कृतम् ॥ (ना० शा० १८।३५–४० )

६. मृ० ४।३२; ७. मृ० ५।१६; ८. मृ० ५।१५,१८,२०,२३,२५,२६,२८,३२ ।

**मृच्छकटिके प्रयुक्ता प्राकृतभाषा—**

प्राक्+कृत इत्यनेन प्राकृतशब्देन संस्कृतात् प्राग्भाषा प्राकृतमिति गृह्यते। परं प्रकृतिः संस्कृतं तत्र भवं तस्मादागतं वा प्राकृतमिति हेमचन्द्रानुसारेण संस्कृता-न्निष्पन्ना समुद्भूता चेयं भाषा विद्यते[1]। इयं हि क्षेत्रीयभाषारूपेण प्रयुक्ता विभिन्न-स्थानानां प्रतिनिधिरूपा भाषा सकलजगज्जन्तूनां व्याकरणादिभिरनाहितसंस्कारः सहजो वचनव्यापारस्तत्र भवं सैव वा प्राकृतम्। भाषेयं साधारणजनैः प्रयुक्ता संस्कार-वर्जिता नानावस्थान्तरात्मिका विद्यते[2]। तत्र समानशब्दं विभ्रष्टं देशीगतञ्चेति त्रिरूपात्मकं विहितम्[3]। संस्कृतभाषायाः केचन शब्दा अमलसलिलादयः प्राकृतभाषाया-मपि तत्समरूपाः प्रयुक्ताः समानशब्दाख्याः। पुनश्चोच्चारणदोषाद् भ्रष्टाः केचन शब्दा विभ्रष्टाः। प्राकृतस्य स्थानभेदादनेके भेदा जायन्ते। तत्र शौरसेनी शूरसेनस्थानाश्रिता तत्र प्रचलिता प्रयुक्ता वा, महाराष्ट्री महाराष्ट्रे प्रचलिता तद्देशभाषिभिः प्रयुक्ता वा, मागधी मगधे प्रयुक्ता विद्यते। प्राकृतस्य सुकुमारत्वेन सुप्रयोगत्वं सुविदितम्। यदुक्तम्—"परूसा सक्किअबन्धा पाउअबन्धो वि होउ सुउमारो[4]" इति।

बहुप्रकारकेषु प्राकृतभाषाप्रभेदेषु चतस्र एव भाषाः प्रायेण रूपकेषु प्रयुज्यन्ते— शौरसेनी, अवन्तिजा, प्राच्या, मागधी चेति। महाराष्ट्र्यादयः काव्य एवं प्रयुज्यन्ते। प्राकृते प्रायेण सप्तभाषा विहिताः—मागधी, अवन्तिजा, प्राच्या, शौरसेनी, अर्धमागधी, वाह्लीका, दाक्षिणात्याश्चेति[5]। मृच्छकटिके शौरसेनी, अवन्तिजा, प्राच्या, मागधी च प्रयुक्ताः सन्ति। नाट्यशास्त्रानुसारेणान्तःपुरस्थानां मानवानां भाषा मागधी, चेटानां श्रेष्ठिराजपुत्रादीनां भाषाऽर्धमागधी, विदूषकानां प्राच्याऽवन्तिजा वा, नायिकानां तासां सखीनाञ्च भाषा शौरसेनी, वीराणां भट्टानाञ्च भाषा दाक्षिणात्या, उदीच्यानां च बाह्ली-केति भाषा पात्रानुरूपा विहिता[6]।

---

१. 'यद्योनिः किल संस्कृतस्य'—बा० रा० प्रस्तावनायां राजशेखरः ( द्र० )।

२. एतदेव विपर्यस्तं संस्कारगुणवर्जितम्।
विज्ञेयं प्राकृतं पाठ्यं नानावस्थान्तरात्मकम्॥

३. त्रिविधं तच्च विज्ञेयं नाट्ययोगे समासतः।
समानशब्दं विभ्रष्टं देशीगतमथापि च॥ (ना० शा० अध्या० १८)

४. "परुषाः संस्कृतबन्धाः प्राकृतबन्धोऽपि भवति सुकुमारः" ( सं० छाया )
( मृ० पृ० ४, पृथ्वीधरटीका )

५. ना० शा० १८।४४,४५; ६. ना० शा० १८।४७–४९।

**मृच्छकटिके प्रयुक्ता शौरसेनी—**

शूरसेनप्रदेशस्य प्राकृतं शौरसेनीति कथ्यते। इयं भाषा संस्कृतरूपकेषु विदूषकस्य स्त्रीणाञ्च भाषाऽस्ति। संकृतभाषया प्रभावितेयम्[१]। अस्यां भाषयां 'त'-वर्णस्य 'द'-वर्णे तथा 'थ'-वर्णस्य 'ध'-वर्णे परिवर्तनं भवति। क्रियायां परस्मैपदस्य प्रयोगो बाहुल्येन लभ्यते। दन्त्यसकारताऽप्यस्या वैशिष्टयम्। मृच्छकटिके एकादशसंख्यकाः शौरसेनीपाठका विद्यन्ते। तेषु सूत्रधारो नटी, रदनिका, मदनिका, वसन्तसेना तन्माता, चेटी, कर्णपूरकश्चारुदत्तब्राह्मणी, शोधनकः, श्रेष्ठी च विद्यन्ते। उदाहरणभूतं तेषां प्राकृतं यथा—

सूत्रधारः—"अविद अविद भोः, चिरसंगीदोवासणेण सुक्खपोक्खरणालाई पिअ मे बुभुक्खाए मिलाणाइं अंगाइं[२]।" (अविद अविद भोः! चिरसंगीतोपासनेन शुष्कपुष्करनालानीव मे बुभुक्षया म्लानान्यङ्गानि) इति।

नट्याः प्राकृतं यथा—'तं जधा गुडोदणं घिअं दहीं तडुलाइं, अज्जेण अतव्वं रसाअणं सव्वं अत्थिति[३]' (तद्यथा गुडोदनं घृतं दधि तण्डुलाः आर्येणातव्यं रसायनं सर्वमस्ति)। रदनिका आर्यचारुदत्तस्य गृहपरिचारिका। अस्याः प्राकृतं यथा—'अज्ज-मित्तेय रदणिआ खु अहं संजदमुही[४]' (आर्यमैत्रेय! रदनिका खल्वहं संयतमुखी)। मदनिका वसन्तसेनायाः परिचारिका, शर्विलकस्यातिप्रिया। अस्याः प्राकृतं यथा—'जेण अज्ज आए सुसिणिद्धा दिठ्ठी अणुसग्गा[५]' (येनार्यायाः सुस्निग्धा दृष्टिरनुलग्ना)। वसन्तसेनाऽस्य प्रकरणस्य नायिका। अस्याः प्राकृतं यथा—'अज्जे मदणिए! अवि सुसदिसी इयं चित्ताकिदी अज्ज चारुदत्तस्स।'[६] (चेटि मदनिके! अपि सुसदृशीयं चिन्ताकृतिरार्यचारुदत्तस्य)। वृद्धाया वसन्तसेनाया मातुः प्राकृतं यथा—'पसीदंतु पसीदंतु अज्जमिस्सा। ता यदि वावादिदा मम दारिआ वावादिदा[७]' (प्रसीदन्तु

---

१. "In the Sanskrit drama it is the ordinary Prakrit and is spoken by ladies and the Vidūṣaka. This Prakrit dialect is the neerest to classical Sanskrit."

The Prakrit Prakash of Vararuci, Ed. by S. N. Banerjee—Introduction, Page—28.

२. मृ॰ १. पृ॰ १५; ३. मृ॰ १. पृ॰ १८; ४. मृ॰ १. पृ॰ १०३।

५. मृ॰ ४. पृ॰ २३७; ६. मृ॰ ४. पृ॰ २३६; ७. मृ॰ ९. पृ॰ ६१६।

प्रसीदन्त्वार्यमिश्राः। तद्यदि व्यापादिदा मम दारिका व्यापादिता )। चेटी वसन्तसेनाया अन्या परिचारिका। अस्याः प्राकृतं यथा—'पेक्खदु अज्जो अम्हकेरकम् गेहदुआरम्[१]' (प्रेक्षतामार्योऽस्मदीयं गेहद्वारम्)। कर्णपूरको वसन्तसेनायाः सेवकः। अस्य प्राकृतं यथा – 'सुणादु अज्जआ नोसो अज्जआए खुंटमोऽओ णाम दुट्ट हत्थी, सो आलाणत्थं भंमं जिअ महमेत्थं वावादिअ पहृतं संखोहं करंतो राऊमग्गं ओ दिण्णो[२]।' ( श्रृणोत्वार्या यः स आर्यायाः खुण्डमोटको नाम दुष्टहस्ती, स आलानस्तम्भं भङ्क्त्वा महामात्रं व्यापाद्य महान्तं संक्षोभं कुर्वन् राजमार्गमवतीर्णः )। धूता चारुदत्तस्य ब्राह्मणी। अस्याः प्राकृतं यथा —'हंजे ! किं भणसि अवरिक्खद सरीरो अज्जउतोत्ति[३]' (हञ्जे किं भणसि अपरिक्षतशरीरो आर्यपुत्र इति)। शोधनको न्यायालयस्थो राजपुरुषः। अस्य प्राकृतं यथा—'आणतम्हि अधिकरण भोइएहिं 'अरे सोहणआ' ववहारमंडवं गदुअ आसणाइं सज्जीकरेहिति[४]' ( आज्ञप्तोऽस्म्यधिकरणभोजकैः—'अरे शोधनक ! व्यवहारमण्डपं गत्वाऽऽसनानि सज्जीकुरु इति )। श्रेष्ठिकायस्थौ हि न्यायालयस्थौ व्यवहारनिपुणौ पुरुषौ। व्यवहारलेखकः कायस्थः। अनयोः प्राकृतं यथा—'अज्जस्य विणाम गुणे दोसोत्ति बुच्चदि। जइ, एव्वं ता चंदा लोएवि अंधआरोत्ति बुच्चदि'[५] (आर्यस्यापि नाम गुणे दोष इत्युच्यते। यद्येवं तदा चन्द्रालोकेऽप्यन्धकार इत्युच्यते )।

उपर्युक्तेषु पात्राणां कथनेषु दन्त्यसकारता 'त'-वर्णस्य स्थाने 'द'-वर्णता, 'थ'-वर्णस्य स्थाने च 'ध'-वर्णता दृश्यते। शौरसेनीप्राकृतस्य ध्वन्यात्मकं रूपात्मकञ्च यद्वैशिष्ट्यं विद्यते, तत्तु सर्वमत्र दृश्यत एव। शौरसेनी प्रयोगविषये साहित्यदर्पणे प्राप्यते यत् स्त्रीणां भाषा शौरसेनी प्राकृतं भवेत्[६]। नाट्यशास्त्रेऽपि—'नायिकानां सखीनाञ्च शौरसेन्यविरोधिनी'[७] इति प्राप्यते। अत्रैकादशपात्रेषु सप्तसंख्यायां स्त्रियो विद्यन्ते। अन्येषां पुरुषपात्राणामपि शौरसेनीप्राकृतप्रयोगः[८] नाट्यशास्त्रानुकूलः।

**अवन्तिजा प्राकृतस्य प्रयोगः—**

अवन्तिजा, शौरसेनी प्राकृतस्य स्थानीयरूपा[९]। अस्यां प्राकृतभाषायां

---

१. मृ० ४. पृ० २८४; २. मृ० २. पृ० १७१; ३. मृ० ३. पृ० २२७।
४. मृ० ९. पृ० १४०; ५. मृ० ९. पृ० ५५०।
६. 'शौरसेनी प्रयोक्तव्या तादृशीनाञ्च योषिताम्'—(सा० द० ६।१५९)।
७. ना० शा० १८।४९।
८. नाट्यशास्त्रे शौरसेनी, शूरसेनी, शौरसेनं वेति प्राप्यते। शौरसेनीशब्दस्तु भाषावैज्ञानिकैः प्रयुज्यते।
९. अवन्ती स्यान्महाराष्ट्रीशौरसेन्योस्तु संकरात्—(प्रा० स० ११।६।१; पृ० ४।२३)।

दन्त्यसकारतादिवैशिष्ट्यं तु शौरसेनीभाषावद् विद्यत एव रेफवती लोकोक्तिबहुला चावन्तिजा प्राकृतमिति। मृच्छकटिके अवन्तीप्राकृतपाठकौ वीरक-चन्दनकौ स्तः।

वीरकोऽवन्तिनगर्याः प्रधानरक्षकः। अवन्तिनगरे स्थितस्य वीरकस्यावन्ति-प्राकृतभाषणं स्वाभाविकम्। तस्य प्राकृतं यथा—'अरे सुणाहि, सुणाहि—

"जादी तुझ विसुद्धा मादा भेरी पिदावि ते पडहो।
दुम्हुह ! करउ अभादा तुमंपि सेनावई जादो[1] ॥"

(अरे शृणु शृणु—

(जातिस्तव विशुद्धा माता भेरी पिता ते पटहः।
दुर्मुख करटकभ्राता त्वमपि सेनापतिर्जातः॥)

चन्दनकोऽप्यवन्तिनगर्याः प्रधानरक्षकेष्वन्यतमः। अस्य प्राकृतं यथा—

"सिण्णसिला अलहत्थो पुरिसाणं कुच्चगंठिं संठवणो।
कत्तरिवावुदहत्थो तुमंपि सेणावई जादो[2] ॥"
(शीर्णशिलातलहस्तः पुरुषाणां कूर्चग्रन्थिसंस्थापनः।
कर्त्तरीव्यापृतहस्तस्त्वमपि सेनापतिर्जातः॥)

अवन्तिनगरस्य रक्षकयोर्वीरकचन्दनकयोः प्राकृतं तु स्थानीयवैशिष्ट्यसम्पन्नं नाट्यपद्धत्यनुमोदितं स्वाभाविकञ्च।

**प्राच्या-प्राकृतस्य प्रयोगः—**

प्राच्याप्राकृतं सौरसेनीप्राकृतस्य स्थानीयभेदः। अस्यां भाषायामपि दन्त्य-सकारताप्रभृतिवैशिष्ट्यं विद्यते। भाषेयं स्वार्थिकककारप्राया विद्यते। नाट्यशास्त्रानु-सारेण विदूषकस्य भाषा प्राच्याऽवन्तिका वा भवति।[3] मृच्छकटिके प्राच्याप्राकृतस्य व्यवहारः सर्वत्र विदूषकेण क्रियते। विदूषकस्तु आर्यचारुदत्तस्य सहायो वयस्य मैत्रेयनामा विदूषकस्य प्राकृतं यथा—"भो वयस्स ! एददपि मे दुदिअं संदावकारणं जं सहीअण दिण्ण सण्णाए पडंतो वारिदं मुहं कदुअ अहं उवहसिदो।" (भो वयस्य ! एतदपि मे द्वितीयं सन्तापकारणं यत्सखीजनदत्तसंज्ञया पटान्तापवारितं मुखं कृत्वाऽहमुपहसितः)।

---

१. मृ० ६।२२।

२. "प्राच्या विदूषकादीनां योज्या भाषा अवन्तिका"
"प्राच्या विदूषकादिहास्यपात्रभाषा"—(प्रा० स० १०।१ ना० शा० १७।४८)

३. मृ० ५। पृ० ३२४।

**मागधीप्राकृतस्य प्रयोगः** –

प्राचीनमगधस्य भाषाऽऽसीन्मागधी। अस्यां भाषायां दन्त्यसकारस्य मूर्धन्यषकारस्य च तालव्यशकारता, रेफस्य स्थाने लत्वम्, प्रायो यकारस्य जत्वञ्च दृश्यते[१]। नाट्यसिद्धान्तानुसारेण रूपकेषु निम्नवर्गीयपात्राणां भाषा मागधी भवति। मृच्छकटिके षण्मागधीपाठका सन्ति—संवाहकः, शकारवसन्तसेनाचारुदत्तानां चेटकत्रितयं भिक्षुश्चारुदत्तदारकश्च[२]। एतेषां मागधीप्रयोगः नाट्यपद्धत्यनुकूलः।

संवाहकश्चारुदत्तस्य पूर्वपरिचारकः पाटलिपुत्रनिवासी। चारुदत्तस्य स्वस्य च धनशून्यत्वे द्यूतोपजीवी संवृतस्तत्रापि निर्वेदेन शाक्यश्रमणकत्वमुपगतः। शाक्यश्रमणकत्वान्मागधीप्रयोगो नाट्यसिद्धान्तानुकूलः। अस्य मागधी यथा—'हीमाणहे, कहे एशे जुदिअलभावे[३]।' ( आश्चर्यम्, कष्ट एष द्यूतकरभावः )।

शकारचेटस्य प्राकृतं यथा—

'लामेहिअ लाअवल्लहं तोक्खाहिशि मच्छमंशकं।
एदेहिं मच्छमंशकेहिं शुणआ मउअं ण होवंदि[४]।'
( रमय च राजवल्लभं ततः खादिष्यसि मत्स्यमांसकम्।
एताभ्यां मत्स्यमांसाभ्यां श्वानो मृतकं न सेवन्ते ॥ )

कुम्भीलको वसन्तसेनायाश्चेटः। अस्य मागधी यथा – 'अवेध माणहे[५] !

जधा जधा वश्शदि अब्भखंडे तधा तधा तिम्मदि पुट्टिचम्मे।
जधा जधा लग्गदि शीदवादे तधा तधा नेवदि मे हलक्के[६] ॥

वर्धमानकश्चारुदत्तस्य सेवकः। अस्य मागधी यथा —'अज्जमित्ते अस्स शलशं जाए शुणीअदि। आगदे अज्ज चालुदत्ते[७]' ( आर्यमैत्रेयस्य स्वरसंयोगः श्रूयते। आगत आर्य

---

१. द्र० प्राकृतसर्वस्वम्—१२।१–१०।

२. 'राक्षसभिक्षुक्षपणकचेटाद्या मागधीं प्राहुः' इति कोहलः—प्रा० स० १२।१।

३. मृ० २।१;  ४. मृ० १।२६।

५. अवेत मानवाः ! ( मृ० ५।१० )।

६. यथा यथा वर्षत्यभ्रखण्डं तथा तथा तिम्यति पृष्ठचर्म्म।
यथा यथा लगति शीतवातस्तथा तथा वेपते मे हृदयम् ॥ (सं० छा०)

७. मृ० १०। पृ० ५१८–( मातरार्ये ! प्रतिपालय माम्। त्वया विना न शक्नोमि जीवितं धर्तुम् ) (सं० छा०)।

चारुदत्तः )। संवाहक एव पश्चाद् भिक्षुः संजातः। अस्य मागधी तु संवाहकस्योद्धरणे प्रदर्शिता। रोहसेनश्चारुदत्तस्य पुत्रः। अस्य प्राकृतं यथा—'माद अज्जए! पडिवालेहि मं तुए विणा सक्कुणोमि जीविदं धारेदुं।'

**मृच्छकटिके प्रयुक्तापभ्रंशभाषा—**

अपभ्रष्टा विभ्रष्टा प्राकृतान्निःसृता भाषा अपभ्रंशभाषेति। अपभ्रंशभाषा देशीरूपेण विहिता। नाट्यशास्त्रेऽपि एतादृशः संकेतो लभ्यते। मृच्छकटिकस्य प्रसिद्ध-टीकाकारेण पृथ्वीधरेण मृच्छकटिके शकारादीनां भाषाऽपभ्रंशभाषा विद्यत इति प्रति-पादितम्। अपभ्रंशे पुनः सप्तविभाषा दृश्यन्ते—

शकाराभीरचाण्डालशवरद्राविडोड्रजाः।
हीना वनेचराणां च विभाषाः सप्त कीर्तिताः[1]॥

अपभ्रंशप्रपञ्चेषु चतस्र एव भाषा रूपकेषु प्रयुज्यन्ते—शबारी, चाण्डाली, शाबरी, ढक्कदेशीया चेति। मृच्छकटिके शबरपात्राभावात् शाबरी नास्ति। अत्र तिस्रोऽप-भ्रंशभाषा—शकारी, चाण्डाली ढक्कदेशीया चेति। तत्रापभ्रंशपाठकेषु शकारीभाषा-पाठको राष्ट्रीयश्चाण्डालीभाषापाठकौ चाण्डालौ ढक्कभाषापाठकौ माथुरद्यूतकरौ। भाषा-वैज्ञानिकैः मागधीप्राकृतस्य विभाषारूपा एव शकारी चाण्डाली ढक्की चेति मन्यते[2]।

**शकारीभाषायाः प्रयोगः—**

अस्यां तालव्यशकारता विद्यते। भाषायामस्यां तालव्यशकारस्य बाहुल्येनास्याः प्रयोगकर्त्ता शकार इति नाम्ना कथ्यते[3]। शकारो राजश्यालः संस्थानकः। भाषा-यामस्य रेफस्य स्थाने लवर्णताऽपि विद्यते। तस्य शकारी यथा—'चिष्ठ वशंतशेणिए चिष्ठ—

किं याशि धावशि पलाअशि पक्खलंती वाशू पशीद ण मलिस्सशि चिष्ठ दाव।
कामेण दज्झदि हु मे हडके तवश्शी अंगालला़शि पडिदे विअ मंशखंडे[4]॥

---

१. मृ० पृथ्वीधरटीका—पृ० १।

२. भाषा विज्ञान—( भो० ना० ति० ) पृ० १८१।

३. 'शकारप्रायभाषित्वाच्छकारो राष्ट्रियः स्मृतः।' (मृ० पृ० ४४)।

४. 'किं यासि धावसि पलायसे प्रस्खलन्ती वासु! प्रसीद न मरिष्यसि तिष्ठ तावत्।
कामेन दह्यते खलु मे हृदयं तपस्वि अङ्गारराशिपतितमिव मांसखण्डम्॥
( सं० छा० मृच्छ० १।१८ )

शकारस्तु मदमूर्खताभिमानी दुष्कुलोत्पन्नो राज्ञः श्यालो भवति[१]। अस्य वचने पौनरुक्त्यं हतोपमञ्च बहुधा दृश्यते[२]। उपर्युक्त उद्धरणे शकारबाहुल्यं रवर्णस्य स्थाने लत्वं पौनरुक्त्यञ्च स्पष्टमेव।

**चाण्डालीभाषायाः प्रयोगः—**

नाम्ना प्रतीयते यदियं पुरा वर्गविशेषस्य भाषाऽऽसीत्। पृथ्वीधरेण त्वपभ्रंश-रूपेण भाषेयं प्रकटिता। अस्यां भाषायामपि शकारबाहुल्यं दृश्यते। अस्या प्रयोक्तारौ चाण्डालौ। मृच्छकटिके तयोरादर्शभूता। यथा—

"तक्किं ण कलअ कालण णववहबंधणअणे णिउणा।
अचिलेण शीशछेअणशूलालोवेशु कुशलम्ह[३]॥"
( तत्किं न कलय कारणं नववधबन्धननयने निपुणौ।
अचिरेण शीर्षच्छेदनशूलारोपेषु कुशलौ स्वः॥ ) ( सं० छा० )

अस्मिन्नुदाहरणे शकारबाहुल्यं लत्वञ्च स्पष्टमेव।

**ढक्कीभाषायाः प्रयोगः—**

ढक्कीभाषा तु पृथ्वीधरेणापभ्रंशभाषायां गणिता; परं भाषावैज्ञानिकैर्भाषेयं मागधीभाषाया विभाषारूपेण मन्यते। अस्यां भाषायां बकारबाहुल्यं भवति। दन्त्यतालव्यसशकारद्वययुक्ता चेयं भाषा। लत्वं त्वस्यामपि विहितम्। मृच्छकटिके माथुरस्य ढक्की यथा—'तस्स जुदकलस्स मुट्टिप्पहालेन णासिका भग्गा आसि। ता यहि, रुहिरपहं अणुसरेम्ह[४]।' ( तस्य द्यूतकरस्य मुष्टिप्रहारेण नासिका भग्नासीत्। तदेहि, रुधिरपथमनुसरावः )। द्यूतकरस्य ढक्की यथा—'भट्टा! जावदेव! अम्हे दद्दुरेण कलहायिदा तावदेव सो गोहो अवक्कंतो[५]।' ( भर्तः, यावदेव वयं दर्दुरकेण कहलायितास्तावदेव स पुरुषोऽपक्रान्तः )।

उपर्युक्तेनोदाहरणेन प्रकरणेऽस्मिन् प्रयुक्ताया देशीभाषायाः प्राकृतान्निःसृतायाः पृथ्वीधरमतेऽपभ्रंशाख्यायाः प्रयोगो विहितः। शकारी चाण्डाली ढक्कीति भाषात्रयं पात्रानुकूलं स्वाभाविकाभिव्यक्तये शूद्रकेण प्रयुक्तम्। अन्यासां भाषाणामपि दक्षिणदेशोद्भवां संकेतश्चन्दनकस्य वाक्येन प्राप्यते। प्रतीयते हि दक्षिणदेशे ह्यनेका विभाषाः प्रचलिता आसन्। खष्, खत्ति, कड, कडठ्ठोविल, कर्णाट, कर्ण, प्रावरण, द्राविड,

---

१. मदमूर्खताभिमानी दुष्कुलतैश्वर्यसंयुक्तः—मृ० टी० पृ० ४४।
२. मृ० टी० पृ० ४४;
३. मृ० १०।१।
४. मृ० २; पृ० १५५।
५. मृ० २।पृ० १५४।

चोल, चीन, बर्वर, खेर, खान, मुख, मधुधातप्रभृतयः स्थानभेदान्निःसृता भाषोपभाषा मृच्छकटिके संकेतिताः[1]; परमत्र तासां प्रयोगो न प्राप्यते।

**मृच्छकटिके संवादप्रकारता—**

'वस्तु नेता रसस्तेषां भेदकः' इति कथयता दशरूपककारेण नाटकस्य त्रीण्येव तत्त्वानि प्राधान्येनोपन्यस्तानि। पाश्चात्त्ये जगति नाट्यतत्त्वेषु संवादतत्त्वमप्येकं तत्त्वं विद्यते। परमत्र संवादतत्त्वं स्वतन्त्ररूपेण प्रधानाङ्गतयानोपपादितम्। संवादप्रकारेषु सर्वश्राव्यमश्राव्यमित्यादिभेदेन प्रकाशं स्वगतं जनान्तिकमपवारितञ्चेति प्रपञ्चितम्।

**प्रकाशम्**—नाटके सर्वश्राव्यस्य प्रकाशस्य प्राधान्यं भवति[2]। मृच्छकटिके प्रकाशनामाख्यस्य संवादप्रकारस्य प्रयोगः साफल्येनाऽभूत्। यथा—वसन्तसेनामनुगच्छन् विटस्तां ( प्रकाशं ) कथयति—वसन्तसेने ! वेशवासविरुद्धमभिहितं भवत्या। पश्य—

'तरुणजनसहायश्चिन्त्यतां वेषवासो।
विगणय गणिका त्वं मार्गजाता लतेव[3] ॥ इति।

एवमन्यत्रापि प्रकाशस्य प्रयोगोऽभूत्[4]।

**स्वगतम्**—अश्राव्यं स्वगतं मतमिति[5] स्वगतसंवादे मञ्चस्थानां पात्राणामश्राव्यं वृत्तं प्रकाश्यते। मृच्छकटिके यथा—प्रथमाङ्के 'शकारस्य वामतस्तस्य गृहम्' इति कथनानन्तरं विटः (स्वगतं) कथयति—"यदेव परिहर्तव्यं तदेवोदाहरति मूर्खः[6]।" एवमेवान्यत्रापि स्वगतप्रयोगो दृश्यते[7]।

**जनान्तिकम्**— नियतश्राव्यमिदम्। त्रिपताकाकरेणान्यानपवार्यान्येन सह यन्मन्त्रयते, तज्जनान्तिकमिति[8]। मृच्छकटिके यथा—प्रथमाङ्के विटो जनान्तिकस्य प्रयोगं कृत्वा कथयति, वसन्तसेने !

कामं प्रदोषतिमिरेण न दृश्यसे त्वं सौदामिनीव जलदोदरसन्धिलीना।
त्वां सूचयिष्यति तु माल्यसमुद्भवोऽयं गन्धश्च भीरु मुखराणि च नूपुराणि[9] ॥

एवमेवान्यत्रापि जनान्तिकस्य संवादप्रकारस्य प्रयोगो दृश्यते[10]।

---

१. वअं दक्खिणत्ता अवत्तभाषिणो। खलखत्ति खडो खडठ्ठोविसअकण्णाट कंण्णप्पावरणअ दविड चोल चीण वर्बर खेर खान मुख मधुधाद् पहुदाणं मिलिच्छजादीणं अणे अदेश भाषाभिण्णा जहेठ्ठं मंतआम। दिट्ठो दिट्ठावा अज्जो अज्जआवा।" ( मृ० ६।पृ० ४२८ )

२. द० रू० १।६४।

३. मृ० १।३१; ४. मृ० १।पृ० ७,२४,२६२७,२८,४२, २।पृ० ५७,७१ प्रभृतयः।

५. द० रू० २।६४; ६. मृ० १।पृ० २७; ७. मृ० १।पृ० ७,२४,२६,२७ प्रभृतयः।

८. द० रू० १।६५,६६; ९. मृ० १।३५; १०. मृ० १।पृ० २८,४६,४७ प्रभृतयः।

**अपवारितम्**—पात्रे परावृत्त्यान्यस्य रहस्यकथनमपवारितमिति[1]। नियतश्राव्य-स्यापवारितस्य प्रयोगो मृच्छकटिके यथा—प्रथमाङ्के शकारः ( अपवार्य ) चेडे गडे शच्चकं जेव्वभावे[2] ( चेटः गतः सत्यमेव भावः )। एवमेवान्यत्रापि अपवारितस्य प्रयोगो दृश्यते[3]।

**आकाशभाषितम्**—'किं ब्रवीषि' इत्यादि पात्रं विना यद् ब्रवीत्यनुक्तमपि श्रुत्वा तदाकाशभाषितमिति नाट्यकथनस्य प्रकारः[4]। मृच्छकटिके यथा-- संवाहकः ( दृष्ट्वाऽऽकाशे ) किं भणाध किं कलइश्शंशिति ? गेहे ते कम्मकले हुविश्शं[5] ( किं भणत किं करिष्यसीति ? गेहे ते कर्मकरो भविष्यामि )। एवमेवान्यत्राप्याकाश-भाषितस्य प्रयोगोऽभूत्[6]।

**मृच्छकटिकस्य भाषायां शब्दयोजना—**

भाषा शब्दाश्रिता भवति। काव्यस्य तु शब्दार्थौ काव्यमिति काव्यलक्षणं विहितम्। प्रकरणेऽपि शब्दार्थौ विहितौ। अर्थोऽपि सामान्येन शब्दाश्रितो भवति। रूपकादौ चेष्टादिप्रदर्शनैरप्यर्थस्य प्रकाशनं दृश्यते। अतोऽभिनयाश्रितोऽप्यर्थः। प्रकरणस्य भाषायां शब्दयोजना कीदृशीति विवेचने पात्रानुसारेण भावानुसारेण विषयानुसारेण च शब्दानां प्रयोगा ध्वन्यात्मकानां स्थानीयानां लोकोक्तीनाञ्च द्रष्टव्याः।

**पात्रानुसारेण शब्दानां प्रयोगः—**

प्रकरणेषु पात्रानुरूपं भाषायाः प्रयोगो भवतीति भाषाविवेचनप्रसङ्गे दर्शितम्। पुनश्च पात्रानुसारेण तेषां भाषायां तादृशाः शब्दाः प्रयुक्ता भवन्ति रूपकस्य साफल्याय। नायकस्य भाषायां तादृशाः शब्दास्तस्य व्यक्तित्वं द्योतयन्ति। अनेन प्रकारेण सर्वेषां पात्राणां भाषायां शब्दगतं वैशिष्ट्यं भवति। मृच्छकटिके नायकेन प्रयुक्ताः शब्दा भावानुरूपा मनोहराः सार्थका अलंकृताश्च विद्यन्ते[7]। अस्य भाषायां प्रायेण व्याकरणनियमेनोपेता धीरप्रशान्तद्योतनशीलाः शब्दाः प्रयुक्ताः सन्ति। विदूषस्य भाषा हास्यजनिका। अत्रानेन तादृशाः शब्दाः प्रयुक्ताः, यान् ज्ञात्वा जना हसन्ति। तद्यथा 'न वसन्तसेना वसन्तसेनः खल्वेषः[8]'। अनेन प्रकारेणास्यानेके शब्दप्रयोगा हास्योत्पादकाः। शकारस्य भाषायां संस्कारच्युताः शब्दाः स्थानीया अपशब्दाश्च बाहुल्येन दृश्यन्ते। ध्वन्यात्मकशब्दा अपि अनेन प्रयुक्ताः[9]। अस्य मूर्खता तु मृच्छकटिके विदितैव। क्रूरताव्यञ्जका ग्राम्याश्चापि शब्दा अनेन

१. द० रू० १।६६; २. मृ० १।पृ० १०१; ३. मृ० १।पृ० ४०,४६, प्रभृतयः।
४. द० रू० १।६७; ५. मृ० २।पृ० ५८; ६. मृ० २।पृ० ६०।
७. मृ० अंकः—१; ८. मृ० ७।पृ० ४४६, ३।पृ० २१७; ९. मृ० १।पृ० १००।

प्रयुक्ताः सन्ति[१]। शर्विलकस्य भाषायां चौरशास्त्राश्रिताः शब्दा विद्यन्ते। संवाहकस्य भाषायां द्यूतकर्मणि निरते सति द्यूतक्रीडासम्बद्धाः शब्दाः, संन्यासग्रहणानन्तरं बौद्धधर्मे प्रचलिता 'उपासक'-'उपासिका'-प्रभृतयः शब्दा योजियाः सन्ति[२]। न्यायाधीशानां शब्दास्तर्काश्रिता न्यायालयीयाश्च। चाण्डालानां भाषायां शब्दा वध्यकर्मोचिता घोषणाकाले तेषां घोषणानुकूला विद्यन्ते[३]। अनेन प्रकारेण मृच्छकटिके पात्राणां भाषायां शब्दगतं वैशिष्ट्यं दरीदृश्यते। यथाकालं यथानुरूपं यथाकर्म तेषां शब्दव्यवहारः श्रुतः।

**भावानुरूपं शब्दानां प्रयोगः—**

अत्र भावानुरूपं शब्दाः प्रयुक्ताः सन्ति। नायकः प्रथमाङ्के स्वकीयं दारिद्र्यं दुःखं प्रकटयन् तादृशशब्दानां प्रयोगं करोति[४]। पुनश्च प्रियासंगमे वर्षावर्णने वा तस्य रसिकताव्यञ्जकशब्दाः दर्शनीया भवन्ति[५]। न्यायालये समुपस्थिते सति तस्य भाषायां तद्भावसम्पन्नाः शब्दाः प्रयुक्ता भवन्ति। शकारस्य दण्डदानेऽस्य भाषा तावदुदारभावयुक्ता तादृशशब्दान्विता च जायते[६]। शर्विलकस्य भाषाऽपि यथाभावमनुसरति। चौरकर्मणि तद्भावसम्बद्धैः शब्दैर्मदनिकाग्रहणकाले वेश्याविश्वासभञ्जकैः शब्दैः स स्वं भावं प्रकटयति[७]। आर्यकस्य मोचनकाले भाषायामस्य तदनुरूपाः शब्दाः योजिताः सन्ति। द्यूतकराणां शब्दा द्यूतभावेनोपेता विद्यन्ते[८]। इत्थं सर्वेषां पात्राणां भाषायां भावानुरूपाः शब्दाः प्रायेण प्रयुक्ताः सन्ति।

**विषयानुसारेण शब्दानां प्रयोगः—**

प्रकरणेऽस्मिन् विषयानुरूपशब्दाः समायोजिताः सन्ति। नान्दीपाठे पर्यङ्कबन्धस्य योगासनशास्त्रसम्बद्धस्य ततो नाट्यशास्त्रस्य कृते वैशिकी-शब्दस्य च प्रयोगो दृश्यते। चारुदत्तस्य पूजाकाले बलिप्रदानसमये च कर्मकाण्डविहितशब्दानां प्रयोगोऽभूत्[९]। वसन्तसेनासमृद्धिवर्णनावसरे विदूषकेण प्रयुक्तायां भाषायां वेषवासोपयुक्ताः संगीतादिप्रकाशकाश्च शब्दा दृश्यन्ते[१०]। कुलटापुत्राणां कृते बन्धुलाशब्दः प्रयुक्तः[११]। संगीतवर्णने संगीतशास्त्रस्य पारिभाषिकशब्दाः– 'रक्तो मधुरो व्यक्तः' इत्यादयः

---

१. मृ० ३।१२,१३,२१९; २. मृ० १०।पृ० ६८१; ३. मृ० १०।पृ० ६३७।
४. ,, १।१०,११,१२,१३; ५. ,, ५।४९; ६. ,, १०।५५।
७. ,, ४।१४,१५; ८. ,, २।९; ९. ,, १।१६।
१०. ,, ४।६; ११. मृ० ४।२८।

प्रयुक्ता विद्यन्ते[१]। ज्योतिषशास्त्रसम्बद्धानां प्रयोगोऽपि यत्र तत्रात्र दृश्यते[२]। अपशकुनविचारे यात्राप्रसङ्गे पुरःस्थापितश्चरणः स्खलति पश्चाद् गच्छतोत्यनिष्ट-सूचकम्। पुरुषाणां वाममेत्रस्फुरणं वामाङ्गस्फुरणं वा न शुभावहम्। पशुपक्षिणां रोदनमनिष्टकरम्। मृच्छकटिके—'रूक्षस्वरं वाशति वायसोऽयम्[३] तथा 'शुष्कवृक्षस्थिता ध्वाङ्क्षः[४]' एवं 'सव्यं मे स्पन्दते चक्षुर्विरौति वायसस्तथा, पन्था सर्पेण रुद्धोऽयं स्वस्ति चास्मासु दैवतः[५]' इति प्राप्यते। न्यायालयस्य दण्डव्यवस्थामनुपद्धत्या भवति। अधिकरणिकः कथयति—

अयं हि पातकी विप्रो न बध्यो मनुरब्रवीत्।
राष्ट्रादस्मात्तु निर्वास्यो विभवैरक्षतैः सह[६]॥

मनुस्मृतावप्येतादृशी दण्डव्यवस्था विहिता[७]। प्रकरणेऽस्मिन् व्यवहारस्य भाषा तु न्यायालयीया। यदा शकारः कथयति यद्—''बाहुपाशबलात्कारेण वसन्तसेना मारिता न मया' तदाऽधिकरणिकः कथयति—'भोः श्रेष्ठिकायस्थौ! न मयेति व्यवहार-पदं प्रथममभिलिख्यताम्[८]'। पुनश्चाधिकरणिकः कथयति—'इह द्विविधो व्यवहारः—वाक्यानुसारेणार्थानुसारेण च। यस्तावद्वाक्यानुसारेण स खल्वर्थिप्रत्यर्थिभ्यः। यश्चार्था-नुसारेण स चाधिकरणिकबुद्धिनिष्पाद्यः[९]।' पुनस्तत्रैवाधिकरणिकः कथयति—'धन-दत्त! वसन्तसेनार्यचारुदत्तस्य गृहं गतेति लिख्यतां व्यवहारस्य प्रथमः पादः[१०]'। अनेन प्रकारेण चारुदत्तेन प्रयुक्तोऽभियुक्तशब्दोऽपि प्रासङ्गिकः[११]। भिक्षुकस्य भाषा बौद्ध-धर्मान्वितस्य भाषा—

संयच्छत निजोदरं जाग्रतध्यानपटहेन।
विषमा इन्द्रियचौरा हरन्ति चिरसञ्चितं धर्मम्[१२]॥

---

१. मृ० ३।३ 'रक्तं नाम वेणुवीणास्वराणामेकीभावे रक्तमित्युच्यते, मधुरं नाम स्वरभावोपनीत-ललितपदाक्षरगुणसमृद्धम्. व्यक्तं (स्फुटं) नाम पदपदार्थविकारागमलोपकृत्तद्धित···· विभक्त्यर्थवचनानां सम्यगुपपादनम्' (नारदशिक्षा)।

२. मृ० ९।३३; ३. मृ० ९।१०; ४. मृ० ९।११; ५. मृ० ९।१५; ६. मृ० ९।३।

७. "न जातु ब्राह्मणं हन्यात् सर्वपापेष्वपि स्थितम्।
राष्ट्रादेनं बहिष्कुर्यात् समग्रधनमक्षतम्॥" (मनु० ८।३८०)

८. मृ० ९।पृ० ५५८; ९. मृ० ९।पृ० ५६१।

१०. मृ० ९।पृ० ५६५; ११. मृ० ९।९; १२. मृ० ८।१।

अनेन प्रकारेण—

पञ्चजना येन मारिता स्त्रियं मारयित्वा ग्रामो रक्षितः।
अबलः क्व चाण्डालो मारितोऽवश्यमपि स नरः स्वर्गं गाहते[1] ॥

अत्र बौद्धधर्मान्विताः पञ्चजनः पञ्चेन्द्रियवाचकः, स्त्रीरविद्या, ग्राम आत्मनो निवासभूतं शरीरम्, चाण्डालोऽहंकार इत्यादयः शब्दाः सन्ति। अनेन स्पष्टं प्रतीयते यदत्र विषयानुसारेण शब्दाः प्रयुक्ताः सन्ति।

**मृच्छकटिके ध्वन्यात्मकशब्दानां प्रयोगः—**

यथार्थचित्रस्योपस्थापनाय ध्वन्यात्मकशब्दाः समर्थतरा भवन्ति। एतादृशाः शब्दा मृच्छकटिकेप्रयुक्ताः सन्ति। सूत्रधारेण प्रयुक्तः 'खटखटायेते[2]' विदूषकेण प्रयुक्ताः 'फुरफुराअदि पदीवा'[3] ( फुरफुरायते प्रदीपः ) 'कुट्टइस्सं[4]' ( कुट्टयिष्यामि ) 'लोट्टिदव्वं[5]' ( लोडितव्यम् ) प्रभृतयः शब्दा ध्वन्यात्मकाः। शकारेणापि एतादृशाः शब्दाः प्रयुक्ता यथा—'मडमडायिश्शं[6]' ( मडमडायिष्यामि ), 'घुलघुलाअमाणे[7]' ( घुरघुरायमाणम् ), 'चुहू चुहू चुक्कु[8]' चेति शब्दाः। पुनश्च स्थावरकस्य यानवाहकशब्दाः—'वहध वइल्ला वहध[9]' ( वहतं बलीवर्दाः वहतम्), चेटस्य—'जाध गोणा जाध[10]' (यातं गावौ यातम् ) इत्यादयः शब्दाः शकटचालने बलीवर्दान् प्रेरयितुं प्रयुक्ता व्यावहारिका विशेषध्वन्यात्मकाश्च।

**मृच्छकटिके स्थानीयशब्दानां प्रयोगः—**

पात्राणां विभिन्नस्थानसंयोगात् तेषां भाषायामपि स्थानीयशब्दाः स्वाभाविकतायाः प्रदर्शनायाऽत्र प्रयुक्ताः सन्ति। नट्या प्रयुक्तः पायसकृते 'गुडोदणं'[11] ( गुडोदनम् ) सूत्रधारेण प्रयुक्तो लम्बायमाने काष्ठस्थूणे निबद्धस्य मृत्तिकास्थूणस्य कृते 'वरंडलम्बुओ'[12] ( वरण्डलम्बुकः ), विदूषकेण प्रयुक्ता 'दासीए ऊत्ता'[13] ( दास्याः पुत्रः ), 'अत्थ कल्लवत्ता वरडाभीदा'[14] ( अर्थकल्यवर्त्ता वरटा भीता ) 'मल्लक'[15] ( जलपात्रम् ) इति। शकारेण प्रयुक्तौ ( रत्नस्य कृते ) 'णाणक'[16], 'गब्भ-

१. मृ० ८।२; २. मृ० १।पृ० १४; ३. मृ० १।पृ० ८३।
४. मृ० १।पृ० ८४; ५. मृ० ३।पृ० ९०; ६. मृ० १।पृ० १००।
७. मृ० ८।पृ० ३८३; ८. मृ० ८।पृ० ५०३; ९. मृ० ५।पृ० ३३२।
१०. मृ० ६।पृ० ३९८; ११. मृ० १।पृ० १४; १२. मृ० १।पृ० १९।
१३. मृ० १।पृ० ३४; १४. मृ० १।पृ० २२; १५. मृ० ५।पृ० ३२१।
१६. मृ० १।पृ० ५०३।

दासी'[१] ( गर्भदासी ) इति, विटेन प्रयुक्तः—'काणेलीमातः'[२] इति। माथुरेण प्रयुक्ताः 'खण्डिअवुत्ता'[३] ( खण्डितवृत्तः ), 'गोसाविआ पुत्ता' ( वेश्यापुत्रः ), 'छिण्णालिआ 'पुत्तअ' ( पुंश्चलीपुत्रकः ) कर्णपूरकेण प्रयुक्तः 'खुंडमोडओ'[४] ( खुण्डमोटकः ), वीरकेण प्रयुक्तो दण्डविधानेषु 'चडरंगकल्पणम्'[५] ( चतुरङ्गकल्पनम् ), चाण्डालाभ्यां च प्रयुक्ताः 'सह्यवासिनी'[६] प्रभृतयः शब्दाः स्थानीयवैशिष्ट्यं दधति।

**अपाणिनीयशब्दानां प्रयोगः—**

प्रथमाङ्के सूत्रधारः कथयति—इह लौकिकोऽथवा पारलौकिकः[७]। अत्र इहलौकिक शब्दो विचारणीयः। इहलोके भव ऐहलौकिकः ( इहलोक + ठञ्—अनुशतिकादीनां[८] चेत्यनेनोभयपदवृद्धिः )। पुनश्च—'दारिद्र्यान्मरणाद्वा मरणं मम रोचते'[९] इत्यत्र दारिद्र्यान्मरणाच्चेति शब्दयोः पञ्चमी न युक्ता। केचन व्याख्याकारा दारिद्र्यमाश्रित्य इति पदस्याध्याहारं कुर्वन्तो ल्यब्लोपे इत्यादिना कर्मणि पञ्चमीति मन्यन्ते। तथा 'मम' रोचते' इत्यत्र 'मह्यं रोचते' इति पाणिनीयाः। परं सम्बन्धविवक्षया षष्ठीति समाधानम्। 'यत्सौहृदादपि जनाः शिथिलीभवन्ति' इत्यत्र 'सौहृदात्' इति शब्दः शोभनं हृदयं यस्य स सुहृद्, सुहृदो भावः सौहृदमिति परं हृदभगसिन्धवन्ते च इत्यनेनोभयपदवृद्धौ सौहार्द इति समाधानमन्यत्रापि योजनीयम्।

**मृच्छकटिके प्रयुक्ता लोकोक्तयः—**

लोके प्रचलिता उक्तिः लोकोक्तिः। स्थानभेदाद् व्यवहारभेदाच्च लोकोक्तयो भिन्ना भवन्ति। मृच्छकटिके प्रयुक्ता लोकोक्तयो दर्शनीया वर्तन्ते। नट्याः कथने—'एवं ते देवा आसासेतु'[१०] (एवं ते देवा आशासन्ताम्)। विटस्य कथने—

आलाने गृह्यते हस्ती वाजी वल्गासु गृह्यते।
हृदये गृह्यते नारी यदिदं नास्ति गम्यताम्[११]॥ इति।

शकारस्य वाक्ये—

कश्चालुका गोछङलित्तवेंटा शाके अ शुक्खे तलिदेहुमंशे।
भत्ते अ हेमन्ति अतत्ति सिद्धे लीणे अवेले ण कुहोदि पूदी[१२]॥

---

१. मृ० ८।पृ० ४४९; २. मृ० १।पृ० ६६; ३. मृ० २।पृ० १५०।
४. मृ० २।पृ० १७०; ५. मृ० ६।पृ० ४३३; ६. मृ० १०।पृ० ६८६।
७. मृ० १।पृ० २१; ८. अष्टा० ७।३।२०; ९. मृ० १।पृ० ३१।
१०. मृ० १।१३; ११. मृ० १।पृ० १८; १२. मृ० १।५०।

( कुष्माण्डी गोमयलिप्तवृन्ता शाकं च शुष्कं तलितं खलु मांसम् ।
भक्तञ्च हैमन्तिकरात्रिसिद्धं लीनायां च वेलायां न खलु भवन्ति पूति ॥ )

( सं० छा० )

वसन्तसेनाकथने—

'गणयन्ति न शीतोष्णं रमणाभिमुखाः स्त्रियः[१] ।'

शर्विलकस्य कथने—

न पर्वताग्रे नलिनी प्ररोहति न गर्दभा वाजिधुरं वहन्ति ।
यवाः प्रकीर्णा न भवन्ति शालयो न वेशजाताः शुचयस्तथाङ्गनाः[२] ॥

तथा च—

स्त्रियो हि नाम खल्वेता निसर्गादेव पण्डिताः ।
पुरुषाणां तु पाण्डित्यं शास्त्रैरेवोपदिश्यते[३] ॥

चारुदत्तस्य कथने—

"सर्वत्र यान्ति पुरुषस्य चलस्वभावाः[४] ॥"

तथा च—

पक्षविकलश्च पक्षी शुष्कश्च तरुः सरश्च जलहीनम् ।
सर्पश्चोद्धृतदंष्ट्रस्तुल्यं लोके दरिद्रश्च[५] ॥

एवमेव 'बहुदोषा हि शर्वरी[६]', अधिकरणिकस्य कथने—'न ह्याकृतिः सुसदृशं विजहाति वृत्तम्[७]' इत्यादयो लोकोक्तयो मृच्छकटिके प्रयुक्ताः सन्ति । एतासु लोकोक्तिषु स्पष्टमेव दृश्यते यदेता गणिका भाग्य-कामाभ्यासादिविषयादिभिः समाश्रिता विद्यन्ते ।

**मृच्छकटिके प्रयुक्ताः सूक्तयः—**

सुष्ठूक्तिः सूक्तिः, सुष्ठु भाषितं सुभाषितमिति सूक्तयः सुभाषितानि च भाषासूत्कर्षमुत्पादयन्ति । अत्र प्रयुक्ता निर्धनत्वभाग्यगुणादिसम्बद्धाः सूक्तयो द्रष्टव्याः—

निर्धनत्वसम्बद्धासु, भाग्यसम्बद्धासु चोक्तिषु चारुदत्तमुखान्निःसृताः सूक्तयो यथा—'सुखं हि दुःखान्यनुभूय शोभते[८]', 'निधनता सर्वापदामास्पदम्[९]', 'निर्धनता प्रकाममपरं षष्ठं महापातकम्[१०]', 'शङ्कनीया हि लोकेऽस्मिन् निष्प्रतापा दरिद्रता[११]' ।

---

१. मृ० ५।१६; २. मृ० ४।१६; ३. मृ० ४।१९ ।
४. ,, ५।८; ५. ,, ५।३; ६. ,, ५।४१ ।
७. ,, ९।१६; ८. ,, १।१०; ९. ,, १।१४ ।
१०. ,, १।३७; ११. ,, ३।२४ ।

भाग्यसम्बद्धासु सूक्तिषु—'भाग्यक्रमेण हि धनानि भवन्ति यान्ति[१]', 'अनावृष्टि-हते सस्ये द्रोणवृष्टिरिवागता[२]', 'प्रभृतयो विशेषरूपेणाकर्षिकाः'। गुणसम्बद्धासु सूक्तिषु विटस्य कथने—'रत्नं रत्नेन संगच्छते[३]', वसन्तसेनाकथने—'निशायां नष्टचन्द्रायां दुर्लभो मार्गदर्शकः[४]' शर्विलकस्य कथने—

गुणेष्वेव हि कर्त्तव्यः प्रयत्नः पुरुषैः सदा।
गुणयुक्तो दरिद्रोऽपि नेश्वरैरगुणैः समः[५] ॥ इति।

पुनश्च वेश्यासम्बद्धा नारीसम्बद्धाश्च सूक्तयः शर्विलकस्यैव कथने—'वेश्याः श्मशानसुमना इव वर्जनीयाः[६]' तथा 'स्त्रियो हृतार्थाः पुरुषं निरर्थं निष्पीडितालक्तकवत्त्यजन्ति[७]' प्रभृतयः प्रसिद्धाः सन्ति।

विपत्तौ प्रयुक्तासु सूक्तिषु चारुदत्तस्य कथने—'मनुष्यस्य विपत्तिकाले छिद्रेष्वनर्था बहुलीभवन्ति[८]'। प्रियसंगमसम्बद्धासु सूक्तिषु तस्यैव कथने—'अहो प्रभावः प्रियसंगमस्य मृतोऽपि को नाम पुनर्ध्रियेत[९]।'

विषयसम्बद्धासु—'वीणा हि नाम असमुद्रोत्थितं रत्नम्[१०]' इति। कामसम्बद्धासु चारुदत्तस्यैव कथने—

धन्यानि तेषां खलुजीवितानि ये कामिनीनां गृहमागतानाम्।
आर्द्राणि मेघोदकशीतलानि गात्राणि गात्रेषु परिष्वजन्ति[११] ॥ इति।

एवमेव विटस्य कथने—'विविक्तविश्रम्भरसो हि कामः'[१२] प्रभृतयः कामोक्तयो द्रष्टव्याः।

**मृच्छकटिके प्रयुक्तानि छन्दांसि—**

प्रकरणे गद्यपद्यात्मिका भाषा प्रयुज्यते। पद्ये पुनर्नानाविधानि छन्दांसि प्रयुक्तानि भवन्ति। मृच्छकटिके स्रग्धरा[१३], पथ्यावक्त्रम्,[१४] मालभारिणी[१५], उपेन्द्रवज्रा[१६], वंशस्थम्[१७], आर्या[१८], वसन्ततिलका[१९]।

---

१. मृ० १।१३; २. मृ० १०।३९; ३. मृ० १।पृ० ६६।
४. ,, ४।२१; ५. ,, ४।२८; ६. ,, ४।१४।
७. ,, ४।१५; ८. ,, ९।२६; ९. ,, १०।४३।
१०. ,, ३।पृ० १८१; ११ ,, ५।४९; १२. ,, ८।३०।
१३. ,, १।१,२,४९, प्रभृतयः; १४. ,, १।२,४४,४५,५० प्रभृतयः।
१५. ,, १।३,५; १६. ,, १।६,३।२३ प्रभृतयः; १७. मृ० १।६,१० प्रभृतयः।
१८. ,, १।८,२७,३३, प्रभृतयः; १९. ,, १।९,१२,१३,१७ प्रभृतयः।

शार्दूलविक्रीडितम्[१], इन्द्रवज्रा[२], मालिनी[३], पुष्पिताग्रा[४], उपजातिः[५], अनुष्टुप्[६], गाथा[७], वैश्वदेवी[८], रुचिरा[९], विपुला[१०], विद्युन्माला[११], वैतालीयम्[१२], गीतिः[१३], प्रहर्षिणी[१४], हरिणी[१५], शिखरिणी[१६], सुमधुरेत्यादीनि[१७] छन्दांसि प्रयुक्तानि सन्ति ।

**मृच्छकटिके प्रयुक्ता अलङ्काराः—**

अलङ्काराः काव्यशोभाधायकाः । ते च शब्दालङ्कारा अर्थालङ्काराश्चेति । मृच्छकटिके शब्दालङ्कारेष्वनुप्रास[१८]-[१९]यमकादयः, अर्थालङ्कारेषु—उपमा[२०]-काव्यलिङ्ग[२१]-अप्रस्तुतप्रशंसा[२२]ऽर्थान्तर[२३]न्यासानां मनोहरः संगमो दृश्यते । एवमेव स्वभावोक्तिः[२४], मालोपमा[२५], उत्प्रेक्षा[२६], रूपकम्[२७], निदर्शना[२८], विषमः[२९], विरोधः[३०], उल्लेखः[३१], समुच्चयः[३२], मालारूप[३३]कातिशयोक्तिः[३४], दीपकः[३५], दृष्टान्तः[३६], सहोक्तिः[३७], संदेहः[३८], समासोक्तिः[३९], श्लेषः[४०],

---

१. मृ० १।१४,२३,३२ प्रभृतय ; २. मृ० १।१२,२९,४१ प्रभृतयः ।
३. ,, १।२१,३१,४७ प्रभृतयः; ४. ,, १।२४,५५ प्रभृतयः ।
५. ,, १।२८,३०,३८ प्रभृतय ; ६. ,, १।३४,३९,४० प्रभृतयः ।
७ ,, १।४३, २।२ प्रभृतयः; ८ ,, १।४७ प्रभृतयः ।
९. ,, २।६ प्रभृतयः; १०. ,, १।५,९ प्रभृतयः ।
११. ,, २।८,९ प्रभृतयः; १२. ,, ७।१४,३।९ प्रभृतयः ।
१३. ,, २।२० प्रभृतयः; १४. ,, ४।२ प्रभृतयः ।
१५. ,, ४।३ प्रभृतयः; १६. ,, ५।१२,२२ प्रभृतयः ।
१७. ,, ९।२१ प्रभृतयः; १८. ,, १।२,४ प्रभृतयः ।
१९. ,, १।३४ प्रभृतयः; २०. ,, १।६,१२ प्रभृतयः ।
२१. ,, १।६,४२ प्रभृतयः; २२. ,, १।८,५१ प्रभृतयः ।
२३. ,, १।५८ प्रभृतयः; २४. ,, १।७,५४ प्रभृतयः ।
२५. ,, १।२४,४९ प्रभृतयः; २६. ,, १।७,३३ प्रभृतयः ।
२७. ,, १।३६ प्रभृतयः; २८. ,, १।५० प्रभृतयः ।
२९. ,, २।८ प्रभृतयः; ३०. ,, २।१६ प्रभृतय. ।
३१. ,, ३।३ प्रभृतयः; ३२. ,, ३।१६ प्रभृतयः ।
३३. ,, ३।२० प्रभृतयः; ३४. ,, ३।२४ प्रभृतयः ।
३५. ,, ४।१६ प्रभृतयः; ३६. ,, ४।२१ प्रभृतयः ।
३७. ,, ५।१ प्रभृतयः; ३८. ,, ४।६ प्रभृतयः ।
३९. ,, ५।२८ प्रभृतयः; ४०. ,, ५।१५ प्रभृतयः ।

संसृष्टिः[1], संकरा[2]दयोऽलंकाराः प्रयुक्ताः सन्ति। एते अलंकाराः प्रकरणस्यास्य साहित्यिकशोभां शब्दार्थसौन्दर्यञ्चाभिवर्धयन्तीति शूद्रकस्य कौशलम्।

**मृच्छकटिके प्रयुक्तानि सम्बोधनपदानि—**

नाटकादौ सम्बोधनपदं पात्रानुरूपं भवतीति नाट्यशास्त्रे विवेचितम्। प्रकरणेऽस्मिन्नपि पात्रानुरूपाणि सम्बोधनपदानि प्रयुक्तानि सन्ति। चारुदत्तो विदूषकं वयस्य! सखे! मैत्रेय! इत्यादि शब्दैः सम्बोधयति। सम्बोधनपदमिदं नायकसम्मतम्। पुनश्च सः स्वप्रियां वसन्तसेनाम्—'आर्ये! प्रियवसन्तसेने! स्वपुत्रं—वत्स! स्वकीयां प्रियां पाणिगृहीतीं भार्यां धूतां च—प्रिये! इत्यादि-सम्बोधनपदैर्व्यवहरति। विदूषकश्चारुदत्तं—वअस्स (वयस्य) वर्द्धमानकं—'वड्ढमाणअ, रदनिकां—दासीए धीए (दास्याः पुत्री), वसन्तसेनां—भोदी (भवति), कुम्भीलकं—कुम्भीलआ, शकारं क्रोधावस्थायां—कुट्टिणी पुत्ता, काणेलीसुदा, राअश्शाल संठाणआ उस्सुंखलआ (कुलटापुत्र, राजश्यालसंस्थानक, उच्छृङ्खलक) इत्यादि सम्बोधनपदैर्व्यव-हरति। रोहसेनः स्वपितरं—ताद! आवुक!, वसन्तसेना माता अधिकरणिकानां कृते—भावमिश्राः (भावेषु विद्वत्सु मिश्राः श्रेष्ठा इति), आर्यमिश्राः (आर्येषु माननीयेषु मिश्राः पूज्या इति)। विटः शकारं—काणेलीमातः[3] मूर्खः, अधिकरणिकः शोधनकं—भद्र, चारुदत्तं—आर्य! भिक्षुकः पुरुषम् उपासक! स्त्रीश्च उपासिका[4] इति पदैः सम्बो-धयति। अनेन स्पष्टं भवति यन्मृच्छकटिके प्रयुक्तानि सम्बोधनपदानि नाट्यपद्धत्य-नुकूलानीति।

**मृच्छकटिके रसयोजना—**

प्रकरणसिद्धान्तानुसारेण शृङ्गारोऽङ्गीति मृच्छकटिके शृङ्गारस्य प्राधान्यं विद्यते। अन्ये रसा विदूषकशकारादीनां कथनेषु हास्यबीभत्सादयश्च शृङ्गारस्य पोषका एव। एवमेव वत्सलकरुणादयो रसा अप्यङ्गत्वेनाऽत्र दृश्यन्ते।

प्रकरणकारो ग्रन्थस्यादावेव वसन्तसेनाचारुदत्तयोः स्मरतोत्सवाश्रयं वृत्तमुपस्था-पयितुमुपक्रमते[5]। प्रथमाङ्के वसन्तसेनामनुगच्छन्तो विटचेटशकारादयः कामसम्बद्धान् प्रसङ्गानुपस्थापयन्ति[6]। प्रथमाङ्क एव वसन्तकेनाचारुदत्तयो रतिबीजाङ्कुरस्य प्रादु-र्भावो जायते। पञ्चमाङ्के शुक्लाभिसारिकावेशेन गच्छन्ती वसन्तसेना नितरां शृङ्गारा-श्रया। वर्षावर्णनं तूद्दीपकं रतिमुद्दीपयतितराम्। अनेन शृङ्गाररसाप्लावितेऽस्मिन्

---

१. मृ० २।१ प्रभृतयः; २. मृ० ५।२ प्रभृतयः; ३. मृ० १। पृ० ७८।
४. ,, १०। पृ० ६८१; ५. ,, १।७,३४; ६. ,, १।२०-२२,२७,४२,५४।

प्रकरणे हास्यरसस्याभिव्यञ्जनं तु विदूषकस्य[1] शकारस्य च वाक्येषु भवति। बीभत्स-रसोऽष्टमाङ्के वसन्तसेनामोटनप्रसङ्गे दशमाङ्के[2] वध्यस्थानस्य श्मशानस्य च वर्णने दृश्यते। एवमेव करुणरसस्य धारा तु दशमाङ्के प्रवहतेतरां चारुदत्तस्य वधप्रकरणे। रोहसेनप्रसङ्गे वत्सलरसस्याभिव्यञ्जनं जायते। अन्ते वसन्तसेनाया आगमनेन चारु-दत्तस्य सर्वाणि वध्यचिह्नानि वरचिह्नानीव जातानीति शृङ्गारस्य विजयः—

रक्तं तदेव वरवस्त्रमियञ्च माला कान्तागमेन हि वरस्य यथा विभाति।
एते च वध्यपटहध्वनयस्तथैव जाता विवाहपटहध्वनिभिः समानाः[3] ॥

**मृच्छकटिकस्य काव्यवैशिष्टचम्—**

पञ्चमाङ्के वर्षावर्णने चारुदत्तस्य विटस्य च भाषा काव्यात्मकवैशिष्ट्यं दधाति। कल्पनायाः सौन्दर्यमलङ्काराणां योगाः, रीतिवृत्तिगुणानाञ्चोपन्यासा भाषायाश्चारुत्वोत्पादकाः सन्ति। विम्बस्योपस्थापनमपि प्रवाहपूर्णभाषया संवलितम्। न्यायालयस्य वर्णने समुद्रमिवाचरति न्यायालय इत्युपमा-रूपकालङ्कारयोः संकरत्वेन वैशिष्ट्यमुपदधाति[4]। वसन्तसेनायाः समृद्धिवर्णने विदूषकस्य गद्येऽपि काव्यत्वं प्राप्यते[5]। गीतिनाट्यप्रयोगात्तु नाट्यसौन्दर्यस्य दर्शनीयम्—

| | चारुदत्तः | आर्यकः |
|---|---|---|
| १. | क्षेमेण व्रज बान्धवान् | ननु मया लब्धो भवान् बान्धवः |
| २. | स्मर्तव्योऽस्मि कथान्तरेषु भवता | स्वात्मापि विस्मर्यते। |
| ३. | त्वां रक्षन्तु पथि प्रयान्तममराः | संरक्षितोऽहं त्वया |
| ४. | स्वैर्भाग्यैः परिरक्षितोऽसि | ननु हे तत्रापि हेतुर्भवान्[6] ॥ |

प्रकृतिचित्रणे शूद्रकस्य दृष्टिः सूक्ष्मा। 'वर्षतीवाञ्जनं नभः'[7], 'दिवोऽश्रुधारा इव वारिधाराः[8]' इत्यादिश्लोकेषु निरतिशयं काव्यसौन्दर्यं दृश्यते। अतोऽस्य भाषा गुणै रीतिभिरनुसृता काव्यात्मकसौन्दर्येणोपेता चकास्तीति।

---

१. मृ० ७।पृ० ४४६।

२. अहं कलेवलं पडिवुत्तं कट्टंति बीह गोमाआ।
अद्धं पि शूललग्गं वेशं विघ्न अट्टहाशश्श ॥ (१०।३२)

३. मृ० १०।४४; ४. राजकरणं हिंस्रैः समुद्रायते—९।१४; ५. ४।पृ० २८४, ३०६।

६ मृ० ९।१४; ७. मृ० १।३४; ८. मृ० ५।५२।

निष्कर्षतः कथनमिदं सत्यं प्रतीयते यन्मृच्छकटिके प्रयुक्ताभिर्विविधाभिर्भाषाभिः शूद्रकस्य भाषापाण्डित्यं दरीदृश्यते। प्रकरणस्यास्य भाषावैशिष्ट्यं तु शूद्रकस्य साफल्यं द्योतयति। अस्य कथाशैली विस्तृता भाषाशैली चालंकृता सर्वत्र दृश्यते। भाषाप्रयोगेण प्रतीयते यद् शूद्रक एव 'वाग्देशभाषान्ते'[1] इति। मृच्छकटिकस्य भाषिकसंरचनायां यानि सम्बद्धानि भाषातत्त्वानि रचनाप्रकाराणि काव्यवैशिष्ट्यादीनि वर्णितानि, तानि तु वस्तुतः पृथक् पृथक् शोधकार्याणि सन्ति। विषयस्य महत्त्वाद् शोधपत्रस्य रेखानियमनाच्च सारतः शोधपत्रमिदं विन्यस्तमिति गवेषकाणां कृते मार्गदर्शनस्याकाङ्क्षायां शुक्लयजुर्वेदमन्त्रप्रभावापन्नेनास्य भरतवाक्येन प्रकृतशोधपत्रस्य भरतवाक्यं प्रस्तौमि—

क्षीरिण्यः सन्तु गावो भवतु वसुमती सर्वसम्पन्नसस्या<br>
पर्जन्यः कालवर्षी सकलजनमनोनन्दिनो वान्तु वाताः।<br>
मोदन्तां जन्मभाजः सततमभिमता ब्राह्मणाः सन्तु सन्तः<br>
श्रीमन्तः पान्तु पृथ्वीं प्रशमितरिपवो धर्मनिष्ठाश्च भूपाः[2] ॥ इति।



---

१. मृ० ३।२०।

२. "आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामाराष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायतां दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम्।" (शु० य० २२।२२)

# तान्त्रिकी वरिवस्या–तस्या भेदाश्च

**श्रीव्रजवल्लभद्विवेदः**
**भू० पू० सांख्ययोगतन्त्रागमविभागाध्यक्षः**
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी

❁❁❁

बाह्याऽऽन्तरी चेति द्विविधा वरिवस्या तन्त्रशास्त्रेषु वर्ण्यते। तत्र बाह्यैः पुष्पधूपादिभिः स्वेष्टदेवतासमाराधनं बाह्यवरिवस्यापदेन, भावनाप्रवणेन चित्तेन च तस्याः समाराधनमान्तरवरिवस्यापदेन परिचीयते। कुलक्रमादिसम्प्रदायेषु स्वात्मदेवता समाराध्यते तत्तच्छास्त्रपद्धत्या। अयं चान्य एव प्रकारः पूजायाः। पूजायाः प्रकारत्रयमेतत्—

तव नित्योदिता पूजा त्रिभिर्भेदैर्व्यवस्थिता।
परा चाप्यपरा गौरि तृतीया च परापरा॥
प्रथमाऽद्वैतभावस्था सर्वप्रसरगोचरा।
द्वितीया चक्रपूजा च सदा निष्पाद्यते मया॥
एवं ज्ञानमये देवि तृतीया तु परापरा।
उत्तमा सा परा ज्ञेया……( ३।२-४ )

इत्येवं वर्ण्यते योगिनीहृदये परा-अपरा-परापराभेदेन। अत्र बाह्यपूजा अपरा, आन्तरवरिवस्या परा, स्वात्मदेवतासमाराधनं च परापरापूजेति मन्तव्यम्।

अत्र पराया उत्तमत्वमुद्घोष्यते। शक्तिसङ्गमतन्त्रे च देव्याः पूजाविषयके प्रश्ने शिवः—

विष्ठापूर्णे मृद्घटे तु बहिः शुद्धौ तु किं फलम्।
अन्तःशुद्धिं समासाद्य बहिःशुद्धिं समाचरेत्॥ इति।

"अन्तः पूजां समासाद्य बहिः पूजां समाचरेत्" ( ४।११।७४-७५,७९ ) इति निश्चिनोति। "यद्यद् बाह्यं वक्ष्यमाणं तत्तदान्तरमाचरेत्" इति वचनं स्मरंश्च योगिनीहृदयदीपिकाकारः—"एतेन बाह्यपूजां सर्वामप्यादावन्तः कुर्यादिति सूच्यते" ( ३।९० ) इति निष्कर्षयति। अत एव—

न पूजा बाह्यपुष्पादिद्रव्यैर्या प्रथिताऽनिशम् ।
स्वे महिम्नद्वये धाम्नि सा पूजा या परा स्थितिः ॥

इत्येतादृशानि वचनानि प्रवर्तन्ते । यतो हि—

बालिकारचितवस्त्रपुत्रिकाक्रीडितेन सदृशं तदर्चनम् ।
यत्र शाम्यति मनो न निर्मलस्फीतचिज्जलधिमध्यमाश्रितम् ॥ इति,

पूजा होमः क्रमश्चर्या व्रतं शास्त्रनिषेवणम् ।
तपो ध्यानं जपः शौचं तत्त्वहीनस्य निष्फलम् ॥

इति च दिशा आन्तरवरिवस्यां विना निष्फलप्रायं भवति बाह्यमर्चनम् । अत एव शिवानन्दः—"पूजा विश्वस्य वेद्यस्य चिद्भूमिविश्रान्तिः" इति पूजालक्षणं वक्ति, भट्टगङ्गाधरस्तोत्रप्रामाण्येन च धूपगन्धदीपनैवेद्यरहस्यं स्फोरयति । अत एव च—"परमनिरावरणात्मनि रूपे यो दृढतरः परामर्शः । पूजनमेतदितीत्थं प्रभुणा निरणायि" इति पूजनलक्षणं महानयपद्धत्यां वर्ण्यते—

ये ये भावा ह्लादिन इह दृश्याः सुभगसुन्दराकृतयः ।
तेषामनुभवकाले स्वस्थितिपरिपोषणं सतामर्चा ॥

इति च वक्ति प्रशस्तिभूतिपादः । यतो हि—

या या संविदुदारा यो योऽप्यानन्दसुन्दरो भावः ।
जगति यदद्भुतरूपं तत्तद् देव्यास्तवाकारः ॥

इति नीत्या सर्वं देवीमयमेव ।

योगो नान्यः क्रिया नान्या तत्त्वारूढा हि या मतिः ।
स्वचित्तवासनाशान्तौ सा क्रियेत्यभिधीयते ॥

इत्यागमशास्त्रवचनेऽपि क्रियापदं पूजनपरमेव प्रत्येयम् । तच्च परामेव पूजां निर्दिशतीति बाढं सिद्ध्यति परापूजाया उत्तमत्वम् । अतश्च अपरायाः परापरायाश्च पूजाया योग्यतावाप्त्यर्थं पराया अभ्यासोऽतीवावश्यक इति विज्ञेयम् ।

उपर्युद्धृते योगिनीहृदयवचने निर्दिष्टा बाह्यचक्रपूजाऽपराख्या बाह्यवरिवस्यापदेनाख्यायते । पञ्चभूतमयैर्गन्धपुष्पादिभिर्बाह्यार्चनमिति दीपिकाकारः ( ३।११२ ) । ऋजुविमर्शिनीकारोऽपि ( पृ० १३४ ) प्रपञ्चसारप्रामाण्येनैषां लक्षणमाह । पञ्चोपचारादिभेदैर्बहुधेयं भिद्यते ।

परापरा च पूजा—"एवं ज्ञानमये पूर्वोक्ताद्वैतभावनामये धाम्नि बाह्यस्य पृथगात्मकावरणार्चनरूपस्य कर्मणो ज्ञानमयताविश्रान्तिस्तृतीया परापरा पूजा। तदुक्तमभियुक्तैः—

प्रकाशैकघने धाम्नि विकल्पप्रसरादिकम्।
निक्षिपाम्यर्चनद्वारा वह्नाविव घृताहुतीः॥" (सु० वा० ३७)

इत्येवं विवृताऽमृतानन्देन। अत्र परायाः परापरायाश्च पूजाया भेदः सावधानं सूक्ष्मेक्षिकया हृदयङ्गमीकरणीयः। तत्राशुद्धविकल्पानां शोधनाय परापराख्या पूजा प्रवर्तते। पराख्यायां च पूजायां सर्वं शुद्धसंविन्मयमेव राजते। तदेतदुत्तरत्र स्फुटीभविष्यति।

एवं च—

यद्यथोपनतमेव पूर्णतामादधाति हृदयङ्गमत्वतः।
तत्तथैव परमेशपूजने योग्यमन्यदिह नास्ति लक्षणम्॥ इति,
स्वात्मानं हि विहाय चेतनममुं कं पूजयेयुर्जडम्।

इति च ज्ञानेन्दुकौमुदीवचनयोः—

इन्द्रियद्वारसंग्राह्यैर्गन्धाद्यैरात्मदेवता।
स्वभावेन समाराध्या ज्ञातुं सोऽयं महामखः॥

इति मुख्याम्नायरहस्यविधिवचने, "आनन्दप्रसरः पूजा", "शिवशक्तिसमापत्त्या" इति त्रिकसारवचनयोः, "अहो स्वादुरसः कोऽपि" इति पूजनस्तोत्रवचने च परापराख्या पूजैव व्यावर्ण्यते।

महेश्वरानन्देन तु चाररावेत्यादिचिद्गगनचन्द्रिकाप्रामाण्येन चारो रावश्चरुर्मुद्रेति चतुर्विधा पूजा निर्दिष्टा। तथा हि—"तत्र चारः समयाचारः। रावो विमर्शः। चरुः प्रथमद्वितीयादिकम्। मुद्रा स्वात्मनः परमेश्वरत्वोपपादनाय स्वशरीरं प्रति कल्प्यमानः करचरणादिसन्निवेशविशेषो वेषधारणविशेषश्च। महती तु मुद्रा पर्यन्ततो राव एवान्तर्भवति। तत्र चतुर्ष्वपि पूजाक्रमेषु प्राधान्येन राव एवोपयुज्यते। अन्येषां तु पर्यन्ततस्तत्प्रयोजकतया परिग्रहणम्। तस्मात् स्वस्वरूपपरामर्श एव परमा पूजा। अन्यत् तु गन्धपुष्पधूपदीपाद्याडम्बरमात्रमिति तात्पर्यार्थः" ( पृ० १०६ ) इति। अत्र विमर्शात्मकस्य रावस्य परमत्वं महेश्वरानन्दो वक्ति। चारस्य मुद्रायाश्चापराख्यायां बाह्यपूजायाम्, चरोश्च परापरायां पूजायां समावेशः कर्तुं शक्यत इति पूजायास्त्रैविध्यमेवात्र पर्यन्ततः प्रतिफलति।

१७

त्रिकदर्शनेषु किल— आणव-शाक्त-शाम्भवाख्यास्त्रय उपायाः, चतुर्थी चानुपाय-प्रक्रिया स्वस्वरूपप्रत्यभिज्ञानसाधनतयोपवर्ण्यन्ते। तेषामप्यत्रैवान्तर्भावः कर्तुं शक्यते। तथाहि—केषाञ्चनाणवोपायानामपरायामन्येषां च परापरायाम्, शाक्तोपायस्य परा-परायाम्, शाम्भवोपायस्यानुपायप्रक्रियायाश्च परायां समावेश इति। आणवोपायेषु केषुचित् प्राणचक्राद्यान्तरसाधनानां समुपयोगो भवति, शाक्तोपाये शाम्भवोपाये च क्वचन स्वात्मदेवताप्रीतये ललनामद्यमांसानि स्वीक्रियन्त इति तेषां परापराख्यायां पूजायामेव समावेशो भवितुमर्हति, न परायाम्। शाम्भवोपायपर्यन्तावस्थायामनुपाय-प्रक्रियायां च प्रविष्टो योगी प्रातिभज्ञानमन्तरा न किमपि बाह्यमान्तरं वा साधनमपेक्षत इति सत्यं तथाविधायां शाम्भवोपायप्रक्रियायामनुपायप्रक्रियायां च परा पूजा निष्पाद्यते। उपायचतुष्टयं चास्माभिरन्यत्र विवृतमिति नात्र प्रयत्यते। केवलं पूजात्रयमेव यथाशास्त्रं किञ्चिद्विस्तरेण वर्ण्यते।

**अपरा पूजा—**

स्थानप्रकल्पनाख्यमाणवोपायं वर्णयताऽभिनवगुप्तेन—

स्थानभेदस्त्रिधा प्रोक्तः प्राणे देहे बहिस्तथा।
प्राणश्च पञ्चधा देहे द्विधा बाह्यान्तरत्वतः॥
मण्डलं स्थण्डिलं पात्रमक्षसूत्रं सपुस्तकम्।
लिङ्गं तूरं पटः पुस्तं प्रतिमा मूर्तिरेव च॥
इत्येकादशधा बाह्यं पुनस्तद्बहुधा भवेत्।
(तन्त्रा० ६।२-४)

इत्युक्तम्। अत्र–"पुस्तं लेपादिनिर्मिताऽऽकृतिः। मूर्तिर्गुर्वादिसम्बन्धिनी" इति जयरथः। एतेष्वेकादशबाह्यस्थानेषु स्वेष्टदेवतां प्रतिष्ठाप्य बाह्यैरेव पुष्पादिभिः कृतं समाराधनमपरा पूजा। "स्थण्डिलादुत्तरं तूरं तूरादुत्तरतः पटः" इति सिद्धयोगीश्वरीमते स्थण्डिलतूरपटा-नामुत्तरोत्तरं वैशिष्ट्यं प्रदर्श्यते। अत्रापि जयरथः–"स्थण्डिलं यागार्थं गृहीतो भूप्रदेशः। तूरं पात्रादावुत्कीर्णं आधारविशेषः" (२।४२) इत्येवं स्थण्डिलतूरशब्दौ व्याख्याति। तूरलक्षणं च सविधानं सिद्धातन्त्रतः संगृहीतं लुप्तागमसंग्रहे (II, पृ० १९९-२००) द्रष्टव्यम्। "मण्डलं सारमुक्तं हि मण्डश्रुत्या शिवाह्वयम्" (तन्त्रा० ३७।२१) इत्यत्र मण्डलपदनिर्वचनं प्रदर्श्यते। "मण्डलमिति मण्डं शिवाह्वयं सारं लातीत्यर्थः" इति च तत्र जयरथः। अस्मिन् प्रसङ्गे—"सर्वार्चनं स्थण्डिले स्यान्न च तत्राधिवासनम्" इति हंसपारमेश्वरवचनम्, "अन्तर्लिङ्गं दृढं बद्ध्वा बहिर्लिङ्गं प्रपूजयेत्" इति सिद्धान्तवचनं च स्मरणार्हम्।

लुप्तागमसंग्रहस्य द्वयोरपि भागयोः संगृहीतेषु वचनेषु बाह्यार्चनसंबद्धा नैके विषयाः प्रतिपाद्यन्ते। दशदिक्पालपूजनेऽष्टदिक्षु तावदष्टौ दिक्पालाः पूज्यन्ते मण्डलादिषु। नवमदशमयोस्तु पूजनस्थानं कुत्रेति समस्या—

इन्द्रेशानदिशोर्मध्ये स्थानमन्यत् प्रकीर्तितम्।
नैर्ऋताम्वुदिशोर्मध्ये स्थानमन्यत् प्रकीर्तितम्॥

इति तत्त्वविमर्शिनीश्लोकेन समाधीयते। इन्द्रेशानदिशोर्मध्ये गगनाधिपतेः, नैर्ऋताम्बुदिशोर्मध्ये च पातालाधिपस्य पूजनं विधेयमिति तेन ज्ञायते। इन्द्रदिगत्र पूर्वा, अम्बुदिक् च पश्चिमा। "ततो मूले उत्तरतः" इति त्रिशिरोमतवचने नन्दिरुद्रगङ्गायमुनादीनां पूजनस्थानं निर्दिश्यते। एवमेव द्वारदेवताक्रमस्त्रिशिरोमते वामसिद्धान्तमतयोश्च प्रतिपादितः स्वच्छन्दोद्द्योते (२।२४-२५) वर्ण्यते। पराख्यसंहितायां पञ्चगव्यविधानं दृश्यते। स्वच्छन्दतन्त्रवदेव (३।५४-५५) सात्वतसंहितायामपि (७।१०,१६।१३) पञ्चगव्यसंस्कारोऽवधानार्हः। अत्रत्यं भाष्यमपि द्रष्टव्यम्।

सिद्धान्तशैवपद्धत्या स्नानासनसन्ध्यातर्पणन्यासमुद्रादेहशुद्धिभूपरिग्रहाधिवासमण्डपार्घ्यपात्रसाध्यमन्त्रजपपूजाऽग्निकार्यादिविचारः किरण-निःश्वासोत्तर-पौष्करमतङ्गमयसंग्रह-रौरव-स्वायम्भुवादिवचनेषु द्रष्टुं शक्यते। शैवाद्यागमेषु क्रियाचर्यापादयोर्वर्तते बाह्यार्चनस्य महान् विस्तरः। पाशुपतीये पञ्चार्थप्रमाणेऽघोरमन्त्रव्याख्यानप्रसङ्गे—"नमस्कारः परित्यागः कार्यकारणलक्षणः" इति नमस्कारलक्षणं प्रदर्श्यते। वेदव्रतानि महायज्ञाश्च यज्ञसूत्रवचनयोः, अष्टाचत्वारिंशत्संस्काराश्च प्रायः सर्वेष्वागमेषु द्रष्टुं शक्यन्ते। विषयोऽयं परशुरामकल्पसूत्रद्वितीयसंस्करणद्वितीयपरिशिष्टे (३८६-३९५, ४२८-५४१) पृष्ठेषु वितानितस्तत्रैवावलोकनीयः।

**परा पूजा—**

क्रमवासनावचनेष्वान्तरयजनपद्धत्या शोषण-करशुद्धि-उन्मज्जनानां स्वरूपं निदर्श्यते। ग्रन्थोऽयं साम्प्रतं सुभगोदयवासनानाम्ना मुद्रित उपलभ्यते। सम्पूर्णेऽस्मिन् ग्रन्थे चिद्विलासस्तवे च वासनामयी बाह्याभ्यन्तरपुष्पप्राणाद्यनपेक्षिणी सेयमान्तरवरिवस्या स्वे महिम्न्यद्वये धाम्नि प्रतिष्ठापनसमर्था वर्ण्यते। ज्ञानदीपविमर्शिन्यामधुनावध्यप्रकाशितायां च सन्ध्यासूर्योपस्थानादिप्रकरणेषु सर्वेषु बाह्या आन्तराश्चोपचाराः प्रदर्श्यन्ते। तेषां स्वरूपमुदयाकरपद्धतिवचनेष्वपि द्रष्टुं शक्यते। विज्ञानभैरवस्य प्रारम्भिकेष्वन्तिमेषु च श्लोकेषु विशेषतो धारणाप्रतिपादकेषु च श्लोकेषु सामान्यतोऽनुपायप्रक्रियामुखेन परा पूजा विवृता। गीतानिष्यन्दे, भट्टनायकस्तोत्रे, पूर्वतन्त्रे च शक्ति-

जप-यजन-लिङ्गादिपदानां तादृश एवार्थः स्फोर्यते । योगिनीहृदयप्रतिपादितं च परायाः पूजायाः स्वरूपमग्रे वक्ष्यते ।

**परापरा(वाम)पूजा—**

तन्त्रालोके पञ्चदशाह्निके ब्रह्मयामल-आनन्दशासन( आनन्देश्वर )-योगसंचार-निर्मर्यादशास्त्र-त्रिशिरोमत-निशाटन(निशिसंचार)-वीरावलीहृदय-मतभट्टारक-नन्दिशिखा-भर्गशिखाऽऽगमशासन-संकर्षिणीयामल-नवनित्याविधान-भूतक्षोभ-पञ्चामृत - देवीयामल - माधवकुल-ऊर्मिकुलप्रामाण्येन वामाचारप्रधानः पूजाविधिः प्रदर्शितः ।

संसारवामाचारत्वात् सर्वं वामकरेण तु ।
कुर्यात् तर्पणयोगं च दैशिकस्तदनामया ॥
वामशब्देन गुह्यं श्रीमतङ्गादावपीरितम् ।
वामाचारपरो मन्त्री यागं कुर्यादिति स्फुटम् ॥
श्रीमद्भर्गशिखाशास्त्रे तथा श्रीगमशासने ।
सर्वतीर्थेषु यत्पुण्यं सर्वयज्ञेषु यत्फलम् ॥
तत्फलं कोटिगुणितमनामातर्पणात् प्रिये ।

( १५।२७८-२८१ )

इत्यत्र वामशब्दनिर्वचनपूर्वकमनामातर्पणस्य वैशिष्ट्यमाह । जयरथेनाप्यत्र—

वामं गुह्यं समाख्यातममृतं खेचरीप्रियम् ।
रहस्यं सर्वभूतानां वामशब्देन कीर्त्यते ॥

इत्येवं वामपदं व्याख्यातम् । संकर्षिणीयामल-नवनित्याविधान-द्वादशसाहस्रश्रीमदानन्देश्वर-भूतक्षोभ-पञ्चामृतप्रामाण्येन चानामातर्पणं विवृतम् । सम्पूर्णेऽस्मिन्नाह्निके स्नानाष्टक-वीरविग्रहाष्टक-यागस्थान-यागद्रव्य-यागक्रम-न्यासमुद्रादिविधि-डामरयाग-कुण्ड-संस्कार-योजनिका-शिवहस्त-आचार्यपुत्रकदैशिकदीक्षा-अष्टाचत्वारिंशत्संस्कार-अष्टाष्टकात्मकसमयप्रभृतयो विषया विवेचिताः । सर्वषामेषां विनियोगोऽत्र प्रथमतोऽपरायाम्, अन्ततश्च परापरायां पूजायां स्वात्मदेवताप्रीतये विधीयते ।

इदं वचनद्वयं खलु विशेषतोऽवधेयमत्र—

जातिविद्याकुलाचारदेहदेशगुणार्थजान् ।
ग्रहान् ग्रहानिवाष्टौ द्राक् त्यजेद् गह्वरदर्शितान् ॥
तथा श्रीनिशिचारादौ हेयत्वेनोपदर्शितान् । इति,

( १५।५९५-५९६ )

श्रीमदानन्दशास्त्रे च कथितं परमेष्ठिना ।
निरपेक्षः प्रभुर्वामो न शुद्ध्या तत्र कारणम् ॥
देवीतृप्तिर्मखे रक्तमांसैर्नो शौचयोजनात् ।
द्विजान्त्यजैः समं कार्या.............................. ॥ इति च ।
( १५।६०१-६०३ )

भास्कररायेणापि "वामावर्तेन पूजयेत्" ( नि० षो० १।१७६ ) इत्यत्र, "सव्यापसव्यमार्गस्था" ( ल० स० श्लो० २२० ) इत्यत्र च वामशब्दः सुविशदं व्याख्यातः । तेन वामावर्तपूजनाऽनामातर्पणादिविधिवैशिष्ट्यवशात् शिवस्य वाममुखोद्गतत्वाच्च शास्त्रविशेषं विधिविशेषं च सूचयत्ययं शब्दः । "वामदक्षिणतन्त्रादिष्वप्येतन्मयमेव सर्वं निर्वहतीति" ( पृ० १७१ ) क्रमकेलिवचनं समुद्धरन् महेश्वरानन्दः क्रमकुलविधीनां वामदक्षादिष्वनुवर्तनमादिशति । अत एव चाभिनवगुप्तः—

अतः कुलक्रमोत्तीर्णत्रिकसारमतादिषु ।
मद्यकादम्बरीशीधुद्रव्यादेर्महिमा परम् ॥
( तन्त्रा० १५।१६९-१७० )

इति वक्ति ।

न नद्यो मधुवाहिन्यो न पलं पर्वतोपमम् ।
स्त्रीमयं न जगत् सर्वं कुतः सिद्धिः कुलागमे ॥

इति च वचनं तत्र जयरथः समुद्धरति ।

**परापरा(क्रमकुल)पूजा—**

श्रीभैरवकुलेऽप्युक्तं कुलपर्वप्रपूजने ।
स्थण्डिलेऽग्नौ पटे लिङ्गे पात्रे पद्मेऽथ मण्डले ॥
मूर्तौ घटेऽस्त्रसंघाते धटे सूत्रेऽथ पूजयेत् ।
स्वेन स्वेनोपचारेण सङ्करं वर्जयेदिति ॥
( तन्त्रा० २७।४५-४६ )

इति भैरवकुलवचने स्थानप्रकल्पनप्रकरणोक्तैकादशस्थानापेक्षया किञ्चिद्वैलक्षण्यं दृश्यते । सङ्करं कथं वर्जनीयमित्यत्र प्रमाणतया जयरथस्तत्रैव—

गृहे गृहोद्भवैर्द्रव्यैः श्मशाने च तदुद्भवैः ।
विधिवत् पूजनं कार्यं शबलं न समाचरेत् ॥

इति वचनं स्मरति । तदेतस्य शाबल्यस्य परिहाराय तन्त्रालोके एकोनत्रिंशाह्निके—"अथ

सर्वाप्युपासेयं कुलप्रक्रिययोच्यते" ( २९।१ ) इत्यादिना विलक्षणः कुलयागः प्रतिपाद्यते ।

सिद्धक्रमनियुक्तस्य मासेनैकेन यत् भवेत् ।
न तद्वर्षसहस्रैः स्यान्मन्त्रौघैर्विविधैरिति ।। ( २९।३ )

इत्येवं प्रक्रियाया अस्या अभिनवगुप्तो माहात्म्यं भणति—

सिद्धान्तादिषु तन्त्रेषु ये मन्त्राः समुदाहृताः ।
वीर्यहीनास्तु ते सर्वे शक्तितेजोज्झिता यतः ।।
कौलिकास्तु महामन्त्राः स्वभावाद्दीप्ततेजसः ।
स्फुरन्ति दिव्यतेजस्काः सद्यः प्रत्ययकारकाः ।। ( २९।३ )

इति च तत्र जयरथः प्रमाणमुद्धरति ।

कुलं च परमेशस्य शक्तिः सामर्थ्यमूर्ध्वता ।
स्वातन्त्रमोजो वीर्यं च पिण्डः संविच्छरीरकम् ।। ( २९।४ )

इत्येवं च कुलशब्दार्थस्तत्र व्यावर्ण्यते ।

तादृग्रूपनिरुढ्यर्थं मनोवाक्कायवर्त्मना ।
यद्यत् समाचरेद् वीरः कुलयागः स स स्मृतः ।। ( २९।६ )

इति कुलयागलक्षणम् ।

बहिः शक्तौ यामले च देहे प्राणपथे मतौ ।
इति षोढा कुलेज्या स्यात्.........................।। ( २९।७ )

इति च तस्य भेदानाह ।

स्नानमण्डलकुण्डादि षोढान्यासादि यन्न तत् ।
किञ्चिदत्रोपयुज्येत कृतं वा खण्डनाय नो ।।
षण्मण्डलविनिर्मुक्तं सर्वावरणवर्जितम् ।
ज्ञानज्ञेयमयं कौलं प्रोक्तं त्रैशिरसे मते ।।
अत्र योगे च यद् द्रव्यं निषिद्धं शास्त्रसन्ततौ ।
तदेव योजयेद् धीमान् वामामृतपरिप्लुतम् ।।
श्रीब्रह्मयामलेऽप्युक्तं सुरा शिवरसो बहिः ।
तां विना भुक्तिमुक्ती नो........ ( २९।८-११ )
धीकर्माक्षगता देवीर्निषिद्धैरेव तर्पयेत् ।
वीरव्रतं चाभिनन्देदिति भर्गशिखावचः ।।

( तन्त्रा० १२।१९-२०, परा० अभि०, पृ० २३५ ),

न विधिर्नार्चनक्रमः............( लुप्ता० II, पृ० २०५ )

इतीमानि वचनानि चात्रावधेयानि ।

श्रीमत्क्रमरहस्ये च न्यरूपि परमेशिना ।
अर्घपात्रं यामधाम दीप इत्युच्यते त्रयम् ॥
रहस्यं कौलिके योगे तत्रार्घः शक्तिसंगमात् ।
भूवस्त्रकामपीठाख्यं धाम चोत्कर्षभाक् क्रमात् ॥
दीपा घृतोत्था गावो हि भूचर्या देवताः स्मृताः ।
इति ज्ञात्वा त्रयेऽमुष्मिन् यत्नवान् कौलिको भवेत् ॥ ( २९।१४-१६ )

इति हि कुलयागरहस्यम् । द्रव्याणि चात्र रत्नपञ्चकादीन्यभिप्रेतानि ।

देहस्थं च चरुं वक्ष्ये यत्सुरैरपि दुर्लभम् ।
शिवाम्बु रेतो रक्तं च नालाज्यं विश्वनिर्गमः ॥
( त० वि० २९।२०० )

इत्यत्र रत्नपञ्चकम् ।

रेतो हराम्बु पुष्पं च क्षारं नासाज्यकं तथा ।
पौरुषं क्ष्माभवं छागं मीनजं शाकुनीयकम् ॥
पलाण्डुं लशुनं चैव द्रव्यद्वादशकं शुभम् ।

इत्यत्र च द्रव्यद्वादशकं वर्ण्यते । "नन्दहेतुफलैर्द्रव्यैरर्घ्यपात्रं प्रपूरयेत्" ( २९।२२ )

इत्येवं चात्रार्घ्यपात्रं पूर्यते । पात्रपूरणप्रकारश्च—

चरुकः सम्प्रदायश्च विज्ञानं मेलकं तथा ।
पूजाक्रमविधानं च योगिनीनां मुखे स्थितम् ॥

इति तत्रैव जयरथोद्धृतवचनानुसारेण गुरुमुखादेव बोद्धव्यः ।

उक्तं श्रीयोगसंचारे ब्रह्मचर्ये स्थितिं भजेत् ।
आनन्दो ब्रह्म परमं तच्च देहे त्रिधा स्थितम् ॥
उपकारि द्वयं तत्र फलमन्यत् तदात्मकम् ।
ओष्ठ्यान्त्यत्रितयासेवी ब्रह्मचारी स उच्यते ॥ इति,
( २९।९७-९८ )

नो शान्तं नाप्युदितं शान्तोदितसूतिकारणं परं कौलम् । (२९।११७)

इति च कुलयागेतिकर्तव्यता परिसमाप्यते ।

कुलयागोऽयमादियाग इत्युच्यते। तद्यथा—

आदीयते यतः सारं तस्य मुख्यस्य चैष यत्।
मुख्यश्च यागस्तेनायमादियाग इति स्मृतः॥ ( २९।१६४ ) इति।

अयं च यागः—

श्रीवीरावलिहार्देशखमतार्णववर्तिषु।
श्रीसिद्धोल्फुल्लमर्यादाहीनचर्याकुलादिषु॥ ( २९।१६५-१६६ ) वर्णितः।

कौलिकं शास्त्रं विद्यामन्त्रमुद्रामण्डलात्मना चतुष्पीठं भवतीति तदप्यत्र सूच्यते ( पृ० ११४ )। अत्रैव मण्डल-शिवहस्त-करस्तोभ-कारणषट्क-कारणाष्टक-सप्तविधजप-दीक्षाभिषेकादयो विषया वर्णिताः। दशमाह्निके वर्णितं पिण्डस्थाद्यवस्थापञ्चकं चात्र स्मारितम्, अष्टकपदाभिप्रायश्च स्फोरितः। सर्वोऽयं विषयस्तत्र तद्विवेके च त्रिशिरोमत-ब्रह्मयामलक्रमरहस्य-कुलक्रीडावतार-देवीपञ्चशतिका-कालीकुल-कुलरत्नमाला-माधवकुल-देवीयामल-कुलक्रमोदय–योगसंचार–तन्त्रराजभट्टारक–सर्वाचारहृदय–तत्त्वरक्षाविधान–गमशास्त्र - वीरावली-निर्मर्यादशास्त्र-हृदयभट्टारक- खेचरीमत-योन्यर्णव - उत्फुल्लकमत-श्रीपञ्चाशिकाभोगहस्तक-पूर्वशास्त्र-आनन्देश्वर-तन्त्रसद्भाव-कुलगुह्वर-दीक्षोत्तरप्रामाण्येन वर्णितः।

"केवलो यामलो मिश्रश्चक्रयुग् वीरसंकरः" ( तन्त्रा० २८।७९ ) इत्येवं पञ्चधा भेदितो मूर्तियागोऽपि कुलयाग एव। स च—

केवलः केवलैरेव गुरुभिर्मिश्रितः पुनः॥
साधकाद्यैः सपत्नीकैर्यामलः स द्विधा पुनः।
पत्नीयोगात् क्रयानीतवेश्यासंयोगतोऽथवा॥
चक्रिण्याद्याश्च वक्ष्यन्ते शक्तियोगाद् यथोचिताः।
तत्संयोगाच्चक्रयुक्तो यागः सर्वफलप्रदः॥
सर्वैस्तु सहितो यागो वीरसंकर उच्यते।
( तन्त्रा० २८।७९-८२ )

इत्येवं तत्रैव व्याख्यायते। तदस्मिन् कुलयागे सर्वेषां प्रवेशो निषिद्धः। यदि कश्चन प्रविष्टस्तदा तस्य विचारो न विधेय इति पिचुशास्त्रे—"आदौ यत्नेन रक्षयेत्। प्रवेशम्, संप्रविष्टस्य न विचारं तु कारयेत्" इत्येवमुपदिश्यते। "प्रविष्टेऽन्तः सीधुरसे", "स्त्रियः सर्वेषु वर्णेषु" इति क्रमोदयवचनयोः, "मेयराशिमयं हव्यम्" इति श्रीपराक्रमवचने च कुलयाग एव वर्ण्यते।

अशेषतन्त्रसारं तु वामदक्षिणमाश्रितम् ।
एकत्र मिलितं कौलं श्रीषडर्धकशासने ॥
सिद्धान्ते कर्म बहुलं मलमायादिरूषितम् ।
दक्षिणं रौद्रकर्माढ्यं वामं सिद्धिसमाकुलम् ॥

इति (कुल)रत्नमालावचने च कौलमतस्य मतान्तरपेक्षया वैशिष्ट्यं प्रदर्श्यते ।

**बौद्धतन्त्रवर्णिता त्रिविधा पूजा—**

बौद्धतन्त्रेष्वपि बाह्या, आध्यात्मिकी ( मनोमयी ), गुह्यपूजेति च पूजायाः प्रकारत्रयमवलोक्यते । अत्र बाह्याऽपरा, आध्यात्मिकी परा, गुह्यपूजा च परापरेति वक्तुं शक्यते । आत्मदेवताया यजनायैव हि सा समाचर्यते । अत्र सप्तविधाया एकादशप्रकाराया वाऽनुत्तरपूजायाः, चतुर्ब्रह्मविहारभावनायाश्च वर्तत आन्तरपरिशुद्धिः फलम् । इमानि भवन्त्यस्या अनुत्तरपूजाया अङ्गानि—पापदेशना, पुण्यानुमोदना, त्रिशरणगमनम्, मार्गाश्रयणम्, अध्येषणा, पुण्यपरिणामना, आत्मभावनिर्यातनं चेति । तत्रेमानि मन्त्रपदानि भवन्ति—

कायेन वाचा मनसा कृतं यत्पापं जिनानां पुरतो दिशामि ।
लोकत्रयाणां कुशलं तु सर्वं नित्यं प्रमोदादनुमोदयामि ॥
रत्नत्रयं यामि सदाहमत्र मार्गं जिनोक्तं शरणं श्रये च ।
सत्त्वार्थमत्रापि भवन्तु बुद्धाः सुताश्च तेषां सततं भवस्य ॥

तिष्ठन्तु यावत् स्थितिरेव तावन्निर्वान्तु मा ते पितरः प्रजानाम् ।
संदेशनां ते ननु तादृशीं वा धर्मस्य कुर्वन्तु महाप्रभावाः ॥
संसारसिन्धोः सहसापि सत्त्वाः पारं यथा यान्ति सुखं प्रभूतम् ।
पुण्यं प्रभूतं यदिहापि सर्वं संबोधये तत्परिणामयामि ॥

जिनेभ्यस्तत्सुतेभ्यश्च गुरुभ्यो जगतामहम् ।
आत्मानं सर्वभावेन निर्यातयामि सर्वदा ॥

अयं च भवति सप्तविधानुत्तरपूजाप्रतिपादकः श्लोकः—

सर्वं पापमहं दिशामि परमं प्रीत्यानुमोदे शुभान्
आजन्मस्थितयेऽर्थये भगवतः सद्धर्मरत्नस्य च ।
रत्नानां त्रयमभ्युपैमि शरणं बोधौ दधे मानसं
तन्मार्गं च समाश्रये शुभविधीन् संबोधये नामये ॥

इतोऽतिरिक्तमपि (पाप)अकरणसंवर-याचना-बोधिचित्तोत्पाद-चतुर्ब्रह्मविहारभावना-आशयविशुद्धि-अहङ्कारममकारस्त्यागानामप्युपदेशो विधीयते। तत्र पापदेशनापुण्यानुमोदनयोरकरणसंवरस्य, याचनाया अध्येषणायाम्, आशयविशुद्धेर्बोधिचित्तोत्पादस्य अहङ्कारममकारत्यागस्य च सप्तविधानुत्तरपूजाफले समावेशो विधातुं शक्यते। चतुर्ब्रह्मविहारभावनायास्त्व परिगणना एकादशविधानुत्तरपूजायां विधेया।

साधनमालायामेकादशविधानुत्तरपूजाया उल्लेखे सत्यपि तन्नामानि क्वापि नोपलभ्यन्ते, चतुर्ब्रह्मविहारभावनायाश्च विस्तरेण प्रतिपादनं तत्र दृश्यत इति पूर्वोक्तायां सप्तविधानुत्तरपूजायां चतुर्ब्रह्मविहारभावनां संमेल्य सा सम्पाद्यत इति वयं संभावयामः। सेयं चतुर्ब्रह्मविहारभावना मैत्री-करुणा-मुदिता-उपेक्षात्मिका—"मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम्" (१।३३) इति पातञ्जले योगसूत्रे, "मैत्रीप्रमोदकारुण्यमाध्यस्थ्यानि च सत्त्वगुणाधिकक्लिश्यमानाऽविनेयेषु" (७।११) इति च जैनाचार्येणोमास्वामिना संदृब्धे तत्त्वसूत्रे वर्ण्यंत इति वर्तते सम्प्रदायातीतं महत्त्वं चित्तविशोधनेऽस्याश्चतुर्ब्रह्मविहारभावनायाः।

चतुर्ब्रह्मविहारभावनानन्तरं शुद्धान्तःकरणो योगी सर्वधर्मप्रकृतिपरिशुद्धतां भावयति। तथाहि—सर्वे एवामी धर्माः प्रकृत्या स्वरूपेण परिशुद्धाः, अहमपि प्रकृतिपरिशुद्ध इति भवति प्रकृतिपरिशुद्धतायाः स्वरूपम्। इमामेव सर्वधर्मप्रकृतिपरिशुद्धताम्—"ॐ स्वभावशुद्धाः सर्वे धर्माः स्वभावशुद्धोऽहम्" इति मन्त्रभावनया दृढीकरोति। सर्वधर्मप्रकृतिपरिशुद्धतामामुखीकृत्य योगी सर्वधर्मशून्यतां ध्यायात्। तत्रेयं शून्यता—मनोमात्रमेवेदं तेन तेनाकारेण प्रकाशात्मकं प्रतिभासते। यथा स्वप्ने नास्ति मनसो बाह्यं मनोग्राह्यम्। ग्राह्याभावाद् ग्राहकमपि मनो नास्ति। मताश्च मनःस्वरूपाः सर्वे धर्माः। एवं चात्राद्वैतप्रकाशमात्रात्मकं सचराचरं जगदिति चिन्त्यते। इमामेव शून्यताम्—"ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहम्" इत्यमुना मन्त्रेणाधिगच्छति साधकः।

**योगिनीहृदयप्रतिपादिता परा पूजा—**

प्रकाशविमर्शात्मकं सचराचरं जगदिति सिद्धान्तं च प्रत्यभिज्ञादर्शनानुयायिनोऽप्यङ्गीकुर्वते। प्रकाशविमर्शयोश्च चन्द्रचन्द्रिकयोरिवाभेद इति सत्यमद्वैतप्रकाशमात्रात्मकमेव सर्वम्। अत्र पूज्यपूजकयोः पूजाद्रव्याणां चाभावात् प्रकाशात्मकमिदं तत्त्वं भावोपहारैरेव पूज्यते। इयमेव परा पूजा। निस्त्रैगुण्ये पथि विचरद्भिरेषा सम्पाद्यते। योगिनीहृदये तस्याः स्वरूपमेवमुपवर्ण्यते—

महापद्मवनान्तस्थे वाग्भवे गुरुपादुकाम् ।
आप्यायितजगद्रूपां परमामृतवर्षिणीम् ॥
संचिन्त्य परमाद्वैतभावनामदघूर्णितः ।
दहरान्तरसंसर्पन्नादालोकनतत्परः ॥
विकल्परूपसंजल्पविमुखोऽन्तर्मुखः सदा ।
चित्कलोल्लासदलितसंकोचस्त्वतिसुन्दरः ॥ इति ।

"इन्द्रियप्रीणनद्रव्यैर्विहितस्वात्मपूजनः" इति तु परापरायाः स्वरूपमवगन्तव्यम्, अत्र बाह्यद्रव्याणामुपादानात् । अनन्तवासनामलिनितं हि चेतो विपथं धावति । विकल्पशोधनमन्तरा तस्य शुद्धिर्दुःशकेति वामकुलक्रमत्रिकादिषु वज्रयानतन्त्रेषु च स्वात्मदेवताप्रीणनप्रवणा अपूर्वा काचन पूजापद्धतिराविष्कृता, या हि सममेव पतनाय च समुन्नतये च प्रभवति । इन्द्रियप्रीणनमुखेन भावान् शोधयन्ती सा कल्याणाय कल्पते, विषयानुरागं वर्धयन्ती च पापाय । यदाह योगभाष्यकारः—"चित्तनदी नामोभयतो वाहिनी । वहति कल्याणाय वहति पापाय च" ( १।१२ ) इति । अतः शाक्तोपायपद्धत्या परिशोधितानि शुद्धविकल्पात्मकानि तत्त्वान्येवात्रोपादेयानीति शम् ॥



# आगमकारो महाकविः कालिदासः, तदुपाधिधारी कश्चिदन्यो वा

डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
निदेशकः, अनुसन्धानसंस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी

❀❀❀

'शृङ्गारे ललितोद्गारे कालिदासत्रयी किमु' इति पद्यं स्मरन्तो दोषज्ञा विदन्त्येव व्यासवत् कालिदासभूयस्त्वम्। एकादशतोऽधिकानां कालिदासानामुल्लेखो दृश्यते संस्कृतवाङ्मये। कल्याणस्तवस्य, चर्चास्तवस्य, मकरन्दस्तवस्य च कर्ता कालिदास एकः। धातुप्रबोधस्य कर्ता कालिदासचक्रवर्ती। संक्षेपशङ्करजयस्य प्रणेता माधवाख्यो विद्वान् अभिनवकालिदासपदवीं भेजे। अभिनवभारतचम्प्वा भागवतचम्प्वाश्च निबन्द्धुः कवेर्नामधेयमप्यभिनवकालिदास आसीत्। शृङ्गारकोशभाणस्य रचयिता काश्यपाभिनवकालिदासतयाऽऽख्यायते स्म। क्षेमेन्द्रविभाविते सुवृत्ततिलके, औचित्यविचाराख्ये च च ग्रन्थे रघुवंश-कुमारसम्भव-मेघदूताभिज्ञानशाकुन्तल-विक्रमोर्वशीय-मालविकाग्निमित्रे-त्यतिरिक्तस्य कुन्तेश्वरदौत्यस्य महाकविकालिदासकर्तृकत्वमुल्लिख्यते। दुर्घटकाव्यम्, नलोदयः, पुष्पभाणविलासः, राक्षसकाव्यम्, रामसेतुः सेतुबन्धो वा, लघुस्तवः, विद्वद्विनोदकाव्यम्, वृन्दावनकाव्यम्, शृङ्गारतिलकम्, शृङ्गारसार इत्यादयो ग्रन्था अपि केनचित् कालिदासेन संदृब्धाः श्रूयन्ते।

अलङ्कारच्छन्दः कोशज्योतिषायुर्वेदकर्मकाण्डादिविषयकाणां बहूनां ग्रन्थानां रचयिता कालिदासः प्रसिध्यति। अलङ्कारे—कविरहस्यम्, काव्यप्रकाशार्थनिर्णयश्चेति, छन्दसि—वृत्तरत्नावली, श्रुतबोधश्चेति, कोशे—प्रयुक्तमञ्जरी, एकाक्षरमाला, नानार्थशब्दरत्नं चेति, ज्योतिषे—उत्तरकालामृतम्, कटपाया, जातकचन्द्रिका, ज्योतिर्विदाभरणम्, स्वरशास्त्रसारः, रहस्यबोधः, नारदसिद्धान्तव्याख्या चेति, आयुर्वेदे—धाराकल्पः, रससारसञ्चयः, वैद्यमनोरमा चेति ग्रन्थाः प्रथन्ते। कर्मकाण्डे कुण्डप्रबन्धाख्यो ग्रन्थो बलभद्रात्मजेन कालिदासेन प्राणायि।

बहूनि शाक्ततन्त्रस्तोत्राणि कालिदासनाम्ना प्रथितानि चकासति—अम्बास्तवः, कालीस्तवः, चण्डिकादण्डकस्तोत्रम्, नवरत्नमामा, श्यामलादण्डकम्, त्रिपुरसुन्दरी-स्तुतिकाव्यम्, कल्याणस्तवः, मकरन्दस्तवः, चर्चास्तवश्चेति। आगमशास्त्रे चिद्गगन-चन्द्रिकाख्यस्य प्रसिद्धस्य ग्रन्थस्यापि रचयिता महाकविः कालिदास एवेति समामनन्ति केचन सूरयः। तत्र कारणत्रयम्—काल्या दासः कालिदास इति नाम्ना तस्य शाक्तत्वा-भ्यूहनम्, चिद्गगनचन्द्रिकाया रघुवंशादीनां च पद्येषु मिथः सादृश्यम्, चन्द्रिकाया द्वित्रेषु पद्येषु प्रणेत्रा स्वयमेवाऽऽत्मनो नामधेयं कालिदासेति व्याहृतमिति। चिद्गगन-चन्द्रिकाया रचयिता सकलागमाचार्यचक्रवर्ती महाकविः कालिदास एवेति कालि-कातास्थितयाऽऽगमानुसन्धानसमित्या १९३७ तमे ख्रीस्ताब्दे प्रकाशितायास्तस्याः सम्पादकेन स्वामित्रिविक्रमतीर्थेन बाढं समसाधि। तत्र पुष्पिकायामुपोद्घाते चैषा चन्द्रिका महाकविकालिदासविरचितेति समास्थितं तच्छ्लोकगतकालिदासशब्दस्यानेकधा प्रयोगात्, केषाञ्चिच्छ्लोकानां रघुवंशकुमारसम्भवकाव्ययोः, अभिज्ञानशाकुन्तलमालवि-काग्निमित्रयोश्च नाटकयोः श्लोकसाम्यं बिभ्राणानां च दर्शनात्। एवं खलु तत्र चिद्गगनचन्द्रिकायाः कर्तुर्महाकविकालिदासाभिन्नत्वं समाश्रतम्।

महाकविकालिदासस्य रचनासादृश्यमिह चिद्गगनचन्द्रिकायां नूनं संलक्ष्यते। निदर्शनार्थं द्वित्राण्युदाहरणानि प्रस्तूयन्ते यथा—

| रघुवंशे | चन्द्रिकायाम् |
|---|---|
| राजा प्रकृतिरञ्जनात् (४,१२) | राजनात् प्रकृतिरञ्जनाच्च माम् (२,६५) |
| जगतः पितरौ वन्दे (१,१) | तौ षडध्वपितरौ श्रये शिवौ (१,६) |
| **मालविकाग्निमित्रे** | |
| सन्मार्गालोकनाय व्यपनयतु<br>स वस्तामसीं वृत्तिमीशः (१) | सन्मार्गालोकनाय व्यपनयतु<br>स वस्तामसीं वृत्तिमीशः (२) |

काव्यतुलनया यद्यप्युभयोरनन्यत्वं प्रतीयते, तथापि द्वयोः पार्थक्याय समासाद्यते प्रभूतं गमकम्। 'कालिदासपदवीं तवाश्रितः' (३०६) इत्यत्र पद्ये चिद्गगनचन्द्रिका-कारेण कालिदासेति पदवी निरूपिता, न तु नामधेयम्। अन्तिमे पद्ये प्रणेत्रा जगृहे स्वकीयं नामधेयम्—

पूर्णपीठकृतं सिद्धेस्तद्भावस्तवमादरात्।
वा नरार्थं महागुह्यं श्रीवत्सो विदधे स तु॥ इति।

श्रीवत्स इत्येव चन्द्रिकाकारस्य मुख्यं नामधेयं विज्ञायते[1]। एवं तावद् भिन्नोऽयं कालिदासपदवीधारी श्रीवत्सः कविकुलगुरोर्महाकविकालिदासात्। 'वीक्ष्य कालि! महिमानुवर्ण्यते, त्वन्मुदे तदपि दासजल्पितम्' (२७२) इत्यत्र चिद्गगनचन्द्रिकायां द्वितीयचरणगतस्य संबोधनपदस्य 'कालि!' इत्यस्य चतुर्थचरणगतेन 'दासजल्पितम्' इत्यनेन सह संयोजनात् 'कालिदासजल्पितम्' इत्यादि। चिद्गगनचन्द्रिकायां कालीमहिमा प्रामुख्यतो वर्णितः। अस्य वर्णनेन वर्णयितुरुपनामधेयं स्वत एव कालिदास इति भजते।

महाकविकालिदासेन श्रीगणेशो न क्वापि मङ्गलाचरणे स्मृतः। चिद्गगनचन्द्रिकाया मङ्गलाचरणे तु स स्मर्यते। 'ये मनः प्रणिदधुर्महर्षयस्तान् पतञ्जलिमुखानुपास्महे' (९) इत्यत्र चन्द्रिकायां पतञ्जलिर्महर्षिपदेन समाख्यात उपास्यतया। महाकविकालिदासात् पूर्वं शतद्वयवर्षेषु शतचतुष्टयवर्षेषु वा समवस्थितस्य भगवतः पतञ्जलिमुनेर्महर्षिषु मुख्यत्वेन निरूपणं महाकविकालिदासकृतं न सम्भाव्यते। अक्षरमालिकास्तोत्रम्, क्रमस्तोत्रपञ्जिका, कर्पूरस्तोत्रम्, ज्वालामुखीस्तोत्रम्, देवीपञ्चस्तवः, देव्यष्टकम्, देव्यारात्रिका, मङ्गलाष्टकम्, मातृकापुष्पमालास्तवः, मीननयनाष्टकम्, लक्ष्मीस्तवः, शारदास्तोत्रम्, नवरत्नमाला, श्यामलादण्डकम्, सरस्वतीसाधनम्, सरस्वतीस्तोत्रमित्यादीनि कालिदासकृतानि प्रसिध्यन्ति शाक्तस्तोत्राणि। एषु नवरत्नमालायाः श्यामलादण्डकस्य च द्वौ कर्तारौ स्मर्यते कालिदासः शङ्कराचार्यश्चेति। गङ्गाष्टकं शङ्कराचार्यस्य प्रसिद्धम्। कालिदासविरचितमपि गङ्गाष्टकं समुपलभ्यते।

चिद्गगनचन्द्रिका प्रकाशितचिद्गगनचन्द्रिकापुस्तकस्य पुष्पिकायाम् 'इति श्रीकालिदासमहाकविविरचिता चिद्गगनचन्द्रिका सम्पूर्णा' इति महाकविकालिदासविभाविता समुद्घोष्यते। सम्पादकेन परतो महाकविशब्दः पुष्पिकायां योजितः प्रतीयते। 'इह कालिदासचन्द्रप्रसूतिरानन्दिनी स्तुतिर्व्याजात् (३), 'वीक्ष्य कालि! महिमानुवर्ण्यते, ......त्वन्मुदे तदपि दासजल्पितम्' (२७२), '**सिद्धनाथकृततत्वत्क्रमस्तुतेः** कालिदासरचितां च पञ्चिकाम्' (३०५), 'कालीदासपदवीं तवाश्रितः, त्वत्प्रसादकृतवाग्विजृम्भणः' (३०६) इति पद्येषु चिद्गगनचन्द्रिकायाः प्रणेतुर्विषये कश्चन संकेतो विभाव्यते।

---

१. स कालिदासेति पदवीकः ३०६ पद्ये 'कालिदासपदवीं तवाश्रितः' इत्यत्र स्पष्टमुल्लेखात्। स एव पूर्वचर्चितः श्रीवत्सः। एतदेवास्य कवेर्मुख्यं नामधेयं प्रतीयते। गोत्रावल्यां कुत्राप्युपलब्धप्रतिपु श्रीवत्स इति गोत्रनाम न प्रसिद्धम् ( क्रमप्रकाशिका )।

भुवनेश्वरीमहास्तोत्ररचयितुः पृथ्वीधराचार्यस्य गुरुरासीत् **सिद्धनाथ** इति तत्प्रणीतलघुसप्तशतीस्तोत्रेण विज्ञायते[1]—

श्रीसिद्धिनाथापरनामधेयः श्रीशम्भुनाथो भुवनैकनाथः।
तस्य प्रसादात् सकलागमाच्च पृथ्वीधरः स्तोत्रमिदं चकार ॥ इति।

शम्भुनाथापरनामधेयः श्रीसिद्धनाथः सिद्धिनाथोऽपि समाख्यायते स्म। यथा—

श्रीशम्भुनाथ! करुणाकर! सिद्धिनाथ!
श्रीसिद्धनाथ! करुणाकर शम्भुनाथ!
सर्वापराधमलिनेऽपि मयि प्रसन्नं
चेतः कुरुष्व शरणं मम नान्यदस्ति[2] ॥ इति।

सिद्धनाथापरपर्यायस्य शम्भुनाथस्य प्रसादात् पृथ्वीधराचार्येण वाक्सिद्धिपूर्वकं सर्वा विद्याः समधिगता आसन्—

वाक्सिद्धिमेवमतुलामवलोक्य नाथः
श्रीशम्भुरस्य महतीमपि तां प्रतिष्ठाम्।
स्वस्मिन् पदे त्रिभुवनागमवन्द्यविद्या-
सिंहासनैकरुचिरे सुचिरं चकार[3] ॥
विद्याः सर्वाः सपदि वदने शम्भुनाथप्रसादात्[4] ॥ इति।

तन्त्रशास्त्रस्य प्रमाणभूताचार्याणां श्रीमतामभिनवगुप्तपादाचार्याणां गुरुपरम्परायां स्मर्यते शम्भुनाथोऽयम्—

श्रीशम्भुनाथभास्करचरणनिपातप्रभापगतसंकोचम्।
अभिनवगुप्तहृदम्बुजमेतद् विचिनुत महेशपूजनहेतोः[5] ॥ इति।

दक्षिणभूमिपीठवसतेर्भैरवस्य शिष्यः श्रीशम्भुनाथो जालन्धरात् पीठात् प्रसिद्धिमुपेतः—

कश्चिद् दक्षिणभूमिपीठवसतिः श्रीमान् विभुर्भैरवः
पञ्चस्रोतसि सातिमार्गविभवे शास्त्रे विधाता च यः।
लोकेऽभूत् सुमतिस्ततः समुदभूत् तस्यैव शिष्याग्रणीः
श्रीमाञ्छम्भुरिति प्रसिद्धिमगमज्जालन्धरात् पीठतः ॥ इति।

---

१. लघुसप्तशती (१७); २ भुवनेश्वरीस्तोत्रम् (४०)।
३. भुवनेश्वरीस्तोत्रे, ४२ तमं पद्यम्; ४. भुवनेश्वरीस्तोत्रे, ४४ तमं पद्यम्।
५. तन्त्रसारस्य प्रथमाह्निके तृतीयं पद्यम्।

एवं तावज्जालन्धरपीठस्थितस्य दक्षिणभूमिपीठवसतिभैरवशिष्यस्य शम्भुनाथस्य परम्पराया अनुगत आसीत् कालिदासोपाधिधारी श्रीवत्सो नाम कविरागमाचार्यः।

अभिनवगुप्तपादाचार्याणां स्थितिकालो दशमख्रीस्तशताब्द्या उत्तरार्द्धं निश्चीयते। श्रीशम्भुनाथस्तस्य साक्षाद् गुरुरासीत्। पृथ्वीधराचार्यस्तु भगवत्पादश्रीशङ्कराचार्यस्य शिष्यस्तन्त्रमन्त्रविद्याप्रवीणः सकलशास्त्रवित्प्रकाण्डश्चाभूत्। 'रायल एशियाटिक सोसाइटी' इत्याख्यायाः संस्थाया मुम्बापुरीशाखायाः सूचीपत्रे ८५१ संख्याङ्कितस्य 'बालार्चनविधिः' इत्याख्यस्य पुस्तकस्य विवरणे शृङ्गेरीमठगुरुपरम्परायां पृथ्वीधराचार्यः श्रीशङ्कराचार्यानन्तरं पठितः, ततो ब्रह्मचैतन्य आनन्दचैतन्यश्च। अतोऽयं पृथ्वीधराचार्यः खल्वष्टमख्रीस्तशताब्द्यामवस्थितस्य भगवत्पादश्रीशङ्कराचार्यस्य साक्षाच्छिष्यस्तत्समानकालिक इति ध्रुवं शक्यते वक्तुम्। तेन स्वगुरुपरिचय इत्थं वर्णितः—

श्रीसिद्धिनाथ इति कोऽपि युगे चतुर्थे
प्रादुर्बभूव करुणावरुणालये ऽस्मिन्।
श्रीशम्भुरित्यभिधया स मयि प्रसन्नं
चेतश्चकार सकलागमचक्रवर्ती[1] ॥ इति।

पद्यमिदं व्याचक्षाणो भाष्यकारः पद्मनाभ आह—'करुणया युक्ते वरुणालये = ग्रामविशेषे नर्मदातटनिकटवर्तिनि' इति। भगवत्पादशङ्कराचार्यस्य जन्मस्थानं तु 'कालटी' इत्यत्र सुनिश्चितम्। एवं तावद् यद्यपि सकलागमचक्रवर्ती सिद्धिनाथापराह्वः श्रीशम्भुनाथो नूनं भिन्नो भगवत्पादशङ्कराचार्यात्, तथापि शम्भुपर्यायतयाऽयमपि शङ्कराचार्याख्ययाऽऽख्यायते स्मेति प्रतीयते। तस्यैवास्य शिष्यः श्रीपृथ्वीधराचार्यः, मन्ये परतः शृङ्गेरीमठे दीक्षितो भूत्वा भगवत्पादशङ्कराचार्यशिष्यतामग्रहीत्। दक्षिणभूमिपीठवसतेर्भैरवस्य शिष्याग्रणीः सकलागमचक्रवर्ती श्रीशम्भुनाथो जालन्धरपीठात् प्रसिद्धिमाससाद। अस्यैव परम्परायां श्रीमदभिनवगुप्तपादाचार्य आत्मानं दीक्षितं मनुते।

इत्थं तावदागमाचार्यः श्रीशङ्कराचार्यो वैदिकाद् भगवत्पादशङ्कराचार्यात् पार्थक्यं भजते। तादृशानि तन्त्रागमपराणि स्तोत्राणि दीर्घजीविनमागमाचार्यं शङ्करापरनामधेयं श्रीशम्भुनाथमभिसम्बध्नन्ति। श्रीपृथ्वीधराचार्येण पूर्वगुरुपरम्पराया भुवनेश्वर्यादिसपर्या परपरम्परायामपि समावेशिता। भगवत्पादशङ्कराचार्योदयकाले श्रीशम्भुनाथो दशमीं गतो जीवति स्मेति सिध्यति पृथ्वीधराचार्यवृत्तेन।

श्रीशम्भुनाथपरम्परायां दीक्षितः कालिदासाख्यः श्रीवत्सः श्रीमदभिनवगुप्त-

---

१. भुवनेश्वरीस्तोत्रे, ३७ तमं पद्यम्।

पादात् पूर्वं नासीदिति तन्त्रालोकतन्त्रसारादिग्रन्थेषु तदनुल्लेखादवसीयते। इत्थं खलु दशमशताब्द्याः परतः श्रीवत्सः 'कालिदासः' बभूवेति निर्धारणं युक्तिसंगतं भाति।

श्रीवत्सविरचिता चिद्गगनचन्द्रिका दीपिकाख्यायां योगिनीहृदयटीकायां सादरं समुद्धृता। टीकाकारस्यामृतानन्दयोगिनः स्थितिकालश्चतुर्दशख्रीस्तशताब्द्या अन्तिमो भागो निर्धार्यते। इतोऽपि पूर्वं महार्थमञ्जर्या रचयित्रा गोरक्षनाथापरनामधेयेन श्रीमहेश्वरानन्देन चिद्गगनचन्द्रिकाया बहवः श्लोकाः प्रमाणतया समुपन्यस्ताः। श्रीमहेश्वरानन्दस्य स्थितिकालश्चतुर्दशख्रीस्तशताब्द्याः प्रथमो भागोऽङ्गीक्रियते विपश्चिद्भिः। तस्माच्चिद्गगनचन्द्रिकायाः प्रणेतुः कालिदासाख्यस्य श्रीवत्सस्य स्थिति-कालस्त्रयोदशख्रीस्तशताब्द्याः परतो निर्धारयितुं न युज्यते। आभ्यामुभाभ्यां टीका-काराभ्यामुद्धृतेभ्यश्चिद्गगनचन्द्रिकायाः पाठेभ्यः सम्प्रत्युपलब्धचन्द्रिकापाठानां निर्भर-मान्तर्यं दृश्यते। इह महार्थमञ्जर्याष्टीकायामुपलभ्यमानाः पाठभेदा उपन्यस्यन्ते—

| साम्प्रतिकः पाठः | महार्थमञ्जरीधृतः पाठः |
|---|---|
| दृक्क्रियापदम् ( ५ ) | दृक्क्रियात् पदात् |
| सूयते ( ५ ) | सूतये |
| विग्रहद्वितयमप्यतः परम् | विग्रहो द्वितयमप्यतः परम् |
| रौद्रदीधितेः ( १२८ ) | रौद्र्युदेति ते |
| ज्येष्ठयैवमथ ( १२८ ) | ज्येष्ठयेत्थमधि |
| यः परः ( २२३ ) | यत्परः |
| उत्तरं च विषयोत्सवस्तदानन्द ( २२३ ) | उत्तरश्च विषयात् स च त्वदानन्द |
| उल्लसति ( २२३ ) | उल्लससि |
| वारिवह्निमुकुरादिषु स्फुटा ( १९५ ) | वह्निवारिमुकुरादिषु स्फुटम् |

प्रसिद्धस्य 'तौ षडध्वपितरौ श्रये शिवौ' इति पद्यस्य त्रयः पाठभेदा दृश्यन्ताम्—

याऽहमित्युदितवाक् परा च सा
यः प्रकाशलुलितात्मविग्रहः।
यौ मिथः समुदिताविहोन्मुखौ
तौ षडध्वपितरौ श्रये शिवौ ॥ ६ ।

इति सम्प्रत्युपलब्धपाठस्य महार्थमञ्जर्याः स्वोपज्ञटीकायामुद्धृताद् पाठाद् भूयान् भेदो विलोक्यताम्—

याऽहमित्युदितवाक् पराभिधा
य: प्रकाश उदितार्थविग्रह: ।
द्वौ मिथ: समुदिताविहोन्मुखौ
तौ षडध्वपितरौ श्रये शिवौ ॥ ७० तमे पृष्ठे ।

एवमेव—

अस्वरोल्लसनबीजमग्रिमोऽ-
क्षीणतोऽवपुरपाकृतक्रम: ।
नाद एष तव विश्वदैशिक:
कोऽपि संविदि विमर्श ईश्वर: ॥ १४८ ।

इति सम्प्रत्युपलब्धपाठस्य भूयान् भेदो महार्थमञ्जरीधृतपाठादित्थम्—

अस्वरोल्लसनबीजमग्रिमो
च्छूनतावपुरपाकृतक्रम: ।
नाद एष तव विश्वदेशिक:
कोऽपि स स्मृतिविमर्श ईश्वरे ॥ ९६ तमे पृष्ठे ।

सम्प्रति योगिनीहृदयदीपिकाधृतचन्द्रिकापाठै: सह सम्प्रत्युपलभ्यमानचन्द्रिका-पाठानां तौल्यमुपन्यस्यते—

| साम्प्रतिक: पाठ: | योगिनीहृदयदीपिकाधृतपाठ: |
|---|---|
| मध्यगम् ( ३२ ) | मध्यगे |
| चरत्यनिलवत् सुधाम यत् ( ३२ ) | चरत्यनलदृष्टिधाम्नि य: |
| °शिखरे ( ३२ ) | °शिखरम् |
| शिवम् ( ३२ ) | शिव |

इह पाठभेदेन पर्याप्तमर्थभेदो दृश्यत इति विभावितं स्यान्मनीषिभि: । 'चरत्य-निलवत् सुधाम यत्' इत्यस्मिन् पाठे वर्तमानपुस्तकधृतपाठाद् महदन्तरमास्ते । एवमेव—

| | |
|---|---|
| भोग्यभोक्तृमयगा विमर्शगा ( २१२ ) | भोक्तृभोग्यमय-गोविमर्शनाद् |
| चिदुदरे ( २१२ ) | चिदुदधौ |
| आपर्यदनलसोममिश्रण: ( २१२ ) | अर्चयन्ननलसोममिश्रणम् |
| त्वद्विमर्श ( २१२ ) | तद्विमर्श |
| यत्र विश्रमम् ( ७२ ) | विश्रमम्बिके ( ९१ तमे पृ० ) |

| | |
|---|---|
| शुभे ( ४० ) | शुचेः ( १२८ तमे पृ० ) |
| बीजतत्स्वराः ( ४० ) | बीजतः स्वराः ( ,, ) |
| द्युतेः कलाः ( ४० ) | द्यूतेः स्वराः ( ,, ) |
| सदात्मनीश्वरे ( ९१ ) | चिदात्मनीश्वरे |

'गोविमर्शनात्' इत्यस्मिन् दीपिकागते पाठेऽपि केषुचित् पुस्तकेषु 'गोविसर्गयोः' इति पाठान्तरं विलोक्यते ।

कस्यचिदपि ग्रन्थस्य पुष्कलपाठभेदास्तस्य प्रचारभूयिष्ठतामभिव्यञ्जन्ति । आगमतन्त्रग्रन्थानामुपदेशप्राधान्यादपि समजनि पाठभेदप्राचुर्यम् । ये पाठभेदा महार्थमञ्जरीधृतपाठे निरूप्यन्ते, तेषां योगिनीहृदयदीपिकाधृतपाठे सर्वथाऽभावः । एभिर्मिथः सर्वथा भिन्नैः पाठभेदैश्चिद्गगनचन्द्रिकाग्रन्थस्य महार्थमञ्जरी-दीपिकाकाराभ्यां वर्षशतत्रयात्मकं प्राक्तनत्वं निश्चेतुं शक्यये । एवं तावद् दशख्रीस्तशताब्द्या आरभ्य त्रयोदशख्रीस्तशताब्द्या मध्ये सकलनिगमाचार्यः श्रीवत्सो भवितुमर्हति । इत्थं कविकुलगुरुमहाकविकालिदासेन सार्धं तदीयमैक्यमेकान्ततोऽपास्तम् ।



# ईक्षतेर्नाशब्दम्

डॉ० मुरलीधरपाण्डेयः,
पूर्वप्राचार्यः, जम्मूस्थरणवीर-
केन्द्रीयसंस्कृतविद्यापीठस्य
डी० १/६५, ललिताघाट, वाराणसी

❀❀❀

भगवतो बादरायणस्य ब्रह्मसूत्रे प्रायश इयं शैली यत् प्रथमान्तेन पदेन विषयोपन्यासः, पञ्चम्यन्तेन पदेन च हेतूपन्यासपुरःसरं समाधानम्—'अथातो ब्रह्मजिज्ञासा' (ब्र० सू० १।१।१), 'जन्माद्यस्य यतः' (त० २), 'शास्त्रयोनित्वात्' (त० ३), 'तत्तु समन्वयात्' (त० ४), 'आनन्दमयोऽभ्यासात्' (त० १।१।१३) इत्यादिषु सूत्रेषु । किन्तु ब्रह्मसूत्रे प्रारम्भे पञ्चमसूत्रे 'ईक्षतेर्नाशब्दम्' इत्यत्रेयं शैली विपर्यस्ता । अत्र 'ईक्षतेः' इति हेतुपदं प्रथममुपन्यस्तम्, 'अशब्दम्' इति प्रथमान्तपदं तदनन्तरम् । तत्रैवंविधशैलीपरिवर्तने सूत्रकारस्य कोऽभिप्राय इत्येकेन प्रयोजनेन निरूप्यते ।

एतत्सूत्रस्थस्य 'अशब्दम्' इति पदस्य व्याख्याने ब्रह्मसूत्रभाष्यकर्तृणां मतभेदः । श्रीशङ्कराचार्य-श्रीरामानुजाचार्यमते 'अशब्दम्' इति पदस्यायमर्थः—'अशब्दम्' अर्थाद् यस्मिन् शब्द एव श्रुतिरेव प्रमाणं न भवति तद् अशब्दम् । अशब्दम् = आनुमानिकं प्रधानमित्यर्थः[1] ।

श्रीवल्लभाचार्यश्रीमदानन्दबोधश्रीविज्ञानभिक्षुमते न विद्यते शब्दः श्रुतिप्रमाणं यत्रेत्यशब्दं ब्रह्म । इत्थं श्रुतिप्रमाणरहितं ब्रह्म न; किन्तु श्रुतिप्रमाणकं शब्दप्रमाणकं वा ब्रह्मास्त्येव 'ईक्षतेः' इति हेतोः । अत्र नञ्द्वयेन श्रुतिप्रतिपाद्यत्वं द्रढयति । अर्थात् सर्ववेदान्ताद्यप्रतिपाद्यं ब्रह्म न, अपि तु सर्ववेदान्तादिप्रतिपाद्यमेव ब्रह्मेत्यर्थः[2] ।

एवं च श्रीशांकरे श्रीरामानुजीये मते च 'अशब्दम्' इति हेतुगर्भितं विशेषणम् । तस्मादित्थं व्याख्यायते—अशब्दम् = आनुमानिकं प्रधानम् (अश्रौतम्) न शास्त्रयोनिः

---

१. श्रीशाङ्करभाष्ये श्रीभाष्ये च ।

२. अणुभाष्ये, सूत्रार्थमणिमञ्जर्याम् (आनन्दबोधाचार्यप्रणीतभाष्ये म० म० श्रीसुब्बारायकृतायाम्) विज्ञानभाष्ये च ।

अशब्दत्वाद् इत्येकमनुमानम्। शास्त्रं न प्रधानपरम् 'ईक्षतेः' इति द्वितीयमनुमानम्। अत्र 'अशब्दत्वात्' इत्यत्र हेतुः 'ईक्षतेः' इति। अर्थात् 'तदैक्षत' इत्यादिश्रुतिभिरीक्षणाश्रयाविद्यकभेदवदुपहिताभिन्नस्याऽऽत्मन एवेक्षितृत्वं तस्यैव च शास्त्रयोनित्वम्, शास्त्रयोनेरेव जगत्कर्तृत्वादिकम्, जगत्कर्तृकत्वादिविशिष्टस्यैव ब्रह्मत्वमित्यर्थः। तथोपहितभिन्नस्य प्रधानस्य तथात्वं नेति भावः।

एवं च श्रीवल्लभानन्दबोधविज्ञानभिक्षुमते—'आनन्दमयोऽभ्यासात्' इत्यादौ तद्ब्रह्मेतिवद् अनुषञ्जनीयस्य तच्छब्दस्याऽत्रापि 'अशब्दम्' इत्यनेन पदेनान्वयः। तस्माद् तद् ब्रह्म जगत्कारणम् 'अशब्दम्' वेदान्ताद्यप्रतिपाद्यं श्रुत्यप्रतिपाद्यं वा न कुतः ईक्षतेः = 'तदैक्षत', 'तदेवासृजत' इत्यादिश्रुत्यनुरोधात्। अर्थात् 'तदैक्षत', 'तदसृजत' इत्यादिश्रुत्यनुरोधाज्जगत्कारणं ब्रह्म श्रुतिसिद्धमेव। 'ईक्षतेर्नाशब्दम्' इति सूत्रे नञ्द्वयं जगतो जन्मादौ ब्रह्मणः कर्तृत्वादिकं द्रढयति।

एवञ्च सम्प्रदायभेदेन प्रकारद्वये व्याख्याने 'अशब्दम्' इत्यस्य प्रथमान्तपदस्य स्वारस्यं श्रीशङ्करश्रीरामानुजमत एव संघटते, न तु श्रीवल्लभादिमते। यतो हि 'अशब्दम्' इति प्रथमान्तपदस्येदमेव स्वारस्यं यद् 'अशब्दम्' इत्यस्याऽऽवृत्त्या पक्षहेतूभयपरत्वम्। अत एव 'अशब्दम्' इत्यत्र हेतुविभक्तिं विना प्रथमान्तत्वेन निर्देशः। यदि श्रीवल्लभाचार्यप्रभृतीनामभिप्रायः श्रीबादरायणस्याप्यभीष्टो भवेत्, तदा 'सदीक्षतेः' इत्येव लघुतरः सूत्रविन्यासः कृतः स्यात्, न तु 'ईक्षतेर्नाशब्दम्' इति गुरुतरः सूत्रविन्यासः। अर्थश्चायं भवेत् सद् ब्रह्म जगत्कारणं कर्तृ 'ईक्षतेः' 'ऐक्षत' इति श्रुत्यनुरोधात्; किन्तु वस्तुतः 'तत्तु समन्वयात्' (ब्र० सू० १।१।४) इत्यत्र साध्यसमर्पकतयाऽन्वितस्य शास्त्रयोनिपदस्यानुषङ्गेण तत्रान्वयार्थम् 'अशब्दम्' इति प्रथमान्तं पदम्। अस्य चाऽऽवृत्त्या पक्षहेतूभयपरत्वेन व्याख्यानार्थं प्रथमान्तपदोपन्यासे श्रीबादरायणस्य तात्पर्यम्, अत्रैव स्वारस्यं च। अत एव मध्वसम्प्रदायस्य श्रीभगवद्देवाचार्येणापि वेदान्तसिद्धान्तजाह्नव्याम् अयं पक्षः समादृतः। म० म० श्रीमदनन्तकृष्णशास्त्रिभिश्च तत्र तत्रायमर्थं उपपादित इति शम्।



# अभिनिवेशस्य यथार्थं तत्त्वम्

डॉ० बलजिन्नाथपण्डितः,
अनुसन्धाननिदेशकः,
काश्मीरशैवदर्शनबृहत्कोषपरियोजनायाः
श्रीरणवीरसंस्कृतविद्यापीठे,
जम्मूपुरे

❀❀❀

पातञ्जले योगसूत्रे पञ्चसु क्लेशेषु चरमत्वेन परिगणितः क्लेशोऽभिनिवेशः। तत्र चतुर्णां पूर्वेषाम् अविद्यास्मितारागद्वेषाणां लक्षणान्यभिधायास्य लक्षणमेवमुक्तम्— "स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः" इति ( यो० सू० २,९ )।

योगभाष्यकारेणास्य सूत्रस्य व्याख्यां विदधतैवमुक्तम्—"सर्वस्य प्राणिन इयमात्माशीर्नित्या भवति—'मा न भूवम्, भूयासम्' इति। न चाननुभूतमरणधर्मकस्यैषा भवत्याशीः; एतया च पूर्वजन्मानुभवः प्रतीयते। स चायमभिनिवेशः क्लेशः स्वरसवाही क्रिमेरपि जातमात्रस्य प्रत्यक्षानुमानागमैरसम्भावितो मरणत्रास उच्छेददृष्ट्यात्मकः पूर्वजन्मानुभूतं मरणदुःखमनुमापयति। यथा चायमत्यन्तमूढेषु दृश्यते क्लेशस्तथा विदुषोऽपि विज्ञातपूर्वापरान्तस्य रूढः। कस्मात्? समाना हि तयोः कुशलाकुशलयोर्मरणदुःखानुभवादियं वासना।" इति।

व्यासकृतामेतामेव व्याख्यामनुसरन्त्यर्वाचीनाः सर्वेऽपि व्याख्यातारः प्रायशः। न केनापि कदापि विचारितं यत् सूत्रस्थैः पदैः कथमेवंविधा व्याख्या प्रमाणीक्रियत इति। 'तथारूढः' इति पदस्यार्थं प्रति न केनापि व्याख्यात्रा मनागप्यवधानं दत्तम्। एवंविधेषु प्रकरणेषु तथेतिपदं पूर्वोक्तानुसन्धानाभिव्यञ्जकं भवति। तेन 'तथारूढः' इत्यस्य पदसन्दर्भस्यायमर्थः—अविद्यादिक्लेशचतुष्टयं यत् पूर्वमुक्तं तदनुसारेणैव रूढोऽभिनिवेशो भवतीति शेषः।

अभीत्याभिमुख्ये, तत्तद्विषयाद्याभिमुख्ये सति निवेशः—कायवाङ्मनसां यथायथं तद्विषय एव स्थितत्वम्, तद्विषयाभिमुखा कायवाङ्मनसां तथा तथा स्थितिः प्रवृत्तिश्चेति। इत्येवंविधो यः कायवाङ्मनसां विषयाभिमुख्येऽभितः स्थिरतया दृढतया च निवेशः, स एवाभिनिवेशः। तेषां कायवाङ्मनसां तथा तथाभिनिविष्टत्वमेवाभिनिवेशः।

अभिनिवेशपदमत्र लक्षणलक्ष्योभयप्रतिपादकम्, सूत्राणां स्वल्पाक्षरत्वे बह्वर्थबोधकत्व-नियमात् ।

यदीदं सूत्रमेवं न व्याख्यायेत, यदि च योगभाष्यमतमविचार्यैवानुस्रियेत, तदा "तथारूढ." इति पदसन्दर्भस्य निष्प्रयोजनत्वमापद्येत । न च तत् सूत्रे युक्तम् । किञ्च, मरणत्रासो वा जीवनाभिलाषो वा कस्य सौत्रस्य पदस्यार्थं इति नैव स्पष्टीकृतं केनापि टीकाकृता । अपरञ्च, भवन्त्येव केचिज्जीवन्मुक्ता योगिनो ये मरणान्न त्रस्यन्ति । शून्य-वादिनो बौद्धाः स्वात्मोच्छेदाय यतमाना भवन्ति । मुक्तिसंसृतिसमानबुद्धयः सुप्रबुद्धाः सिद्धजना नैव मरणत्रस्ता भवन्ति । ततो नैव सर्वथा सन्तोषावहा भाष्यकारकृतैषा व्याख्या ।

तदयमत्र सूत्रार्थनिष्कर्षः—अविद्यानुसारेणास्मितानुसारेण रागद्वेषानुसारेण च विषयविशेषानभिमुखीभूतान् प्रति यः कायवाङ्मनसामभितः प्ररूढिं गतो निवेशः—कायस्येन्द्रियाणां च तदनुसारिणी प्रवृत्तिः, मनसश्च तदनुसारी दृढतरो विश्वासो वाचश्चापि तदनुरूपा हठबहुला प्रवृत्तिरिति सर्वमपीदमभिनिवेश इति । स च लोक-व्यवहारे मूढस्येव विदुषोऽपि भवत्येव प्रायशः । ततोऽविद्यादिसंस्कारानुसारेण दृढतरेण विश्वासेन ताँस्तानभिमुखीभूतान् विषयान् प्रति या मनसस्तथा तथा सुदृढा स्थितिः, शरीरादेश्च तदनुकूला प्रवृत्तिः स्वरसतः प्रवाहिणी, तत् सर्वमभिनिवेश एव । य आशरीर-पातं संस्कारवशाद् विदुषोऽपि भवति, न केवलं मूढस्यैवेति । यथा हि मूढोऽविद्यादि-चतुष्टयसंस्कारानुसारेण जगद्भावान् प्रत्याभिमुख्ये सति सुदृढं निविष्टो भवति, तथैव विद्वानपि भवत्येव पूर्वसंस्कारवशात् । न चेयमभिनिवेशकृता प्रवृत्तिः स्थितिरपि वा बुद्धि-पूर्वकं कृतस्य सदसद्विवेकस्य साहाय्यमपेक्षते; अपितु स्वरसतयैव तथा तथा प्रकटीभवति । तत एव मूढोऽपि वा विवेकवानपि वा पिपासुः सज्जलपानाय प्रवर्तते, बुभुक्षोद्वेजितः स्वरसतयैवाभ्यवहरणे प्रवृत्तिमान् भवति । शीतातुरोऽग्नेराभिमुख्यं गच्छति, तथातप-पीडितो वृक्षच्छायां सेवते सद्य एव विनानुमानादिकृतकालक्षेपम् । नैवंविधासु प्रवृत्तिषु, तदनुप्राणिकासु वा मानसीषु स्थितिषु बुद्धिपूर्वकं किमपि विमृश्यते तत्कालं ( सूक्ष्मे चिद्विमर्शे प्रचलत्यपि ); विनैव समुचितकालक्षेपं तत्तत्प्रवृत्तिदर्शनात् । ततः स्फुटतयाऽ-विमृश्यैव सद्यः स्वरसतयैव च तथा स्थितिर्भवति मनसः । यथा मूढोऽत्राविवेक्युचिते व्यवहारे प्रवर्तते, तथैव प्रायो विवेकवानपि धूम्रपानाभ्याससंस्कारवते विवेकख्यातिमते योगिनेऽपि तद्विषयकरागसंस्कारवशाद् भोजनान्ते धूम्रवर्तिपानं मनाग् रोचत एव । तद्विषया स्वरसवाहिनी रुचिरेव तं तत्र प्रवर्तयति । स एषोऽस्ति स्वरसवाह्यभिनिवेशो विदुषोऽपि ।

यस्तु मरणत्रासो यश्च जीवनाभिलाषस्तावपि तावदभिनिवेशवशत एव स्वरसवाहिनौ प्राणिनाम्। तेनैव विवेकवानपि जलावर्त्तेन गृहीतः सँस्ततः स्वात्मानं मोचयितुं हस्तपादादिसञ्चालनक्रियया तरणादिकौशलेन च यतत एव। तदेतयोरभिनिवेशरूपत्वे नास्ति कोऽपि संशयः। परमभिनिवेशस्योदाहरणविशेषत्वमेवैतयोर्मरणत्रासजीवनाभिलाषयोर्न पुनरभिनिवेशलक्षणत्वम्, अव्याप्तिदोषोपहतत्वात् तथाविधस्य लक्षणस्य, अन्येषु शतशो विद्यमानेष्वभिनिवेशेष्वव्यापकत्वात्। तत एवं प्रतीयते यद् योगभाष्यकृतोऽप्ययमेवाभिप्रायः स्यादिति। अभिनिवेशोदाहरणविशेषत्वेनैवोल्लेखः कृतः स्यात् तेन। स्फुटं ताभ्यामन्येऽप्यभिनिवेशा दृश्यन्ते भूरिशो यैर्वशीकृताः प्राणिनो बलादिव स्वरसवाहितयैव तत्र तत्राभितो निवेश्यन्ते प्रवर्त्यन्ते चाभिमुखीभूतेषु विषयेषु।

नूनमत एवाभिज्ञानशाकुन्तले दुष्यन्तं प्रति स्वरसतोऽनुरक्तामुपयाता शकुन्तलाऽऽत्मनस्तद्विषयमभिनिवेशमेव सख्योः पुरतः स्वगतेनैव भाषणेनेत्थं प्रकटयति—

"बलवं क्खु मे अहिनिवेसो, दाणिं पि सहसा रदाणं न सक्कणोमि णिवेदिदुं" (बलीयान् खलु मेऽभिनिवेश इदानीमपि सहसा रतयोर्न शक्नोमि निवेदयितुम्) इति। तस्याः सखी तावदेतं वाञ्छनीयं समुचितं चाभिनिवेशं प्रशंसन्ती पुनर्वदति—"सहि, दिट्ठिआ अणुरुओ दे अहिणिवेसो" (सखि, दिष्ट्याऽनुरूपस्तेऽभिनिवेशः) इति। न खल्वत्र शकुन्तलायाः कोऽपि मरणत्रासो न चापि जीवनेच्छाविमर्शपरिस्पन्दः कश्चन; अपि त्वविद्यादिसंस्करोद्दीपिता काचन स्वरसवाहिनी व्यक्तिविशेषसङ्गमोपजनिष्यमाणकामोपभोगसमीहा यामसौ प्रकटयितुमिच्छन्ती सख्योरपि पुरतो लज्जते।

वस्तुतो हि द्विप्रकारकोऽत्र लोकव्यवहारे विद्यतेऽभिनिवेशः। तत्रैको निवार्योऽपरश्चोपादेयः। योगसूत्रकारेण निवार्यस्यैव तस्य निरूपणं कृतमस्ति। तथाविधामेव दृष्टिमनुसरता श्रीभास्कररायेण निवार्यस्यैवाभिनिवेशस्य लक्षणमुक्तं श्रीललितासहस्रनामभाष्ये सौभाग्यभास्कराख्ये—"तदिदमहितमिति ज्ञात्वाप्यज्ञवत्तदपरित्यागोऽभिनिवेशः" इति। ततस्तस्यापि विचारेऽभिनिवेशो न मरणत्रास-जीवनाभिलाषमात्रम्; अपि तु यस्मिन् कस्मिन्नपि हेयेऽपि भावे चित्तस्याभितो निविष्टत्वमिति।

आचार्याभिनवगुप्तपादैरपि तावदविद्यादिचतुष्टयसंस्कारप्रभाविताम्, दृढतरविश्वासोपजुष्टाम्, स्वरसवाहिनीम्, हठबहुलां चित्तस्यावस्थितिं तदनुसारिणीं च कायवागादिप्रवृत्तिमभिनिवेश इति मत्वा तदनुसारेणास्य पदस्य भूरिशः प्रयोगः कृतोऽस्ति। तत्र हेयमभिनिवेशमधिकृत्य तैरुक्तमीश्वरप्रत्यभिज्ञाविवृत्तिविमर्शिन्याम्—

(क)—अनात्मनि देहादावात्माभिमानसंस्कारदृष्ट्या यथा—

१. वेद्यप्रतिबिम्बनवती वा बुद्धिरभिनिविश्यते—'अन्तरहं वेद्मि, दुःख्यहमिति चिन्ताद्यवस्थासु'। इति। ( ई० प्र० वि० वि० खं० २, पृ० २०५ )।

२. तथाविधमेव तु सदहमिति संविद्रूपताभिनिवेशस्थानं सम्पादितमप्रशान्तजड-भावमेव' इति ( तदेव पृ० २०६ )।

३ 'नन्वचिद्रूपत्वादनात्मा यदि शून्यादिस्तदात्मतयाऽसावभिनिविश्यमानश्चिद्रूप एव' इति ( तदेव—पृ० २०६ )

४. 'नन्वनात्मा शून्यादिरात्मतया यावदभिनिविश्यते, तावच्चिद्रूपतयाभिनिविष्टो भवति' इति ( तदेव खं० ३, पृ० २८५ )

५. सुषुप्ते प्रलये वा, अभावसमाधौ च यद् व्योमकल्पमनात्मरूपमिवाभाति, तदनु स्मर्यमाणत्वेन वेद्यं सदहमित्यात्मत्वेन स्वातन्त्र्येणाभिनिवि-श्यते; उच्छ्वसिमि, निःश्वसिमि—इत्यत्र प्राणो वायुकल्पः, बुभुक्षे, पिपासाभीति प्रत्यये मन्युज्वलनादौ च स एव ( प्राण एव ) तेजःसमुप-बृंहितः; अन्तरहं वेद्मि, सुखी, दुःखी, मूढोऽहमित्याद्यवस्थासु स्वच्छसलिलाशय-सदृशी बुद्धिः, कृशः स्थूलो गौरोऽहमित्यादौ शरीरमेव पृथ्वीप्रायम्............... अभिनिविश्यते इति ( तदेव खं० ३ पृ० २८० )।

(ख)—दृढतरदुराग्रहतो वादविवादे यथा—

६. ननु यद्यत्र ( वादे) नाभिनिवेशस्तर्हि किमियता प्रबन्धेन इति।
( तदेव—खं० २, पृ० ४२९ )

७ तदत्र वित्रणकारैर्दुरभिनिवेशवशेन विप्रतारितो जन इति।
( तदेव—खं० ३. पृ० ४०५ )

(ग)—यथा ह्यविद्यादिसंस्कारवशादुपर्युक्तप्रकारः स्वरसवाह्यभिनिवेशो योगप्रतिपक्षभूते लोकव्यवहारे तदनुकूलेषु च विचार-विश्वास-व्याहारादिषु, तथैव हि शुद्धविद्या-संस्कारवशात् कोऽपि स्वरसत एव प्रवर्तमानोऽभिनिवेशो भवति सुप्रबुद्धानां योगिनाम्, येन ते सर्वमपि लोकं शिवरूपतया लौकिकं च स्वं व्यवहारं शिवपूजात्मकतयाऽनु-भवन्ति। तदयं वाञ्छनीय उपादेयश्चाभिनिवेशः। एवंविधं सदभिनिवेशमधि-कृत्योक्तमाचार्याभिनवगुप्तपादैरेव तत्रैव शास्त्रे। तद्यथा—

८. श्रीमत्प्रसादाख्यपदात् प्रभृत्थाक्रिमि यो मातृवर्गस्तदधिष्ठातृ यदहमितिरूपम्, तदेवात्मतया मुक्तोऽभिनिविशत इति। ( तदेव—पृ० ३९४ )।

एवंविधो ह्यभिनिवेशो विश्वात्मकस्वात्मप्रत्यभिज्ञानुसारी, शुद्धविद्योचितो जीवन्मुक्तेषु सुप्रबुद्धेषु सिद्धयोगिजनेषु विजृम्भते, न पुनर्बद्धेषु पशुप्रमातृषु इत्येतद-वधेयमत्र सुधीभिः ।

(घ) पदनिर्वचनदृष्ट्योक्तं तैरेवोपादेयमभिनिवेशमधिकृत्य यथा—

९. तेनैव कर्तृताद्वारेण देशकालधर्माकारानवच्छिन्न-बोधस्वभावत्वमभीति तल्लक्षणीयाभिमुख्येन निविश्यते—अभिनिविश्यते, अभिनिवेशपूर्वकं प्राप्यत इति ( तदेव—पृ० ३३० ) ।

तदित्थमविद्यादिसंस्काराभिमुख्येन यः कायवाङ्मनसानां निवेशो दृढविश्वास-मयो वा, रुच्यात्मको वा, हठतर्कवादमयो वा, परिमितप्रमातुः स्वात्मविमर्शमयो वा, तदनुकूलप्रवृत्तिमयोऽपि वा तथाविधोऽभितः—पूर्णतया तथावस्थानमयो भवत्यभिनि-वेशः । लोकेऽसावविद्याद्यनुसारेणैव रूढो भवति, यो योगमार्गपरिपन्थित्वेन तथैव लक्षितो योगसूत्रकारेण । सोऽयं बद्धस्याज्ञानिनो जीवस्याभिनिवेशो यो हेयत्वेन प्रतिपादितः । ज्ञानिनो जीवन्मुक्तस्य पुनरन्यप्रकारक एवाभिनिवेशो यो वाञ्छनीयः सद्भिः । असौ शुद्धविद्यासंस्कारपरिपाकवशात् प्ररूढो भवति, नाविद्यादिसंस्कारवशात् । तेनाभिनिवेशेन सुप्रबुद्धो योगी विश्वमप्यात्मतयाऽनुभवति साक्षात्, स्वात्मानं च परिपूर्णं परमेश्वरमेव सविश्वासं मनुते, न परिमितं पशुप्रमातारम् इत्येवंभूतो निष्कर्षोऽत्र विषये प्रामाणिको वेदितव्यः सुधीभिर्न पुनर्गतानुगतिकतयाऽनुपपन्नेऽपूर्णे च योगसूत्रव्याख्याने सन्तोषो विधेयः ।

परमस्ति मे विचारो यद् योगभाष्यकारवचनकृतो योऽसावयथार्थापूर्णव्याख्या-संस्कारो विदुषां शेमुषीदर्पणतले सुस्थिरतयाऽङ्कितस्तिष्ठति, तत्रैव दृढतयाभिनिविष्टा भूयांसो विद्वांसोऽपि न मनागप्यवधास्यन्ति तावदभिनवगुप्ताचार्यकृतं व्याख्यानं प्रति, का पुनः कथा भास्कररायकृतस्य लक्षणस्य, महाकविकालिदासकृतस्य च शब्दप्रयोगस्य । एवंविधे संविदानके का स्थितिः स्यान्मादृशजनकृतस्य व्याख्यानस्य । सोऽयं प्रभावः सुप्ररूढस्याभिनिवेशस्यैवेति विरम्यतेऽतिविस्तरात् ।

# ब्रह्मणोऽभिन्ननिमित्तोपादानत्वसिद्धिः

डॉ० पारसनाथद्विवेदी,
उपाचार्यः, शाङ्करवेदान्तविभागस्य,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी

❀❀❀

'अथातो ब्रह्मजिज्ञासा' (ब्र०सू० १।१।१) इति सूत्रेण ब्रह्म जिज्ञासितव्यमित्युक्तम्। 'तद् ब्रह्म तद्विजिज्ञासस्व'(तै०उ० ३।१।१) इत्यादिश्रुतेः। द्वितीयेन च सूत्रेण 'जन्माद्यस्य यतः' (ब्र० १।१।२) इत्यनेन जगज्जन्मादिकारणत्वं तल्लक्षणमुक्तम्। यथोक्तं शाङ्कर-भाष्ये—"अस्य जगतो नामरूपाभ्यां व्याकृतस्यानेककर्तृभोक्तृसंयुक्तस्य प्रतिनियतदेशकाल-निमित्तक्रियाफलाश्रयस्य मनसाऽप्यचिन्त्यरचनारूपस्य जन्मस्थितिभङ्गं यतः सर्वज्ञात् सर्वशक्तेः कारणाद् भवति, तद् ब्रह्मेति" (ब्र० सू० शां० भा० १।१।२) सजातीयविजातीय-व्यावर्त्तकं लक्षणम्। जगत् तदधर्मत्वेन तादात्म्येन वा न ब्रह्म लक्षयति; अपि तु तदुत्पन्नत्वेन। श्रुतिश्चात्र भवति—'यतो वा इमानि भूतानि जायन्ते, यस्मिन् जानानि जीवन्ति, यत् प्रयन्त्यभिसंविशन्ति, तद् विजिज्ञासस्व, तद् ब्रह्म' (तै०उ० ३।१।१) इति।

तत्रेयं जायते जिज्ञासा—निमित्तत्वेनोपादानत्वेन वा ब्रह्म कारणम्, कारणत्व-स्योभयथा दर्शनात्। कार्यप्रकृतिरुपादानं यथा घटस्य मृत्तिका। तदितरत् कारणं निमित्तं यथा तस्यैव दण्डादिः। उपादानादन्यन्निमित्तं भवतीति लोकसिद्धम्। अत एव कार्यी निमित्ततया नाश्रीयत इति शाब्दिकनये प्रसिद्धम्। तस्माद् ब्रह्म निमित्तकारणं चेज्जगत उपादानमन्यत् तद्गुणकं वक्तव्यम्। उपादानं चेत्, निमित्तमन्यत् किञ्चिद् वक्तव्यम्। युक्त्या चोपादानत्वं ब्रह्मणो न सिध्यति। यादृशं कार्यं तादृशं कारणं कल्प-नीयं भवति। कार्यं च जगत् सावयवमचेतनमशुद्धं दृश्यते, अतस्तादृशेनैव कारणेन भवितव्यम्। नहि श्वेतसूत्रैर्लोहितः पट उत्पद्यते, कार्यकारणयोः सारूप्यदर्शनात्। ब्रह्म च नैवं लक्षणं श्रूयते 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जम्' (श्वे० उ० ६।१९) इति श्रुतेः। जगन्निमित्तत्वं तु श्रुतियुक्तिभिर्ब्रह्मण उपपद्यते। 'स ईक्षाञ्चक्रे' (प्रश्न० उ० ६।३) इति श्रुतेरीक्षापूर्वकजगत्कर्तृत्वावगमात्। दृश्यते च लोक ईश्वराणां

राजकैवस्तादीनां निमित्तकारणत्वम्, अतो जगन्निमित्तकारणत्वं ब्रह्मणो न तूपादान-कारणत्वमिति ज्ञायते।

कुतोऽभिन्ननिमित्तोपादानत्वमिति चेत्, उच्यते, यद्यपि लोक एकस्य निमित्तत्वमुपादानत्वं च न प्रायेण दृश्यते। मृदादेरचेतनत्वात् कुलालादेश्च घटाद्याकारेण विचित्रपरिणामशक्तेरभावान्नैकस्य तत्त्वम्, तथापि सर्वज्ञस्य सर्वशक्तिमतः परमेश्वरस्योभयं घटते। ईक्षापूर्वककर्तृत्वश्रवणान्निमित्तत्वम्। प्रतिज्ञादृष्टान्तानुपरोधाद् इत्यादि-हेतुभिः प्रकृतित्वं सिद्धम्। तथा च—'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' (ब्र० सू० १।४।२३), 'अभिध्योपदेशाच्च' (ब्र० सू० १।४।२४), 'साक्षाच्चोभयाम्नानात्' (ब्र० सू० १।४।२५), 'आत्मकृतेः परिमाणात्' (ब्र० सू० १।४।२६), 'योनिश्च हि गीयते' (ब्र० सू० १।४।२७) इति बादरायणीयानि सूत्राणि ब्रह्मणः प्रकृतित्वं बोधयन्ति। तथाहि—

प्रतिज्ञादृष्टान्तयोरनुपरोधात् प्रकृतित्वं मन्तव्यम्। एवं सति तयोरुपरोधो बाधो न भवति। प्रतिज्ञा "उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्" (छान्दोग्योपनिषद्–६।१।२) इत्यादिश्रुतिरेकविज्ञानसर्वविज्ञानरूपा। सा चोपादानकारण-विज्ञानेन सर्वतद्विकारविज्ञानमादायोपपन्ना भवति, प्रकृत्यव्यतिरेकात् कार्यस्य। निमित्तकारणाव्यतिरेकस्तु कार्यस्य नास्ति। दृष्टान्तोऽपि यथा "सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" (छा० ६।१।२)। अत्र एकमृत्पिण्डविज्ञानेन सर्वं मृन्मयविकारज्ञानं निदर्शयति। एवमन्यत्र मुण्डके बृहदारण्यकेऽपि यथासम्भवं प्रतिज्ञादृष्टान्तौ निर्दिष्टौ। मृत्पिण्डस्य मृन्मयप्रकृतित्वादेव तज्ज्ञानेन तद्विकारविज्ञानम्।

अतो यतो वा इमानि भूतानीत्यादौ यत इत्यत्र पञ्चमी 'जनिकर्तुः प्रकृतिः' (पा० सू० १।४।३०) इति सूत्रेण प्रकृतिलक्षण एवापादाने द्रष्टव्या, यत् प्रकृतेरिमानीत्यर्थः। एवञ्च, ब्रह्मणः प्रकृतित्वं सिद्धम्। नन्वस्तु प्रकृतित्वम्, निमित्तत्वं तर्हि मास्तु, इति चेत्, न, एवमपि प्रतिज्ञादृष्टान्तावुपरुद्धौ स्याताम्। नहि मृत्पिण्डविज्ञानेन कुलाला-देर्विज्ञानं सम्भवति। तस्मान्निमित्तत्वमपि ब्रह्मण एव युक्तम्। तच्चाधिष्ठात्रन्तराभावात् सिद्धम्। नहि सतो ब्रह्मणोऽन्योऽधिष्ठाता श्रूयते, उत्पत्तेः प्राक् 'एकमेवाद्वितीयम्' इति श्रुतेः। अत एकमेव ब्रह्म अभिन्ननिमित्तोपादानम्। सर्वेषु च भूतेष्वेका प्रकृतिसद्रूपाऽनुस्यूता। सर्वभूतानि सद्रूपवस्तुप्रकृतिकानि सत्स्वभावानुरक्तत्वे सति विविधविकार-त्वात्, मृदनुस्यूतघटादिवद् इत्यपि विकारस्य सत्प्रकृतित्वे मानम्। इदं जगद् अभिन्न-निमित्तोपादानं भवितुमर्हति, प्रेक्षापूर्वकजनितकार्यत्वात्, आत्मगतसुखरागादिवद्

इत्यपि मानम्। श्रुतयश्चात्र प्रमाणम्—'सोऽकामयत बहु स्यां प्रजायेय' (तै० उ० २।६), 'तदैक्षत बहु स्यां प्रजायेयेति', 'तत्तेजोऽसृजत्' (छान्दोग्योपनिषद्–६।२।३) इत्याद्याः। अभिध्यानपूर्वकस्वातन्त्र्यप्रवृत्तेः कर्तृत्वम्, बहु स्यामिति प्रत्यगात्मविषयत्वाद् बहुभवनस्य प्रकृतित्वं गम्यते। 'सर्वाणि वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति' (छान्दोग्योपनिषद्–१।९।१) इत्यादिश्रुतेश्च आकाशस्य जगत्प्रकृतित्वं साक्षाच्छ्रूयते। 'आकाशं ब्रह्म' इति निर्णीतम्। 'आकाशस्तल्लिङ्गात्' (ब्र० सू० १।१।२२) इति सूत्रे भाष्ये।

एवम्, 'तदात्मानं स्वयमकुरुत' (तै० उ० २।७) इति श्रुतेरात्मन एव कर्तृत्वं कर्मत्वञ्च बोध्यते। पूर्वसिद्धस्य कर्तृत्वेन व्यवस्थितस्य परमात्मनः विशेषेण विकारात्मना कर्मत्वमिति सिद्धमेकत्र प्रकृतित्वं निमित्तत्वम्। स्वयमिति च विशेषणाद् निमित्तान्तरानपेक्षत्वं बोध्यते।

'कर्तारमीशं पुरुषं ब्रह्मयोनिम्' (मुण्डकोपनिषद्–३।१।३), 'यद्भूतयोनिं परिपश्यन्ति धीराः' (मु० उ० १।१।६) इत्यादिश्रुतौ योनिशब्दश्रवणाद् ब्रह्मणः प्रकृतित्वं गम्यते। एवञ्चैतैः प्रमाणभूतैर्वेदवाक्यैर्ब्रह्मणो जगत्प्रकृतित्वं प्रमीयते। न चेश्वरो जगतो निमित्तकारणमेव, ईक्षापूर्वकजगत्कर्तृत्वात्, कुम्भकर्तृकुलालवद् इत्यनुमानेन तस्य निमित्तत्वमेव केवलं न प्रकृतित्वमिति वाक्यम्, ईश्वरस्यैवात्रासिद्धयाऽऽश्रयासिद्धेः। न च क्षित्यङ्कुरादि कर्तृजन्यं कार्यत्वाद् घटवदित्याद्यनुमानेनेश्वरसिद्धिरिति वाच्यम्, अनेनानुमानेन कर्तुरेव सिद्धेः, न त्वेकस्य सर्वशक्तिमतः सर्वज्ञस्य तस्य सिद्धिः। न चागमादेवेश्वरसिद्धिः। एवं तर्हि यादृशमीश्वरमागमः प्रमाणयति, तादृश एवाभ्युपगन्तव्यः। आगमश्च निमित्तकारणमुपादानकारणञ्चेश्वरं गमयति, न केवलं निमित्तकारणमेवेति।

प्रकृतित्वञ्चास्येश्वरस्य न विकाराभिप्रायेण, अपि तु विवर्ताभिप्रायेण बोध्यम्। यथा सर्पोपादानं रज्जुर्यथा वा रजतस्योपादानं शुक्तिरिति। एवञ्च सिद्धमभिन्ननिमित्तोपादानत्वं ब्रह्मणः। ननु जगद् ब्रह्मणः परिणाम एव, न विवर्तः। न च प्रमाणाभावः, 'तस्माद् वा एतस्मादात्मन आकाशः सम्भूतः' इत्यादिसृष्टिप्रतिपादकश्रुतीनामेव प्रमाणत्वात्। मृदादिदृष्टान्तेष्वपि विकाराणामेव घटादीनां मृदः प्रकृतित्वं निर्दिश्यते। मृदेव कयाचिदाकृत्या युक्तो घटो भवति। तथा ब्रह्म जगदाकारेण परिणम्यतामिति चेत्, न सृष्टिवाक्येषु परिणामशब्दाश्रवणात्, नित्यस्य परिणामत्वेऽनित्यत्वापत्तेश्च। न च परिणामिनित्यत्वं ब्रह्मणो युक्तम्, अविकार्योऽयमुच्यते, 'कूटस्थोऽक्षर उच्यते', 'कूटस्थमचलं ध्रुवम्' इत्यादिगीतावाक्यैर्ब्रह्मणः कूटस्थनित्यत्वावगमात्। सर्वविक्रियाप्रतिषेधश्रुतिभ्यः 'अस्थूलमनणु' (बृहदारण्यकोपनिषद्–३।८।८) इत्यादिभ्यश्च तथात्वावगमात्।

न चोभयमेकत्र ब्रह्मणि संघटते, विरोधात् । सत्यस्याबाधितस्य ब्रह्मणः परिणामः संसार इति तस्यापि सत्यत्वाबाधितत्वापत्तेरनिर्मोक्षप्रसङ्गात् । किञ्च, निरवयवस्य निर्विशेषस्य च ब्रह्मणः परिणामानुपपत्तिः । अतः 'देवात्मशक्तिं स्वगुणैर्निगूढाम्' (श्वे० १।१), 'इन्द्रो मायाभिः पुरुरूप ईयते' (ऋ० सं० ६।४७।१८) इत्यादिश्रुतेः, 'मयाध्यक्षेण प्रकृतिः सूयते सचराचरम्' इत्यादिगीतारूपस्मृतेश्च । ब्रह्माधिष्ठानकमायाया एव जगतः परिणाम्युपादानत्वं स्वीकार्यम् । न च जगतो ब्रह्मभिन्नमायोपादानकत्वे प्रतिज्ञादृष्टान्तोपरोधः स्यादेवेति वाच्यम्, ब्रह्मणि मायायाः कल्पितत्वात् । ब्रह्मविषयाया तदाश्रयायास्तस्यास्तदतिरिक्तसत्ताया अभावात् । नहि आरोपितस्याधिष्ठानातिरिक्तसत्ता सम्भवति ।

न च मायैव विश्वजननीस्वतन्त्रेति वाच्यम्, तस्या जडत्वात् परमात्माधीनत्वाच्च, चेतनाधिष्ठानं विना जडस्य प्रवृत्त्ययोगात् । वत्सविवृद्धिनिमित्तपयसोऽपि जडस्य प्रवृत्तिश्चेतनाधिष्ठानेनैव दृश्यते । तस्याद् मायायाः कल्पितत्वाद् अधिष्ठानातिरिक्तत्वाभावाद् ब्रह्मणः सत्तया सत्तावत्या परिणाम्युपादानत्वेऽपि तदाश्रयस्य ब्रह्मणो विवर्तोपादानत्वं न विरुद्धम्, मायाया अपि प्रपञ्चोपादानभूताया अधिष्ठानत्वाद् ब्रह्मणः । एवञ्चाभिन्ननिमित्तोपादानत्वसिद्धे न प्रतिज्ञादिबाधः ।

ननु लोक उपादाननिमित्तयोर्भेद दर्शनात् कथमेतद् अभिन्नं सिद्ध्यति । न च श्रुतिभिरिति वाच्यम्, न हि प्रत्यक्षसिद्धं घटमागमाः सहस्त्रमपि पटयितुमीशते, इति चेत्, न, लूतातन्तुदृष्टान्तस्य सद्भावात् । श्रूयते च दृष्टान्तमुखेनाभिन्ननिमित्तोपादानत्वं ब्रह्मणः—

यथोर्णनाभिः सृजते गृह्णते च
यथा पृथिव्यामोषधयः सम्भवन्ति ।
यथा सतः पुरुषात् केशलोमानि
तथाक्षरात् सम्भवतीह विश्वम् ॥ इति । (मु०उ० १।१।७)

एवञ्च विवर्ताधिष्ठानत्वं ब्रह्मणः सिद्धम् । तच्च विवर्तकारणाज्ञानविषयत्वरूपम् । उक्तञ्च वार्त्तिककृद्भिः—

अस्य द्वैतेन्द्रजालस्य यदुपादानकारणम् ।
अज्ञानं तदुपाश्रित्य ब्रह्म कारणमुच्यते ॥ इति ।

न च समवायिनः परिणामिनो वा प्रकृतित्वाद् विवर्तभूतस्य परमात्मनो जगदुपादानत्वं न स्यादिति वाच्यम्, कार्यजनिहेतुत्वस्यैव प्रकृतित्वस्वीकारात् । तच्च परिणाम्यपरिणाम्युभयसाधारणमेव तस्य चात्मनि सम्भवात् । सा च जनिराद्यक्षणसम्बन्ध-

रूपाऽऽरोपितात्मनि। न चैतादृशमुपादानत्वं निमित्तेऽतिव्याप्तमिति वाच्यम्, स्वतादात्म्यवति कार्यहेतुत्वस्य विवक्षणात्। एवञ्च प्रपञ्चतादात्म्यवति ब्रह्मणि प्रपञ्चकार्यहेतुत्वस्य सत्त्वात् सिद्धमुपादानत्वम्।

'द्युभ्वाद्यायतनं स्वशब्दात्' (ब्र० सू० १।३।१) इति सूत्रे भगवत्पादैर्द्युभ्वादीनामायतनं ब्रह्मैवेति प्रतिपादितम्। तेनाप्यभिन्ननिमित्तोपादानत्वं ब्रह्मणः सिद्धयति। तथाहि—"यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैस्तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः' (मु० उ० २।२।५) इत्यत्र द्युभ्वादीनामायतनत्वेन परब्रह्मैव गृह्यते, नार्थान्तरम्, स्वशब्दाद् आत्मशब्दश्रवणात्। आत्मशब्दः परमात्मवाची। आयतनमुपादानम्। 'सन्मूला सोम्येमाः प्रजाः सदायतनाः सत् प्रतिष्ठा' (छा० उ० ६।८।४) इत्यत्रापि सर्वप्रजामूलत्वेन तदायतनप्रतिष्ठात्वेन च ब्रह्मैव श्रूयते। 'पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम्' (मु० उ० २।१।१०), 'ब्रह्मैवेदममृतं पुरस्ताद् ब्रह्म पश्चाद् ब्रह्म दक्षिणतश्चोत्तरेण' (मु० उ० २।२।११) इत्यादौ च ब्रह्म एव सर्वायतनत्वेन प्रसिद्धम्। तमेवैकं जानथ इत्यनेन च ब्रह्मगतभेदो निवार्यते। न कार्यप्रपञ्चविशिष्टो विचित्र आत्मा विज्ञेयः; किन्त्वविद्याकृतं नामरूपात्मकं प्रपञ्चं कार्यं विद्ययाविलापयन्तस्तमेवैकमायतनभूतमात्मानं जानीथ, एकरसमित्यर्थः। एवमस्मिन्नधिकरणे ब्रह्मणो जगदुभयकारणता प्रतिपादिता। आरम्भणाधिकरणेऽपि 'तदनन्यत्वमारम्भणशब्दादिभ्यः' (ब्र० सू० २।१।१४) इति सूत्रे ब्रह्मव्यतिरेकेण प्रपञ्चस्य सत्त्वाभावमुक्त्वा तस्याभिन्ननिमित्तोपादानत्वं स्फुटं सूचितम्। तथाहि—'यतो वा इमानि' इत्यादिश्रुतेः, ब्रह्मण्येव जगज्जन्मस्थितिलयश्रवणात् तदव्यतिरेकेण जगतोऽभावान्नित्यस्य निरवयवस्य च परिणामायोगाद् विवर्तोपादानत्वं ब्रह्मणोऽवगम्यते। यथा रज्जुविवर्ताः सर्पादयो न रज्जुव्यतिरेकेणोपलभ्यन्ते। एवं ब्रह्मविवर्ता माया तत्कार्यसमूहा न तद्व्यतिरेकेण सन्ति। एवञ्च, कार्यकारणयोरभेदः सूचितः। अभेदस्तु कार्यस्य कारणेन सह तद्व्यतिरेकेणानुपलब्धत्वम्।

न च कारणाद् ब्रह्मणः कार्यस्य प्रपञ्चस्यानन्यत्वाद् भोक्तृभोग्यविभागो न स्यात्। भोक्ता देवदत्तो भोग्यः शब्दादिरिति। किं वा तयोर्भेदाभावाद् भोग्यस्य भोक्तृत्वापत्तिः, भोक्तुर्वा भोग्यत्वापत्तिः स्यादिति वाच्यम्, लोकवत्तयोर्विभागोपपत्तेः। यथा समुद्रात् सलिलात्मनोऽनन्यत्वेऽपि वीचीतरङ्गादीनां तद्विकाराणां परस्परविभाग इतरेतरसंश्लेषादिलक्षणो व्यवहार उपलभ्यते। न चेतरेतरभावापत्तिः, तद्वत् कारणादभिन्नत्वेऽपि विकारस्य विभागव्यवहारो भविष्यति। यद्यपि भोक्ता शारीरो विज्ञानात्मा न ब्रह्म कार्यम्, तथा च दृष्टान्तदृष्टान्तवैषम्यम्; तथापि 'तत् सृष्ट्वा तदेवानुप्राविशत्'

(तै० उ० २।६) इति श्रुतेरविकृतस्य ब्रह्मणः कार्यानुप्रवेशद्वारा भोक्तृत्वश्रवणाद् उपाधिनिमित्तो विभाग उपपन्न आकाशस्येव घटाद्युपाधिनिमित्तो विभागः।

ननु कार्यकारणयोर्भेद एव युक्तः। अभेदे सति कारणत्वं न स्यात्। न ह्येकं वस्तु स्वयं स्वं प्रति कारणं कार्यञ्च दृष्टम्, कारणस्य कार्याव्यवहितप्राक्क्षणवर्त्तित्वात्। द्व्यणुकादि कार्यं परमाणुभ्यो भिन्नं तदारब्धं दृश्यते। अवयवी चावयवेभ्यः समारब्धोऽतिरिक्तो दृश्यते व्यपदिश्यते च। व्यवहारादपि भेद एव तयोः सिध्यति। न हि घटादिना जलाहरणादिर्यथा संभवति, तथा मृत्पिण्डादिना घटेन कार्यं करिष्यामीति कृत्वा न हि कश्चिदभ्रान्तो मृत्तिकामुपादत्ते। किञ्च, यदि सुवर्णकुण्डलयोर्भेदो न स्यात्, तर्हि एक मूल्येन तयोर्विनिमयः स्यात्। दृश्यते च सुवर्णतः कुण्डलादीनां मूल्याधिक्यम्। किञ्च, इदं कार्यम् इदं कारणमित्यादिशब्दप्रयोगोऽपि विभागशो न स्याद्, अभेदादेव तयोः। साधनव्यापारश्च व्यर्थः स्यात्। यदि साधनव्यापारेण प्रकृतमेवोत्पाद्यते चेत्, तस्य पूर्वं सत्त्वात् तद् व्यर्थता स्पष्टा। न च तदेव प्रकृतं वस्तु साधनव्यापारेण परिणामतोऽन्यथारूपं क्रियते, तत्त्वतो नान्यथा भवतीति चेत्, न, आकृत्यादिना तयोर्भेदस्य सत्त्वात्। एवं कार्यकारणयोर्भेद एवेति चेत्, अत्रोच्यते, कार्यकारणयोर्नाभेद उच्यते; अपि तु कार्यस्य कारणादनन्यत्वमुच्यते। अनन्यत्वं तदव्यतिरेकेणाभावः। एवञ्चोभयोर्भेद एव निषिध्यते। उक्तञ्चाऽऽरम्भणाधिकरणे भामत्यां श्रीवाचस्पतिमिश्रेण—"तस्मात् कारणात् परमार्थतोऽनन्यत्वं व्यतिरेकेणाभावः कार्यस्यावगम्यते" इति भाष्यप्रतीकमादाय "न खलु अनन्यत्वमित्यभेदं ब्रूमः; किन्तु भेदं व्यासेधामः। ततश्च नाभेदाश्रयदोषप्रसङ्गः। किन्त्वभेदं व्यासेधद्भिर्वैशेषिकादिभिरस्मासु साहायकमेवाचरितम्" इति।

तथा च कार्यकारणयोर्व्यावहारिके प्रातीतिके वा भेदे सत्यपि पारमार्थिको भेदो नास्तीति तात्पर्यवतीश्रुतिः 'वाचारम्भणं विकारो नामधेयम्' इत्याद्या तत्त्वत उभयोरनन्यत्वं प्रतिबोधयति। एवञ्च सति, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपद्यते। केचित्तु कार्यकारणयोर्भेदाभेदौ वदन्ति, तन्न युक्तम्—परमार्थत उभयोरेकत्र विरोधात्। भेदस्य पारमार्थिकत्वे श्रुतिविरोधात्। अभेदस्य पारमार्थिकत्वे भेदस्य कल्पितत्वे चेष्टापत्तेः।

एतदुक्तं भवति—वाचा केवलमारभ्यते विकारजातं न तु तत्त्वतोऽस्ति। यतो नामधेयमात्रमेतत्। पुरुषस्य चैतन्यं 'राहोः शिरः' इतिवत् विकल्पमात्रम्—'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' ( यो० सू० ) इति सुवर्णस्य कुण्डलं कटकमित्यादिशब्दाभिधानमात्रम्। न तु वस्तुतः सुवर्णाद् भिन्नं तत् किञ्चिदस्ति। तदितरवस्तुशून्यत्वाद्

शब्दज्ञानानुपातित्वात् कुण्डलं कटकमित्यादिविकल्प एव। न हि सुवर्णमपोह्य कुण्डलादि किञ्चिदस्ति। शब्दप्रयोगस्तु सुवर्णपिण्ड आरोपिताकृतिनिमित्तो न वस्तुभेदनिमित्तः। एवं दार्ष्टान्तेऽपि ब्रह्मविवर्तस्य जगतस्तदनन्यत्वान्न तत्त्वतो भेदः। विकल्प एवाकाशादिविकारजातम्। तस्यैव ब्रह्मणो विकल्पितोपाधिवशाद् न आकाशादिनामधेयम्। आकाशादिशब्देन च न ब्रह्मातिरिक्तं किञ्चित् तत्त्वतोऽभिधीयते, प्रतीयते त्वतिरिक्तमभिधीयत इति। यथा 'इदं रजतम्' इति स्थले शुक्तिकैव वस्तुरजतेनापि बोध्यते; किन्तु भ्रमकाले रजतत्वेन प्रतीयते। तत्त्वं सत्त्वञ्च त्रिकालाबाध्यत्वम्। एवञ्च कार्यकारणयोरनन्यत्वात् सिद्धमभिन्ननिमित्तोपादानत्वम्।

ननु प्रपञ्चोपादानं किं माया, ब्रह्म, उभयं वा। नाद्यः, अधिष्ठानमन्तरा मायाया एवासम्भवात्, तस्य कार्याकारेण परिणामायोगाज्जडायास्तस्याश्चैतन्यायोगे प्रवृत्त्ययोगात्। कार्ये प्रपञ्चे सत्ताया अनुगमात् केवलमायाया उपादानत्वाभावात्। न हि मायायाः सत्त्वमङ्गीक्रियते। न द्वितीयः, ब्रह्मणः सत्यत्वात् प्रपञ्चस्यापि तदुपादानकस्य सत्यत्वापातात्, आज्ञानोपादानकत्वस्वीकारात्। निर्विकारत्वश्रुतिविरोधात्। प्रपञ्चे जडत्वानुगमविरोधाच्च। न च जडत्वसत्त्वयोरनुगमात् प्रपञ्चस्योभयोपादानकत्वं तृतीयः पक्षः स्वीकार्य इति वाच्यम्, विकल्पासहत्वात्। तथाहि किं पटं प्रति सूत्राणामिव परस्परविशिष्टयोः समप्रधानयोर्मायाब्रह्मणोरुपादानत्वम्, उत मायाशक्तिमतो ब्रह्मणो मायाद्वारस्य वा तस्य। न तावत् प्रथमः पक्षः। उभयोः समप्रधानत्वाद् ब्रह्मणोऽपि विकारित्वापातात्। निर्विकारश्रुतिविरोधात्। सूत्रारब्धपटवत् प्रपञ्चोऽप्युभयारब्धः स्यात्, अणुभ्यां द्व्यणुकमिव। किञ्चोभयोः समप्रधानयोरुपादानत्वे प्रपञ्चे सत्यत्वानिर्वचनीयत्वयोरापातः सितासितसूत्रारब्धपटे सितासितत्ववत्। न च तयोर्धर्मयोरेकत्र सहावस्थितिः सम्भवति, विरोधात्।

द्वितीयपक्षोऽपि न युक्तः। मायाशक्तिमद् ब्रह्मण उपादानत्वे तस्य विकारित्वादनित्यत्वापत्तिर्दुर्वारा। मायाशक्तेर्विशेषणत्वे तस्य ब्रह्मणि विद्यमानत्वेन निर्विशेषश्रुतिविरोधः। मायाया विशेषणत्वेऽपि मायाविशिष्टस्याब्रह्मत्वे तस्य जगत्कारणत्वानुपपत्तिः। किञ्च, विशिष्टस्य ब्रह्मणः परिणामरूपं जगदिति समसत्ताककार्यापत्तेः। विवर्तवादहानापत्तिः, असमसत्ताककार्यापत्तिर्विवर्त इति स्मरणात्।

एवमेव मायाद्वारा ब्रह्मकारणमिति तृतीयपक्षोऽपि न युज्यते। तथाहि—द्वारत्वं सहकारित्वम्। मायायाः सहकारित्व उपादानत्वाभावात् प्रपञ्चे जडत्वादिधर्मानुपपत्तेः। न हि घटे सहकारिदण्डादिधर्मा अनुवर्तन्ते। एवं जातायामाशङ्कायामुच्यते—ब्रह्म मायोपहितं जगत् कारणम्। 'यः सर्वज्ञः स सर्ववित्' ( मु० उ० १।१।९ ) इत्यादिना

'तस्माद् वा एतस्मादात्मन आकाशः सम्भूतः' ( तै० उ० २।१।१ ) इत्यादिश्रुतेश्च तथावगमात्। सर्वज्ञत्वञ्च ब्रह्मणः स्वोपाधिभूतमायायां तत्परिणामे च प्रतिबिम्बितत्वेन भासकत्वम्। अतीतानागतादिविषयाकारपरिणतोपाधौ प्रतिबिम्बितं चैतन्यं सर्वं पश्यति। एवमज्ञानोपहितत्वं तस्य युक्तम्। तदेव ब्रह्म जगदुपादानम्। 'तस्माद् वा एतस्मात्' इत्यनेनाप्यज्ञानोपहितादात्मनो जगज्जायत इति स्पष्टमेवावगम्यते। सा च माया मया = प्रमया याति निवर्तते इति व्युत्पत्त्या ज्ञाननिवर्त्त्या ब्रह्मणो विशेषणं शक्तिः सहकारिणी वा स्यात्। न च पूर्वोक्ता दोषाः, उभयोः परिणामितया कारणत्वानङ्गीकारात्। अपि तु मायायाः परिणामितया ब्रह्मणश्च विवर्ताधिष्ठानतया। एवञ्च जगदुपादानत्वं ब्रह्मण आरोपितम्। तथा च निर्विकारत्वनिर्विशेषत्वश्रुतिः सामञ्जस्यं भजते। न च मायापरिणामे ब्रह्मणो विकारित्वं सम्भवति मनागपि, आरोपितेनाधिष्ठानस्य संश्लेषासम्भवात्। न ह्यारोपितेन रजतेन मनागपि शुक्तिसंश्लेषो भवति। एवञ्च मायोपहितं ब्रह्म जगत्कारणम्। उक्तञ्च पञ्चपादिकाकृद्भिः—"अतो यदवष्टम्भो विश्वो विवर्तते प्रपञ्चस्तदेव मूलकारणं ब्रह्मेति सूत्रार्थः" इति।

तत्रैव च विवरणकारैः प्रकाशात्मयतिभिरुक्तम्—"तस्मादनिर्वचनीयमायाविशिष्टं ब्रह्म कारणमिति प्राप्तम्। त्रैविध्यमत्र सम्भवति—रज्ज्वा सम्बद्धसूत्रद्वयवन्मायाविशिष्टं ब्रह्म कारणमिति वा, 'देवात्मशक्तिं स्वगुणैर्निगूढाम्' इति श्रुतेर्मायाशक्तिमत् कारणमिति वा, जगदुपादानमायाश्रयतया ब्रह्म कारणमिति वा। तत्र विशिष्टपक्षे तथैव ब्रह्मत्वेनोपलक्षितस्य ज्ञानानन्दादिस्वरूपलक्षणेन मायानिष्कर्षाल्लक्षणद्वयेन विशुद्धब्रह्मसिद्धिः। उत्तरपक्षयोस्तु मायाया ब्रह्मपरतन्त्रत्वात् तत्कार्यमपि ब्रह्मपरतन्त्रं भवति। यथा—अंशुतन्त्वारब्धोऽपि पटोऽंशुतन्त्रः प्रतीयते। ततश्चोत्पद्यमानकार्यस्य यदाश्रयोपाधिज्ञानानन्दलक्षणञ्च तद् ब्रह्मेति शुद्धब्रह्मलाभ इति"। एवञ्च, मायोपहितं ब्रह्म जगत्कारणं निमित्तमुपादानञ्चेति सिद्धमद्वैतवेदान्तमतेऽभिन्ननिमित्तोपादानत्वं ब्रह्मण इति शम्।



# व्याकरणशास्त्रस्याद्वैतपरत्वम्

डॉ० रामयत्नशुक्लः,
व्याकरणविभाग-वेदवेदाङ्गसंकायाध्यक्षः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी

❀❀❀

प्रक्रियापरतया साध्वसाधुविवेचनपरमपि व्याकरणशास्त्रं परमार्थतोऽद्वैतमेव विषयीकरोतीति यथाप्रतिमानं क्रमशः प्रवच्मि। पाणिनिना विनिर्मितमिदं व्याकरणं महेश्वरप्रसादोपलब्धचतुर्दशसूत्रीसनाथम्। चतुर्दशसूत्र्युपदेशस्तु सनकादिसिद्धोद्धारायेति। समुद्धारोपदेशस्तु 'तमेव विदित्वातिमृत्युमत्येति' इति श्रुत्याऽद्वैतोपदेश एव। अत एव सनकादिसिद्धोद्धरणार्थं महेश्वरेण प्रवर्तितानां सर्वव्याकरणमूलभूतानां 'अइउण्' इत्येवमादीनाम् अद्वैत एव तात्पर्यं प्रकाशितं श्रीनन्दिकेश्वरेण भगवता—

अकारो ब्रह्मरूपः स्यान्निर्गुणः सर्ववस्तुषु।
चित्कलामिं समाश्रित्य जगद्रूप उणीश्वरः॥
अकारः सर्ववर्णाग्र्यः प्रकाशः परमेश्वरः।
आद्यमन्त्येन संयोगादहमित्येव जायते[1]॥ इति।

'अइउण्' इति सूत्रस्थाकारेण हलिति सूत्रस्थहकारसंयोगे अहमिति भवतीत्यर्थः।

सर्वं परात्मकं पूर्णं ज्ञप्तिमात्रमिदं जगत्।
ज्ञप्तेर्बभूव पश्यन्ती मध्यमा वाक् ततः स्मृता॥
अकारो ज्ञप्तिमात्रं स्यादिकारश्चित्कला स्मृता।
अकारं सन्निधीकृत्य जगतां कारणत्वतः॥
उकारो विष्णुरित्याहुर्व्यापकत्वान्महेश्वरः[2]।

इत्यादितदीयश्लोकेषु निर्गुणस्य ब्रह्मण एव सर्वकारणत्वं हरिहराभेदश्च दर्शितः। एतद्व्याख्याने उपमन्युरपि—'अग्रे सृष्टेः पूर्णमिदमकाररूपाक्षरात्मकमासीत्। वागेव

१. नन्दिकेशकृतकारिका, उ० न० व० महाभाष्यटीकायां छायोपेतायाम्, पृ० १४९।

२. तत्रैव।

विश्वा भुवनानि जज्ञे, वाचैव विश्वं बहुरूपं निबद्धम्। तदेव चैकं प्रविभज्योपभुङ्क्ते' इत्याह।

सर्वं परात्मकं पूर्वं ज्ञप्तिमात्रमिति सर्वस्य प्रपञ्चस्य सर्गात् पूर्वं ज्ञप्तिमात्रस्वरूप-पराभिधस्फोटात्मकत्वाभिधानात् स्फोटस्याद्वितीयचैतन्यस्वरूपत्वमुक्तम्। तथा चोक्तं न्यायचिन्तामणौ—'अन्यभावव्यावृत्तेश्च' इति सूत्रे। एवञ्च ब्रह्मस्फोट इति नाममात्रो विवादः स्यात्, न च वस्तुनि। यथा घटः कलश इत्यादौ शब्दभेदेऽपि न पदार्थभेदः। मुक्त्यन्वयिसकलजीवाभेदं जडप्रपञ्चराहित्यं चानभ्युपगम्य स्फोटाद्वैतोपपादनायोगात्। वैयाकरणशिरोमणिर्हरिरपि तत्त्वमिदं प्रकाशयति वाक्यपदीयस्याद्ये पद्ये—

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।**
**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥** इति।

अत्र शब्दतत्त्वस्य ब्रह्मत्वोपपादनेन '**एकमेवाद्वितीयं ब्रह्म**' इति श्रुतिभिर्ब्रह्मणोऽद्वैतत्वसूचनेन एतन्मते सुस्पष्टमद्वैततत्त्वे समादरो विभाति। अर्थात्मकप्रपञ्चात्मना विवर्तमानं स्फोटाख्यमक्षरतत्त्वं ब्रह्मेति व्यपदिश्यत इति कारिकाशयः।

**स्वरूपज्योतिरेवान्तः परा वागनपायिनी।**
**तस्यां दृष्टस्वरूपायामधिकारो निवर्तते[1]॥** इति।

इति परापरस्फोटब्रह्मसाक्षात्कारेणाधिकारनिवृत्त्यपरपर्यायो मोक्षः सम्पद्यते, 'तस्मात् सर्वमभावो वा भावो वा सर्वमिष्यते। न त्ववस्थान्तरं किञ्चिदेकस्मात् सत्यतः स्थितम्' इति। ब्रह्म एकमेवाद्वितीयम्, तस्यावस्थान्तरं किञ्चिन्नास्ति। सर्वं हि वस्तु ब्रह्मव्यतिरेकेणालोच्यमानं नास्त्येव, अविद्यमानत्वात्। तथा चोक्तं भगवताऽलङ्कावतारे—

बुद्ध्या विविच्यमानानां स्वभावो नावधार्यते।
अतो निरभिलप्यास्ते निस्स्वभावाश्च दर्शिताः[2]॥ इति।

ब्रह्मरूपेण तु जगत्सत्यमेव। अत एवेयं श्रुतिः—'**सर्वं खल्विदं ब्रह्म**[3]' इति। जगज्जन्मादिविषये श्रुतिः—'**यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति च तद् विजिज्ञासस्व**[4]' इति। तन्मूलञ्च शारीरकमीमांसादर्शनस्याद्यसूत्रम्—'**जन्माद्यस्य यतः**[5]' इति। जगतो जन्मस्थितिभङ्गा यतस्तद् ब्रह्मेति सूत्रार्थः। तदेव लक्षणं भर्तृहरिरपि ब्रूते—अनादिनिधनमित्यादिना। तथा हि ब्रह्मसूत्रे—'जन्मादि' इति प्रथमान्तम्, अस्येति षष्ठ्यन्तम्, यत इति पञ्चम्यन्तम्। एवमेव—'अनादिनिधनं

---

१. उ० न० वा० म० छाया०, पृ० ४४; २. उ० ख० खां० प्रमाणखण्डने।
३. छा० उ० ३।१४।१; ४. तै० उ० ३।१।१; ५. ब्र० सू० १।१।

ब्रह्म शब्दतत्त्वं यदक्षरम्। विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः' इति हरिकारिकायामपि 'प्रक्रिया' इति प्रथमान्तम्, 'जगतः' इति षष्ठ्यन्तम्, 'यतः' इति पञ्चम्यन्तम्। ब्रह्मेति तु पूर्वार्द्धेऽस्ति। अत्रापि 'विवर्तते' इति कथनेन वेदान्तसम्मतो विवर्तवादो मतः। विवर्तो नाम अतात्त्विकोऽन्यथाभावः। इदं रजतमित्यत्र भ्रमस्थले इदमधिकरणे रजतस्यातात्त्विकोऽन्यथाभावः। रजतमसदप्यविद्यावशात् तत्रारोप्यते, तच्चाधिष्ठानज्ञानेन शुक्तिरित्यात्मकेन निवर्तते। अतो रजतं विवर्त एव। एवमेवात्र कारिकायां जगतः प्रक्रियापि तस्मिन् स्फोटात्मके ब्रह्मणि अतात्त्विकरूपेणारोप्यते।

अत्रायं निष्कर्षः—ब्रह्मणो ह्यवस्थाद्वयी शास्त्रसिद्धा। एकाऽविद्यया प्रविभागावस्था। तत्र यद्यपि प्रविभागदशायां ब्रह्म विविधकल्पगोचरम्। तथा हि तस्यां दशायामेकस्यैव ब्रह्मणो धर्मधर्मिरूपेण विकल्पः। घटोऽभूत्, भवति, भविष्यति इत्यादिकालभेदेन भिन्नजातिपुरस्कारेण नानाविधः प्रत्ययः। कयोश्चिद् भेदप्रत्ययः, कयोश्चिदभेदप्रत्ययः। क्वचिद् भावप्रत्ययः, क्वचिदभावप्रत्ययः; तथापि कार्यरूपेणाप्रविभागावस्थायामपि तादृशसर्वविकल्पातीतं ब्रह्मोक्तम्। किञ्च, तस्यामवस्थायां स्वस्माद् भेदाभेदाभ्यामनिर्वाच्याभिः सर्वकार्यानुकूलाभिः शक्तिभिरध्यासितम्। ताश्च शक्तयो ब्रह्मणि सर्गादिकार्यानुमेया वह्न्याद्याशक्तिवत् सन्त्येव। न तु भेदाभेदाभ्यामनिर्वाच्यत्वाद् शशविषाणवत् तुच्छभूताः। यच्च ब्रह्मणो जगद्रूपेण विवर्तमानावस्थायां सर्वविकल्पातीतम्, तदेवानादिनिधनमिति निर्दिष्टम्। अविद्याशक्तिमच्च सर्वकार्यानुकूलशक्तिभिः समाश्रितं विकल्पगोचरं भवति। वस्तुतस्तु उभयावस्थायामपि तद् ब्रह्म अनादिनिधनमेवैकम्। यथा घटकुण्डलादयो विकारा यत्सुवर्णादिप्रकृत्यान्विता हि दृश्यन्ते, तथैव रूपादयो विषयाः शब्दरूपानुगता एव दृश्यन्ते। तदुक्तं वाक्यपदीये—

> न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
> अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते[1]॥ इति।

**पूर्वार्द्धं व्याचष्टे—**

यतो ब्रह्मणः शब्दतत्त्वाज्जगतः सकलागमस्य त्रयीरूपस्य प्रक्रिया प्रथममुत्पत्तिः। अत्र जगत्पदं सकलागमेषु लाक्षणिकम् 'यो ब्रह्माणं विदधाति पूर्वं यो वेदांश्च प्रहिणोति तस्मै' इति ब्रह्मण उत्पत्तेः पूर्वमेव वेदानामुत्पत्तिश्रवणात्।

अयमाशयः–सर्वकार्याणां प्रलयावस्थायां वर्णमात्रा पदाद्यानुपूर्वीशून्यभूतसंहृतक्रमं शब्दाख्यं ब्रह्म वावतिष्ठते, सेयं ब्रह्मणोऽवस्था संवर्त इत्युच्यते।

---

१. वा० प० १।१२३।

तस्य लक्षणं तु—'**अनेकस्यैकत्रोपसंहारः संवर्तः**[1]' इति, तद्विपरीतं तु '**एकस्यानेकरूपेण प्रतिभासो विवर्तः**' इति। प्रत्यये च पदार्थानां नास्ति परस्परं भेदेनावधारणमिति तदाऽनाकृतमव्याकृतं वा ब्रह्म उच्यते।

किञ्च, तदानीं शब्दाख्ये ब्रह्मणि विकाररूपा ग्रन्थयो रूपाद्यात्मका विषयाः कारणात्मना सन्तोऽपि भोगासम्पादकतयाऽसन्त इवेति तदानीं तैरव्यपदेश्यं ब्रह्मेति तादृशाद् ब्रह्मणः सकलागमा एव पूर्वं जायन्ते वेदशब्देभ्यश्चार्था इति। अत्रेदमुक्तम्—

य: सर्वपरिकल्पानामाभासेऽप्यनवस्थितः।
तर्कागमानुमानेन बहुधा परिकल्पितः[2] ॥ इति।

ब्रह्मेदं शब्दनिर्माणं शब्दशक्तिनिबन्धनम्।
विवृतं शब्दमात्राभ्यस्तास्वेव प्रविलीयते ॥

हरिकारिकायां यदुक्तं शब्दतत्त्वमिति तत्र हेतुमाह—ब्रह्मेदमिति। इदं जगत् शब्दनिर्माणं ब्रह्मैव। सर्वे रूपादयो विकाराः शब्दरूपतया निर्मीयन्तेऽनेनेति कर्तरि बाहुलकाल्ल्युट्।

शब्दरूपतया रूपादयोऽनेन निर्मीयन्ते, इत्युक्त्या शब्दतत्त्वस्य ब्रह्मणः प्रकृतिरूपेणार्थेष्वनुगमो दर्शितः। शब्दशक्तिनिबन्धनम्—शब्दस्य याऽभिधाख्या शक्तिः, सा निबन्धनं ज्ञापककारणमस्य तत्तथा। अनेनाऽर्थस्य स्थितिप्रवृत्तिनिवृत्तिविभागाः शब्देनाक्रियन्त इत्युक्तं भवति। तथा ह्यर्थस्य शब्दे स्थितिः, शब्दादेव प्रवृत्तिः, शब्दे एव निवृत्तिर्लयश्च। यदीदं न स्यात्, तदा शब्दशक्त्या न बोध्येतेति।

अथवा—ब्रह्मेदमितीदमात्मकस्य जगतो ब्रह्मभेदः साध्यते। तत्र हेतुः शब्दनिर्माणमिति। यतः शब्देन निर्मितं तत इत्यर्थः।

प्रकृतस्य हेतोः साधनायाह—शब्दशक्तिनिबन्धनमिति। शब्दशक्तयो यतस्तत्रार्थेष्वनुगता आसते, प्रलीयन्ते वा, तत्र शब्दशक्तिष्वर्था विनाशकाल इति शब्दशक्तिनिबन्धनमिदं जगदित्यर्थः। किञ्चेदं जगच्छब्दमात्राभ्यः शब्दतत्त्वस्य ब्रह्मणो मात्राभ्यस्तत्तदर्थानुकूलशक्तिपरिच्छिन्नेभ्योंऽशेभ्यो विवृत्तं विवर्तरूपेणोद्भूतं प्रतीयमानञ्च तास्वेव शब्दमात्रासु स्वोपादानकारणीभूतासु प्रविलीयत इत्यर्थः।

अत्रेदं तत्त्वम्—रूपादिपदार्थानां परस्परं यो भेदः, स आविद्यकः, तेषां प्रकृतिः शब्दः, स च सत्यः। तथा चोक्तम—'**वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव**

---

१. वा० प० हेला०;

२. उ० वा० हे० ब्र० का० अ० क० पृ० ६।

सत्यम्[1]'। अनया श्रुत्या प्रकृतेरेव सत्यत्वं निर्धारितं भवति। किञ्च, शब्देन वस्तु परिच्छिद्यते। अतः प्रकृतिविकृतिभावेन शब्दात्मकं वस्तु। तथाहि—यद्यर्थः शब्दात्मको न भवेत्, तदा शाब्दे ज्ञाने न प्रतीयेत। किन्तु शब्देन शब्द एव प्रतीयेत, अन्येनान्य-प्रतीत्यसम्भवात्। स्वस्यैव स्वप्रतीतिजनकताया दृष्टत्वात्। प्रतीयते च शब्देनार्थ इति शब्दप्रकृतिकतया शब्दाज्ज्ञानं जातमिति। न चान्येनान्यस्याभिलापो युक्त इति शब्दात्मकोऽर्थो ज्ञानञ्चेति। किञ्च, सर्वेऽपि स्थितिप्रवृत्तिनिवृत्तिरूपा व्यवहाराः शब्देनैव क्रियन्त इत्यतोऽपि तेषां व्यवहाराय तद्विषयाणां च मूलभूतं शब्दात्मकं ब्रह्मैवेत्यतोऽप्यत्र शब्दतत्त्वमित्युक्तिर्ब्रह्मणि युज्यते। अतः शब्दतत्त्वस्यैव रूपाद्यात्मना विवर्तः स्वीकर्तव्य इति शब्दतत्त्वं ब्रह्मेति। तच्च शब्दतत्त्वं ब्रह्म अद्वैतमेव। तथा चोक्तं वाक्य-पदीये—

**एकमेव यदाम्नातं भिन्नं शक्तिव्यपाश्रयात्।**
**अपृथक्त्वेऽपि शक्तिभ्यः पृथक्त्वेनेव वर्तते[2]**॥ इति।

यदा शब्दतत्वं ब्रह्मैकमेवाम्नातम्। एकमेवाद्वितीयमित्यादिश्रुत्या पौनःपुन्ये-नोक्तम्। तथा हि लोके ये घटरुचकादयो विकारास्तत्र विकारिणामेकत्वे विकाराणाञ्च परस्परं नानात्वेऽपि तत्सर्वं तदेव सर्वप्रकृतेर्ब्रह्मण एकत्वादेकमिति उक्तम्। ब्रह्मण्येकत्व-मभेदव्यच्छेदमात्रं न त्वेकत्वसंख्यायोगरूपम्। तथा च श्रुतयः—**'सलिल एवैको द्रष्टाऽद्वैत एक एवाऽभवत्[3]'** इति, **'सदेव सोम्येदमग्र एकमेवासीदेकमेवाद्वितीयं ब्रह्म'** इति। भेदप्रतीयते 'उक्तं शक्तिव्यपाश्रयात्' इति। विभिन्नशक्तिसमाश्रयेण तद्ब्रह्म नानेव भवति। ऊत्तरार्द्धे, इव शब्दोपादानेनाऽपृथक्त्वं वास्तविकम्। पृथक्त्वं तु काल्पनिक-मित्यवधेयम्। अनेन व्याख्यानेन शब्दब्रह्मणः सजातीयविजातीयस्वगतभेदशून्यरूमद्वैतत्वं स्थिरीभवतीति निर्णीयते।

व्याकरणप्रणेता पाणिनिरप्यद्वितीयमात्मतत्त्वं तत्र तत्र सूचयति—तथा ह्यष्टा-ध्यायीनिर्माणप्रारम्भे निर्विघ्नं प्रणिनीषुरेष भगवानादौ **'वृद्धिरादैच्[4]'** इति सूत्रणात्। अत्र च भाष्यम्—'एतदेकमाचार्यस्य मङ्गलार्थं मृष्यताम्। माङ्गलिक आचार्यः महतः शास्त्रस्य मङ्गलार्थं वृद्धिपदमादौ प्रयुङ्क्ते' इति। अत्र मङ्गलं वस्तुनिर्देशात्मकम्। वर्द्धनार्थकवृध्धातुनिष्पन्नस्य निरुपचरितवृद्धिशब्दस्य त्रिविधपरिच्छेदशून्यमत एवाद्वैतं ब्रह्मैवेत्यर्थः। तदेवात्र माङ्गलिकेनाचार्येण निर्दिश्यते। ब्रह्मणः परममङ्गलरूपत्वे तूक्तम्—

---

१. छान्दोग्योपनिषद्–६।१।४;
२. वा॰ प॰ १।२।
३. श्रुतिः, उ॰ वा॰ प॰ अ॰ क॰ टी॰ पृ॰ ११;
४. पा॰ सू॰ १।१।१।

अतिकल्याणरूपत्वान्नित्यकल्याणसंश्रयात् ।
स्मर्तॄणां वरदत्वाच्च ब्रह्म तन्मङ्गलं परम् ॥ इति ।

धातोः कर्मणः समानकर्तृकादिति सूत्रे वार्त्तिककारो वररुचिरपि 'सर्वस्य चेतनावत्वात्'[1] इति वार्त्तिकं पठति । तत्र 'सर्वस्य' इत्यात्माद्वैतदर्शनेनेति भाव इति कैयटव्याख्या । तथा च सर्वस्यापि परात्माभेदाच्चेतनावत्त्वमुपपादयतो वार्त्तिककारस्याद्वैतसिद्धान्त आदरो दृश्यते ।

एवमेव 'सिद्धं तु निवर्तकत्वात्' इति वार्त्तिकमपि कात्यायनस्य महर्षेरद्वैतभावं सूचयति । तस्यार्थ.—'सत्यं ज्ञानमनन्तं ब्रह्म' इति 'तत्त्वमसि' इत्यादिश्रुतिवाक्यैरहमिति प्रत्यये प्रसिद्धस्यैव ब्रह्मणः प्रतिपादनेन कथं शास्त्रप्रमाणं सिद्धमिति चेत्, अत्रोच्यते—एतेषां वाक्यानां ज्ञातज्ञापकत्वेऽपि भ्रमविशेषनिवृत्तिरूपप्रयोजनत्त्वात् प्रामाण्यं सिद्धमिति भगवान् भाष्यकारोऽपि 'स्त्रियाम्'[2] इति सूत्रस्थवार्त्तिकव्याख्यानावसरे असत्तु मृगतृष्णावत्, गन्धर्वनगरं यथा' इति पठन्नद्वैतराद्धान्तस्यादर्त्तव्यतां मन्यते । तत्र भासमानस्य सदसद्विलक्षणरूपमनिर्वाच्यत्वमभिप्रेतं महर्षेः । तथा हि 'स्त्रियाम्' इति सूत्रे भाष्यग्रन्थः-'कथं पुनरसल्लिङ्गं शक्यं द्रष्टुम्, मृगतृष्णावत् । तद् यथा मृगास्तृषिता अपां धाराः पश्यन्ति, न च ताः सन्ति । यथा गन्धर्वनगराणि दूरतो दृश्यन्ते, उपसृत्य च नोपलभ्यन्त इति' । अत्र गन्धर्वनगरदृष्टान्तेनान्याख्यातिर्व्यावृत्ता, तस्य पूर्वाननुभूतत्वात् । न च ताः सन्तीत्यनेन च सत्ख्यातिर्निवारिता । दृश्यन्त इत्युक्त्या आख्यातिर्वारिता । एवञ्च भ्रमे भासमानस्य सदसद्विलक्षणत्वरूपमनिर्वाच्यत्वमद्वैतिनां यदभिप्रेतम्, तदेव महाभाष्यकाराणामप्यभिप्रेतमिति साधितं भवति ।

एवमेव—'**वर्तमाने लट्**[3]' इति सूत्रे भाष्यमपि स्पष्टयत्येतत् । तथा च भाष्यम्—"अन्ये त्वाहुः नास्ति वर्तमानः कालः, अपि चात्र श्लोकानुदाहरन्ति—

न वर्तते चक्रमिषुर्न पात्यते
न स्यन्दते सरितः सागराय ।
कूटस्थोऽयं लोको..............
यो ह्येवं पश्यति सोऽप्यनन्धः[4] ॥" इति ।

अत्र कैयटः—'एवं यो वेत्ति सोऽप्यनन्धः । किं पुनर्योऽनुष्ठाता योगीत्यर्थः । स ह्यविकृतमात्मतत्त्व भावयन् प्रत्यक्षीकरोतीत्यर्थः' इति ।

---

१. म० भा०; २. अष्टा० ४।१।३; ३. अष्टा० ३।२।२१; ४. म० भा० ।

तदुक्तं भगवता श्रीकृष्णेन श्रीमद्भगवद्गीतायाम्—

**ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः।**
**तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम्[1] ॥**

एवं कैयटव्याख्यानुरोधेन भाष्योदाहृताः श्लोका अध्यात्मविदुपज्ञा इति स्पष्टं प्रतीयते। क्षणभङ्गवादिनामयं पक्ष इति प्रकृत्य तान् श्लोकान् व्याकुर्वता श्रीमता नागेशेनापि—'आत्मा न क्रियाश्रयः, कूटस्थत्वात्। नाप्ययं लोकः क्षणभङ्गुरत्वात्' इति व्याहृत्य इमे च श्लोका अद्वैतिनामेवानुकूला इति स्पष्टीकृतम्।

भाष्यकारा अपि एवंविधस्य प्रत्यवस्थानस्याद्वैतिनां पक्ष एव स्वारसिकत्वमभिप्रयन्तः 'नास्ति वर्तमानः कालः' इति प्रत्यवातिष्ठन्त। अन्ये त्वाहुः—बहुवचनप्रयोगेण सबहुमानमभिधाय अन्य आह 'अस्ति वर्तमानः कालः' इति वर्तमानकालास्तित्ववादिनं प्रकृतनिर्वाहकमप्येकवचनेनैव निर्दिशन्तीति भाष्यकाराणामद्वैतवादे कियती श्रद्धा।

किञ्च, 'निवृत्तपदार्थकृतः' इति नञ्सूत्रस्थभाष्येण आरोपार्थकत्वं नञः प्रतिपादयद्भिस्तैरद्वैतवादस्य समर्थनं कृतम्। यतो हि नञ आरोरितार्थकत्वे '**शान्तं शिवमद्वैतम्**[2]' इति माण्डूक्यवाक्यगताद्वैतपदेनैवाऽऽरोपितद्वैतवदित्यर्थकेन दृश्यप्रपञ्चस्य तस्मिन् परात्मन्यारोपितत्वं स्पष्टत एवोक्तं भवतीति। मञ्जूषायां नागेशेनैतदनूद्य प्रत्यपादि, अत्रेदं बोध्यम्, प्रतियोग्यारोपोऽत्रावज्ञाने तद्व्यवहारे च हेतुः, प्रतियोग्यनालिङ्गितेरभावबुद्धेरनुदयात्। एवमेव—

तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः[3] ॥ इति।

शिष्टवाक्ये सादृश्याद्यर्थकेषु भेदाभावयोर्ग्रहणम्।

'कर्मवत् कर्मणा तुल्यक्रियः' इति सूत्रस्थं भाष्यमप्यद्वैतवादमुपोद्बलयति। तथा च 'आत्मा आत्मानं जानाति' इत्यत्रान्तःकरणावच्छिन्नः कर्ता शरीरावच्छिन्नं कर्मेति। अत्रान्तःकरणावच्छिन्नादेर्जीवत्वोपपादनम् अद्वैतवादमेवानुकरोति।

उदितवति परस्मिन् प्रत्यये शास्त्रयोनौ
गतवति विलयं च प्राकृतेऽपि प्रपञ्चे।
सपदि पदमुदीतं केवलं प्राप यो यत्
तदियदिति मिमीते को हृदा पण्डितोऽपि ॥

---

१. गी० ५।१६; २. मा० उ० १।७; ३. पा० सू० ३।१।८७।

इति प्राचीनवैयाकरणैः पठ्यमानं पद्यमिदमद्वैतपरमेवेति

वैयाकरणशिरोमणिर्भट्टोजिदीक्षितोऽपि वैयाकरणसिद्धान्तकौमुद्यां भ्वादिप्रकरण-प्रक्रमे—

श्रोत्राहंन्तीचणैर्गुण्यैर्महर्षिभिरर्हदिवम् ।
तोष्टूयमानोऽप्यगुणो विभुर्विजयतेतराम् ॥

इत्यत्र महर्षिभिरर्हदिवं तोष्टूयमानोऽप्यगुण इति वदन् परमात्मनो निर्गुणत्व-मद्वैतरूपमावेदयति । तट्टीकाकारस्तत्त्वबोधिन्यामपिशब्दः आपाततो विरोधं द्योतयति । वस्तुतस्तु न विरोधः, स्तुतिप्रयोजकीभूतानामनन्तकल्याणगुणानां श्रुतिस्मृतिसिद्धत्वेऽपि वियदादिवद्व्यावहारिकत्वात् तदभावस्य पारमार्थिकत्वाद् इत्युक्तवान् ।

किञ्च, 'जनिकर्तुः प्रकृतिः'[1] इति सूत्रे 'ब्रह्मणः प्रजाः प्रजायन्ते' इत्युदाहृतं दीक्षितेन कौमुद्याम् । अत्र श्रीमान् नागेशः प्रकृतिरुपादानकारणम्, मायाशबलं च जगदुपादान-कारणम् इति व्याचकार । ब्रह्म मायाशबलमिति मनोरमाकृत् । ब्रह्म मायोपहितं चैतन्यं तच्च जगदुपादानम् इति तत्त्वबोधिनीकारः । अत्र सर्वैरपि वैयाकरणैः शुद्धस्य कारणत्वा-भावमुपहितस्यैव कारणत्वमावेदयद्भिर्वेदान्तसिद्धाद्वैतवादः स्वीकृतः ।

अत्र हेलाराजः—असत्योपाध्युपलक्षितं सत्यमुपाध्यनादरेणैव सत्यैरभिधीयत इत्याह[2] ।

शाब्दिकशिरोमणिर्नागेशः—'एतच्छास्त्रप्रयोगव्यङ्ग्यस्य ध्वनिरूपरूषितस्यैव तैर्वाचकत्वस्वीकारेण तस्य चात्यन्तविचारे ब्रह्मातिरेके मानानुपलम्भेन तत्तदुपाधि-भिन्नचित एव बोधकतायास्तैर्ग्रहात् । एवं सर्वबोधकेषु ब्रह्मबुद्धौ ज्ञातायां तेनैव दृष्टान्तेन सर्वपदार्थेषु 'ब्रह्मबुद्धिर्वैयाकरणानाम्' इत्याह । एतेन भिन्नप्रवृत्तिनिमित्तानां पदानामेकार्थवृत्तित्वरूपं सामानाधिकरण्यमभ्युपगम्य 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादि-वाक्येषु सत्यत्वादिबहुगुणविशिष्टमेव ब्रह्म प्रतिपाद्यत इति केषाञ्चित् सविशेषब्रह्मवादिना-मुक्तिर्निराकृतो भवति । असत्यतत्तदुपाध्यनादरेणोपलक्षितस्यैव वाच्यत्वस्य सिद्धत्वात् ।

भर्तृहरिरपि—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥

---

१. पा० सू० १।४।३०; २. वा० प० हेलारा० ।

इत्यादिना शब्दाद्वैतवादमुपस्थापयामास। सर्वदर्शनसंग्रहेऽपि तस्मादद्वयं सत्यं परं ब्रह्मतत्त्वं सर्वशब्दार्थं इति स्थितम्। तदुक्तम्—

तस्माच्छक्तिविभागेन सत्यः सर्वः सदात्मकः।
एकोऽर्थः सर्ववाच्यत्वे बहुरूपः प्रकाशते[1]॥ इति।

हरिणा सम्बन्धसमुद्देशे सत्यस्वरूपविषय उक्तम्—

यत्र द्रष्टा च दृश्यं च दर्शनञ्चापि कल्पितम्।
तस्यैवार्थस्य सत्यत्वमाहुस्त्रय्यन्तवेदिनः[2]॥ इति।

अत्र सुस्पष्टमिव, यत्र त्वस्य सर्वमात्मैवाभूत्, तत् केन कं पश्येत्, केन कं विजानीयादिति वेदान्तसिद्धं दर्शनादिव्यवहारातीतं ब्रह्मोक्तम्।

पुण्यराजकृतायां वाक्यपदीयटीकायामपि ग्राह्यग्राहकादिप्रपञ्चस्य विकल्पपरिघटितस्यासत्यत्वात् सर्वप्रपञ्चसमतिक्रान्तं वाङ्मनसातीतं तत्त्वमविकल्पं परमनादिनिधनं ब्रह्म सत्यमिति प्राहुरित्यादिनाऽयमर्थः स्फुटीकृतः। तथा वाक्यसमुद्देशे वाक्यपदीयेऽपि—

वाच्या सा सर्वशब्दानां शब्दाच्च न पृथक् ततः।
अपृथक्त्वेऽपि सम्बन्धस्तयोर्जीवात्मनोरिव[3]॥

इति प्रादर्शि।

कालसमुद्देशेऽपि—

निर्भासोपगमो योऽयं क्रमवानिव दृश्यते।
अक्रमस्यापि विश्वस्य तत्कालस्य विचेष्टितम्[4]॥

इत्युक्तम्।

अत्र भूरिराजतनयहेलाराजव्याख्यायाम्—'सम्बन्धसमुद्देशे प्रदर्शितदिशाऽक्रमं ब्रह्मविवर्तरूपं विश्वम्, तस्य यदिदं क्रमेणैवावभासमानं तत्कालशक्तिकृतप्रतिबन्धाभ्यनुज्ञानसामर्थ्यम्। कालाख्या हि ब्रह्मशक्तिरविद्येव क्रमावभासकारितया जीवात्मसु सफलेति ब्रह्मकाण्डे निर्णीतं वाक्यपदीयेऽन्यत्रापि—

---

१. वा० प० स० समु० ८१;
२. वा० प० स० ७२।
३. वा० प० जा० स० का० १६;
४. वा० प० ३।९४६।

सम्बन्धिभेदात् सत्तैव भिद्यमाना गवादिषु ।
जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः ॥
तां प्रातिपदिकार्थञ्च धात्वर्थञ्च प्रचक्षते ।
सा नित्या सा महानात्मा तामाहुस्त्वतलादयः[१] ॥ इति ।

अत्र ब्रह्मरूपा एकैव सत्ता गवाश्वादिविविधोपाधिसम्बन्धाद् गोत्वाश्वत्वादि-भेदव्यपदेशभागिनीवानुभूयत इत्युक्तम् । भगवान् महाभाष्यकारोऽपि 'सिद्धे शब्दार्थ-सम्बन्धे' इत्येतद्वार्त्तिकव्याख्यानावसरे द्रव्यं हि नित्यमित्यनेन ग्रन्थेन असत्योपाध्य-वच्छिन्नं ब्रह्मतत्त्वं द्रव्यशब्दवाच्यं सर्वशब्दार्थं इति न्यरूपयत ।

असत्योपाध्यवच्छिन्नं[२] ब्रह्मतत्त्वमत्र द्रव्यशब्दवाच्यम् इति कैयटस्तत्राह । भूषणसारेऽपि—ब्रह्मतत्त्वमेव शब्दरूपतया भाति इति प्रोक्तम् । एवमेवान्यत्र—

सत्यासत्यौ तु यौ भावौ प्रतिभागं व्यवस्थितौ ।
सत्यं यत्तत्र सा जातिरसत्या व्यक्तयो मताः[३] ॥ इति ।

प्रतिभावं व्यावर्तमानासत्यांशातिरेकेणानुवर्तमानं सत्प्रतीत्यवलम्बनं सत्ताख्यं ब्रह्म प्रतिपादितम् ।

तथा च यदेव तत्त्वं 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिशब्दैरद्वैतरूपं ब्रह्म सिद्धान्ते नैकवारमुक्तम्, तदेव तत्त्वं शब्दशब्देनाप्यभिधीयते । 'वाग्ब्रह्म' इत्यादिश्रुतेः । तदेव च भर्तृहरिः—'अनादिनिधनं ब्रह्म' इत्यादिनोक्तवान् ।

अत्र शब्दस्य ब्रह्मतया प्रतिपादनमिदमावेदयति—'तत्त्वं ब्रह्मणि याथार्थ्ये[४]' इति कोशाद् शब्दतत्त्वमित्यत्र तत्त्वशब्दस्य ब्रह्मरूपस्त्रिकालाबाध्यत्वरूपो याथार्थ्यरूपो वार्थः । यद्यपि सत्यादिशब्दैरेव ब्रह्म प्रसिद्धं वेदान्तसिद्धान्ते; तथापि वैयाकरणास्तु शब्दप्रधानतया शब्दशब्दे न ब्रह्म व्यवहरन्नान्दमनुभवन्ति । यथा कोऽपि जनकः स्वपुत्रम् अनेकनामधारिणं तैर्नामभिरव्यवहरन् स्वप्रियेण 'पप्पू, टिङ्कू' इत्यादिनाम्ना व्यवहरन्नानन्दमनुभवति, तद्वदिति संक्षिप्य विरमति ।



---

१. वा० प० जा० समु० का० ३३ ।

२. म० भा० 'सिद्धे शब्दार्थसम्बन्धे' इति वार्त्तिकव्याख्यानावसरे ।

३. वा० प० जा० समु० का० ३२ ।  ४. कोशः ।

# रससूत्रस्य सत्यानुभूतिपरा व्याख्या

डॉ० ब्रह्मानन्दशर्मा, भू० पू० निदेशकः,
राजस्थान-प्राच्यविद्याप्रतिष्ठानस्य
जयपुरम्

❀❀❀

अस्मन्मतानुसारेण सत्यानुभूतिः काव्यस्य स्वरूपम् । यथा—

सत्यं प्रियं हि सर्वस्य सौक्ष्म्येणास्य प्रकृष्टता ।
अनुभूतिस्ततो नूनं काव्यरूपेण संस्थिता ॥

सत्यं सर्वेषामभीष्टमिति काव्येऽप्यस्य स्थितिः । काव्यगतमेतत् सत्यं न हि भौतिकमपि तु ज्ञानरूपम् । ज्ञानस्य चास्य न हि स्वतो ज्ञातरूपता, अपि तु विषय-सम्बद्धस्य तस्य ज्ञानरूपतेत्यस्मिन् ज्ञाने पदार्थानां ज्ञानविषयत्वेन स्थितिः । ज्ञानविषय-त्वमापन्नेष्वेषु पदार्थेषु सूक्ष्मतां प्रयातेषु प्रभावकारितायाऽऽविर्भाव. । भौतिकपदार्थाना-मुदाहरणेनास्य समर्थनम् । भौतिकपदार्थास्त्रिविधाः—कठोररूपाः, द्रवरूपाः, वाष्प-रूपाश्च । कठोररूपाद् द्रवरूपस्य प्राप्तिर्द्रवरूपाच्च वाष्परूपस्य प्राप्तिः । यथा—जलं पूर्वं हिमरूपम्, ततो द्रवरूपम्, ततश्चोष्णतायोगेन वाष्पत्वाप्तिः । एष भौतिकप्रक्रियादृष्ट्या सूक्ष्मताप्राप्तेः प्रकारः । अनेन प्रभावकारिताया अतिशयः । ज्ञानविषयत्वमापन्नेषु पदार्थेषु या सूक्ष्मता, सा ज्ञानप्रक्रियादृष्ट्या, परमेषाऽपि सूक्ष्मतेत्यत्रापि प्रभावकारिताया आविर्भावः । एषा प्रभावकारीतैव काव्ये चमत्कारः । स च चित्तगतो वेगः । अनेन चमत्कारे तत्त्वद्वयम्—एकतः सत्यगता सूक्ष्मता, अपरतश्च चित्तगतो वेगस्तद्गता तीव्रता-प्रतीतिर्वा । एषा तीव्रताप्रतीतिरनुभूतिरूपेति काव्ये सत्यानुभूतिरिति वक्तुं शक्यम् ।

सौक्ष्म्यं सत्यगतं काव्य एतद् यत् प्रतिपादितम् ।
उपाया बहवस्तस्य संकीर्त्यन्ते समासतः ॥
आधानं सूक्ष्मधर्माणां सादृश्यञ्च समर्थनम् ।
आधानञ्च निमित्तस्य विरोधश्चाविरोधतः ॥
व्यापारस्य विशेषो हि व्यञ्जनासंज्ञया मतः ।
भावानामपि योगश्चेत्युपाया अत्र सम्मताः ॥

काव्ये सत्यगतसूक्ष्मताया यदाधानं तस्यानेक उपाया:। अत्र प्रथम उपायो लोकगतस्य सत्यस्य सूक्ष्मधर्माणामुपादानम्। समर्थनहेतूपादानादिभिरप्यस्या: सत्यगताया: सूक्ष्यताया: प्रकाशनमित्येतेऽन्य उपाया:। काव्ये सूक्ष्मधर्मा: शब्दगम्या इति तेऽर्थरूपा:। शब्देनार्थप्रतीति: शब्दव्यापाराश्रिता इत्यस्य व्यापारस्य सूक्ष्मतायां कश्चनातिशय इत्येषोऽपर उपाय:। काव्ये सूक्ष्मधर्माणां प्रतीतिरनुभूतिरूपा भावयोगेन चात्र तीव्रतेत्येष भावयोगोऽन्य उपाय:। सत्यस्य सूक्ष्मधर्माणामुपादाने स्वभावोक्त्यलङ्कार: समर्थनादीनामुपादानेऽर्थान्तरन्यासादयो व्यापारस्य सूक्ष्मतायाञ्च व्यञ्जनाव्यापार इति मदीये ग्रन्थे काव्यसत्यालोके प्रतिपादितमिति नेह वितन्यते। सत्यगतायां सूक्ष्मतायां भावयोगे रसादीनां स्थितिरिति तदत्र सविशेषं प्रतिपादनीयम्। ध्वनिवादिनां मतानुसारेण रसस्यालक्ष्यक्रमव्यङ्ग्यध्वनिरिति व्यपदेश इति तत्र व्यञ्जनाव्यापारस्य चारुता। अस्मन्मतानुसारेण सतोऽपि व्यञ्जनाव्यापारस्यालक्ष्यत्वेनात्राप्रतोति:। सत्यप्येवं रसस्य व्यङ्ग्यान्तरेभ्यो यो विशेष: स्वीकृतस्तत्र विभावादिप्रतिपादनम्। आन्तरिकस्य च भावस्य तत्र योग एव हेतु:। विभावादीनामस्मन्मतानुसारेण सत्यगतसूक्ष्मतायामन्तर्भाव इति भावयोगपूर्वकमेवास्या: सत्यगतसूक्ष्मताया विवेचनं युक्तियुक्तम्। सत्यगतसूक्ष्मतायां भावयोगेन सत्यानुभूतिरिति रसानुभूति: सत्यानुभूते: प्रकारविशेष इति स्थितम्। किञ्च, रससूत्रस्य रसोदाहरणानाञ्च विवेचनेनाप्येतत्साधयितुं शक्यं यद्रसानुभूते: सत्यानुभूतावन्तर्भाव:। प्रथमं रससूत्रविवेचनं प्रस्तूयते। अत्र रससूत्रं लोल्लटसम्मतञ्च, तद्विवेचनमेवमस्ति—

'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्ति:।'

विभावैर्ललनोद्यानादिभिरालम्बनोद्दीपनकारणै रत्यादिको भावो जनित:, अनुभावै: कटाक्षभुजाक्षेपप्रभृतिभि: कार्यै: प्रतीतियोग्य: कृत:, व्यभिचारिभिर्निर्वेदादिभि: सहकारिभिरुपचितो मुख्यया वृत्त्या रामादावनुकार्ये तद्रूपतानुसन्धानान्नर्तकेऽपि प्रतीयमानो रस:" ( काव्यप्रकाश: )।

अत्रानुकार्यगता नटगता वा रसप्रतीतिर्लोल्लटसम्मतेति प्रायेण विदुषां मतम्। परं न ह्येतद्युक्तियुक्तं प्रतिभाति। अत्र 'प्रतीयमान:' इति पदस्य रत्यादिक इत्यनेन पदेन सह सम्बन्ध:। अतो मुख्यया वृत्त्या रामादावनुकार्ये तद्रूपतानुसन्धानान्नर्तकेऽपि प्रतीयमानो रत्यादिको भावो रत्यादिकस्य भावस्य प्रतीतिर्वा रस:। प्रतीतिरेषा सहृदयगतेति रत्यादिकस्यानुकार्यगतत्वेन नर्तकगतत्वेन वा सहृदयगता प्रतीती रस इति लोल्लटसम्मतम्। परं रत्यादिकस्य परगतत्वेन प्रतीतिर्नहि चारुत्वावहेत्यस्य भावस्य न

हि व्यक्तिविशेषगतत्वेन प्रतीतिः स्वीकार्या। किञ्च, रामादिसम्बन्धिनि वर्ण्यविषयेऽत्र सत्यता सूक्ष्मता च स्वीकरणीया। सत्यगतां सूक्ष्मतां प्रत्यस्माकं रागसासान्यमित्यत्र चमत्कारोत्पत्तिः। एषैवास्मत्सम्मता सत्यानुभूतिः।

श्रीशङ्कुकसम्मतं रससूत्रविवेचनमेवमस्ति—

"राम एवायम्, अयमेव राम इति न रामोऽयमित्यौत्तरकालिके बाधे रामोऽयमिति रामः स्याद् वा न वाऽयमिति रामसदृशोऽयमिति च सम्यङ्मिथ्यासंशयसादृश्यप्रतीतिभ्यो विलक्षणया चित्रतुरगादिन्यायेन रामोऽयमिति प्रतिपत्त्या ग्राह्ये नटे,

सेयं ममाङ्गेषु सुधारसच्छटा सुपूरकर्पूरशलाकिका दृशोः।
मनोरथश्रीर्मनसः शरीरिणी प्राणेश्वरी लोचनगोचरं गता॥

इत्यादिकाव्यानुसन्धानबलाच्छिक्षाभ्यासनिर्वर्त्तितस्वकार्यप्रकटनेन च नटेनैव प्रकाशितैः कारणकार्यसहकारिभिः कृत्रिमैरपि तथाऽनभिमन्यमानैर्विभावादिशब्दव्यपदेश्यैः संयोगाद् गम्यगमकभावरूपाद् अनुमीयमानोऽपि वस्तुसौन्दर्यबलाद्रसनीयत्वेनान्यानुमीयमान-विलक्षणः स्थायित्वेन सम्भाव्यमानो रत्यादिर्भावस्तत्रासन्नपि सामाजिकानां वासनया चर्व्यमाणो रसः ( काव्यप्रकाशः )।

अनेन नटप्रकाशितैः कृत्रिमैरपि विभावादिर्नटेऽसतोऽपि रत्यादिकस्य भावस्य सामाजिकेन यदनुमानं स रस इति श्रीशङ्कुकस्य मतम्।

अत्रोच्यते—लोके पर्वतगतस्याग्नेर्येन धूमेनानुमानं तस्य यथार्थतैव, न तु कृत्रिमता। अत्र च विभावादीनां कृत्रिमतेत्यस्यानुमानस्यायुक्तता।

ननु सकृत् कृतमनुमानं स्वप्रभावं दर्शयत्येवेति तस्य हेतोः कृत्रिमताऽकृत्रिमता वेत्यविचारणीयमिति चेत्, न, एवंविधस्यानुमानस्य कालान्तरे बाधात्, सम्प्रति च तस्य भ्रान्तिरूपत्वात्।

किञ्च, न ह्यनुमीयमानयाऽपि रत्या चमत्कारानुभूतिः। अत्र चायं हेतुर्यदनुमानं बौद्धिकव्यापारविशेष इति तत्र चमत्काराभावः।

वस्तुसौन्दर्यबलाद्रसनीयत्वेनास्मिन्ननुमाने चमत्कार इति या वाचोयुक्तिस्तत्रायं प्रश्नः कुत एतदनुमेयगतं सौन्दर्यमिति। अनुमेया तावदत्र नटगता रतिः। सा च परगता सामाजिकस्य कृत इति नहि तत्र सौन्दर्यस्य प्रतीतिः। अनेन सौन्दर्यमेतद्वर्ण्यविषयस्य सत्यगतसूक्ष्मतामाश्रयत इति स्वीकार्यम्। एषैव अस्मत्सम्मता सत्यानुभूतिः।

भट्टनायकसम्मतं रससूत्रविवेचनमेवमस्ति—"न ताटस्थ्येन नात्मगतत्वेन रसः प्रतीयते नोत्पद्यते नाभिव्यज्यते, अपि तु काव्ये नाट्ये चाभिधातो द्वितीयेन विभावादि-साधारणीकरणात्मना भावकत्वव्यापारेण भाव्यमानः स्थायी सत्त्वोद्रेकप्रकाशानन्दमय-संविद्विश्रान्तिसतत्त्वेन भोगेन भुज्यते" ( काव्यप्रकाशः )।

अतो भावकत्वव्यापारेण विभावादीनां साधारण्येन स्थायिनोऽपि साधारणी-करणम्। साधारणीकृतस्य चास्य भोजकत्वव्यापारेण भोग इति भट्टनायकस्य मतम्।

अत्र विभावादीनां यत् साधारणीकरणं तदस्माकमपि सम्मतम्; परमस्य साधारणीकरणस्य को हेतुरित्यपि विचारणीयम्। अस्य चैतदेवोत्तरं यत्सत्यगता सूक्ष्मताऽत्र हेतुः। अनया सूक्ष्मतया सत्यानुभूतिरत्र दुर्वारा। भट्टनायकमतानुसारेण भाव्यमानस्य स्थायिभावस्य महत्त्वमिति तदायत्ता रसानुभूतिस्तस्य सम्मता। अत्र यो भोगव्यापारः, स तु चित्तगतोऽवस्थाविशेषः। अस्य च सत्यानुभूतिगताया अवस्थाया नहि कोऽपि विशेषः।

श्रीमदाचार्याभिनवगुप्तसम्मतं रससूत्रविवेचनमेवमस्ति—"लोके प्रमदादिभिः स्थाय्यनुमानेऽभ्यासपाटववतां काव्ये नाट्ये च तैरेव कारणत्वादिपरिहारेण विभावना-दिव्यापारवत्त्वादलौकिकविभावादिशब्दव्यवहार्य्यैर्ममैवैते शत्रोरेवैते, न ममैवैते न शत्रो-रेवैते, न तटस्थस्यैवैत इति सम्बन्धविशेषस्वीकारपरिहारनियमानध्यवसायात् साधा-रण्येन प्रतीतैरभिव्यक्तः सामाजिकानां वासनात्मतया स्थितः स्थायी रत्यादिको नियत-प्रमातृगतत्वेन स्थितोऽपि साधारणोपायबलात् तत्कालविगलितपरिमितप्रमातृभाववशो-न्मिषितवेद्यान्तरसम्पर्कशून्यापरिमितभावेन प्रमात्रा सकलसहृदयसंवादभाजा साधा-रण्येन स्वाकार इवाभिन्नोऽपि गोचरीकृतश्चर्व्यमाणतैकप्राणो विभावादिजीवितावधिः पानकरसन्यायेन चर्व्यमाण पुर इव परिस्फुरन् हृदयमिव प्रविशन् सर्वाङ्गीणमिवा-लिङ्गन्नन्यत् सर्वमिव तिरोदधद् ब्रह्मास्वादमिवानुभावयन्नलौकिकचमत्कारकारी शृङ्गारादिको रसः।

स च न कार्यः, विभावादिविनाशेऽपि तस्य सम्भवप्रसङ्गात्, नापि ज्ञाप्यः, सिद्धस्य तस्यासम्भवात्. अपि तु विभावादिभिर्व्यञ्जितश्चर्वणीयः। कारकज्ञापकाभ्यामन्यत् क्व दृष्टमिति चेत्, न, क्वचिद् दृष्टमित्यलौकिकत्वसिद्धेर्भूषणमेतन्न दूषणम्। चर्वणानिष्पत्त्या तस्य निष्पत्तिरुपचरितेति कार्योऽप्युच्यताम्।.....................उभयाभावस्वरूपस्य चोभयात्मकत्वमपि पूर्ववल्लोकोत्तरतामेव गमयति, न तु विरोधम्" (काव्यप्रकाशः)।

अत्राभिनवगुप्तसम्मतं साधारणीकरणमस्माकमपि सम्मतम्। अस्य साधारणीकरणस्य को हेतुरिति विचार्यमाणे विभावादिगतं सत्यं सौक्ष्म्यञ्चात्र हेतुरिति तत्प्रयोज्या सत्यानुभूतिरत्र दुर्वारा। अभिनवगुप्तमतानुसारेण वासनात्मतया स्थितः सम्प्रति चाभिव्यक्तो रत्यादिको रसः। रत्यादिकस्य वासनात्मतया स्थितिस्तस्याभिव्यक्तिश्चास्माकमपि सम्मता; परं महत्त्वमत्रैतद्रत्यादिकपरामृष्टाया विभावादिगतायाः सत्यताप्रतीतेरित्यत्र सत्यानुभूतिः। अभिव्यक्तस्य रत्यादिकस्य कथं रसरूपतेत्यत्र विचारणीयम्। रतिर्भिन्ना रसश्च भिन्नः। अतो न हि प्रथमस्यान्यरूपता। रतेरभिव्यक्तावपि न हि रतित्वस्य हानिः। किञ्चात्र साधारणीकरणेऽपि रतित्वमव्याहतमिति न ह्येकस्यान्यरूपता। यदि च रत्यादिकस्याभिव्यक्तौ रतित्वादिकस्य हानिः स्यात्, तर्हि शृङ्गारादिषु रसेषु भेदस्य किं विनिगमकं स्यादिति रतित्वादिकस्य स्थितिरत्रापरिहार्या। किञ्च, क्रोधादयो रजोगुणप्रधाना रसश्च सत्त्वगुणप्रधान इति कथमेषां रसरूपता। रत्यादिकस्याभिव्यक्तौ रतित्वादिकस्य सत्त्वेऽपि तत्त्वान्तरस्य योग इति रसानुभूतिसम्भावनेति यदुच्यते, तत्र किमिदं तत्त्वान्तरमिति विचारणीयम्। आन्तरिकमेतद् बाह्यं वा ? यदि बाह्यं तर्हि विभावादिकमेवैतद् भवितुमर्हति। यदि चान्तरिकं तर्हि आन्तरिकस्यापि तत्त्वस्य न हि बाह्यतत्त्वाभावे स्फूर्तिरिति किमपि बाह्यतत्त्वमस्य प्रयोजकत्वेन स्वीकार्यम्। एतद्विभावादिकमेव भवितुमर्हति। अत्राप्यनुभूतिप्रयोजकत्वाय कश्चन विशेषः स्वीकार्यः। एष च विशेषो विभावादिगता सत्यता सूक्ष्मता च। अस्य विशेषस्यैतज्जन्य आन्तरिकतत्त्वेऽपि परिस्फुरणमिति सत्यानुभूतिरत्रानायत्या आयाता।

केषाञ्चन विदुषां शान्तभक्त्यादयो रसत्वेन सम्मताः। श्रीमदाचार्याभिनवगुप्तानां शान्तो रसत्वेन सम्मतः। एषु रसेषु शमादीनामभिव्यक्तानां रसरूपता भवितुमर्हति। अत्र चायं हेतुर्यच्छमादयोऽलौकिकाः, रसोऽपि चालौकिक इत्येषां रसरूपताग्रहणे नहि किमप्यनौचित्यम्। परमेते रसा अध्यात्मशास्त्रगता इति काव्यशास्त्र एषां विवेचनमयुक्तम्। अनेन शान्तादिगता सरणिर्नात्रावलम्बनीया।

रसस्य ब्रह्मानन्दसदृशत्वं यदत्र प्रतिपादितम्, तत्रोच्यते—

कथं रसः स्फुटे भेदे ब्रह्मानन्दसहोदरः।
वासना याऽत्र जागर्ति ब्रह्मणि सा विलीयते॥

अस्य सादृश्यस्य क आधार इति प्रथमं विचारणीयम्। द्वयोः पदार्थयोर्मुख्यतः सादृश्यप्रतीतिस्तदैव सम्भाव्यते, यदा सादृश्यप्रतीतयेऽनयोः साक्षात्कारः स्यात्। परमात्मानुभूते रसानुभूतेश्चेति द्वयोरेकेन जनेन साक्षात्कार एव न सम्भवति।

तच्चेत्थम्—रसानुभूतिर्वासनाजन्याऽऽत्मानुभूतौ च वासनानामभाव इति वासनावता जनेनाऽऽत्मानुभूतिर्वासनारहितेन च जनेन रसानुभूतिर्न सम्भाव्यते। ननु आत्मानुभूता-वीश्वररतिरित्यत्रापि वासनासद्भाव इति चेत्, न, एषा वासना लौकिकवासनाभ्यो भिन्ने-त्यस्याः सद्भावे तासामुच्छेदात्, तासाञ्च सत्त्वेऽस्या आविर्भावाभावात्। किञ्चैषाऽऽत्मानु-भूतिर्भक्तिमार्गसम्मता। ज्ञानमार्गेऽस्या अपि वासनाया अभावः। अथ रसवादिन एतद् वक्तुं शक्नुवन्ति यत् कृतात्मसाक्षात्कारेण जनेन पूर्वानुभूतस्य रसस्य स्मरणं भवतीति, तेन सहाऽऽत्मानुभूतेः सादृश्यसम्भावना। अत्रोच्यते—वासनानामुच्छेदे कुतस्तदाश्रिताया रसानुभूतेः स्मरणस्याप्यवकाशः।

एवं सति रसवादिभिरेतदेव वाच्यं यदात्मानुभूतेः प्रागप्यात्माभिमुखस्य साध-कस्याऽऽत्माभिमुखत्वजन्या भवति काप्यनुभूतिः। अस्यामनुभूतौ नहि वासनानामुच्छेद इत्यनया सह रसानुभूतेः सादृश्यसम्भावना। कालान्तरवर्तिनी तावद् आत्मानुभूतिरस्या एवानुभूतेश्चरमा परिणतिरित्यनयापि सह रसानुभूतेः सादृश्यमिति ज्ञेयम्। अस्मन्मता-नुसारेणैवंविधं सादृश्यं गौणमेव, न मुख्यम्।

द्वयोरनुभूत्योः सादृश्यस्थापनाय रसवादिनां प्रायेणैष तर्को यत् कृतात्मसाक्षा-त्कारेण जनेनाऽऽत्मानुभूतेर्यद् वर्णनं तेन सह रसानुभूतेस्तुलनेत्यत्र सादृश्यप्रतीतिः। अत्रोच्यते—'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह'[1] इति वचनानुसारेणात्मानुभूति-र्वाग्विषयातीतेत्येतद् वर्णनं नात्मानुभूतेरपि तु कस्या अप्यवरावस्थायाः, तत्रापि नहि मूलतत्त्वस्यापि तु तत्सहकारितत्त्वानां वाचोपस्थितिः। अनेनानयोरनुभूत्योर्यत् सादृश्यं तद् गौणमेव।

किञ्च, ब्रह्म सत्यं जगन्मिथ्येत्यद्वैतवेदान्तसिद्धान्तानुसारेण ब्रह्मेतरा प्रतीति-र्मिथ्या। रसस्यास्यामेव प्रतीतावन्तर्भाव इति तस्या मिथ्यात्वम्। मिथ्याप्रतीतेश्च नहि सत्यस्वरूपयाऽऽत्मानुभूत्या सह सादृश्यसम्भावना। अत एव पण्डितराजजगन्नाथेन 'रत्याद्यवच्छिन्ना भग्नावरणा चिदेव रसः' इत्यभिदधता रसे चितो भग्नावरणत्वेन सह रत्याद्यवच्छिन्नत्वमपि स्वीकृतम्। अवच्छिन्नत्वमेतदावरणापरपर्यायम्। किञ्च, भग्नावरणत्वेनापि नहि नियतत्वेनैतदभिप्रेतं यदखिलानामावरणानामत्र भङ्ग इति जातेऽपि कस्मिंश्चिदावरणभङ्गेऽन्येषामावरणानामभग्नतया स्थितिसम्भावना।

सांख्यसिद्धान्तानुसारेण यद्यपि पुरुषव्यतिरिक्तस्य चित्तस्यापि सत्त्वम्, तथापि चित्तगतस्यानुभवस्य पुरुषगतानुभवरूपतया ग्रहणमज्ञानाश्रितम्। रसानुभूतिश्च चित्त-

---

१. तै० उ० २।४।

गतेति तत्त्वदृष्ट्याऽज्ञान एवान्तर्भावान्नास्या आत्मानुभूत्या सह सादृश्यम् ।

शैवदर्शनानुसारेण तावदखिलस्य विश्वस्य परमशिवाभासरूपता । रसानुभूतौ च विभावादिविमर्शप्राधान्यमित्यात्मानुभूत्या रसस्य भेदः स्पष्ट एव ।

ननु रसे विभावादीनां साधारण्येन प्रमातुर्व्यष्टित्वपरिहार इति तस्य विगलितपरिमितप्रमातृभावत्वम् । आत्मानुभूतावपि प्रमातुर्विगलितपरिमितप्रमातृभावतेति रसानुभूतेरात्मानुभूत्या सह सादृश्यसम्भावनेति चेत्, न, साधारणीकरणप्रयोज्यस्यास्य विगलितपरिमितप्रमातृभावस्य तत्त्वदृशा पारिमित्य एवान्तर्भावात् । अत एवास्माभिः साधारणीकरणे सामान्येन सह विशेषोऽपि स्वीक्रियये, यथा—

सत्ये सूक्ष्मतया जाता ह्यत्र साधारणीकृतिः ।<br>
सामान्यमनयाऽऽयातं विशेषोऽप्यत्र कश्चन ॥

किञ्चास्य विशेषस्य स्वीकाराभावेऽपि सामान्यस्यानेकाः स्तराः स्वीकरणीयाः । रसे नैषां स्तराणां चरमावस्थेत्यत्रत्यस्य सामान्यस्योत्तरवर्तिसामान्यापेक्षया विशेषरूपतेत्यात्मानुभूत्या सह नहि रसानुभूतेः सादृश्यसम्भावना । एवं सति डॉ० के० कृष्णमूर्तेर्निम्नलिखितं कथनं नैव युक्तियुक्तम्—

"In aesthetic axperience we have an approximation with the highest transcendental rapture in to far as the empirieal self rises above its normal limitation of primordial ignorance[1]."

अभ्यासवैराग्याभ्यां तन्निरोध[2] इति वचनानुसारमात्मानुभूतिप्राप्तये मुमुक्षोर्योऽभ्यासः, स वैराग्योन्मुखः, रसानुभूतिप्राप्तये सहृदयस्य योऽभ्यासः, स काव्यानुशीलनरूपः[3] । काव्ये च लोकगतस्य सत्यस्य सूक्ष्मं चित्रणमित्यस्मिन्नेव सत्ये सहृदयस्य पुनः पुनः प्रवृत्तिरूपोऽभ्यासः ।

अभ्यासवैराग्याभ्यां याऽऽत्मानुभूतिः, सा निरवधिः, रसानुभूतिश्च विभावादिजीवितावधिरित्यत्र कालभेदः । कालभेदश्चायं चेतनारोहभेदजन्य इति स उभयोरनुभूत्योः स्वरूपभेदपर्यवसायीति स्थितम् । अनेन रसानुभूतेर्नात्मानुभूत्या सह सादृश्यमिति स्पष्टम् । यदि चैतत्सादृश्यप्रदर्शनं रसानुभूतेर्लौकिकानुभवाद् वैलक्षण्यमात्रपर्यवसायि, तर्हि सत्यानुभूतावपि तद्वैलक्षण्यमिति न रसानुभूतेः सत्यानुभूतेः कोऽपि विशेषः । अन्यद् यत्किमपि विरुद्धधर्मताप्रदर्शनपुरस्सरं रसस्य लोकोत्तरत्वमभिनवेन प्रस्तुतम्, तस्य सत्यानुभूतावपि संगतिरिति रसस्यात्रैवान्तर्भावः ।

---

१. श्रीविद्याधरशास्त्रिस्मृतिग्रन्थात्; २. योगदर्शनम्; ३. अभिनवभारती ।

सम्प्रति रसोदाहरणविवेचनं प्रस्तूयते—

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद् भूयसा पूर्वकायम्।
दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद् वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥

रसवादिनामनुसारेणैतद्भयानकरसस्योदाहरणमित्यत्र रसानुभूतिः। अस्मन्मतानुसारेण तावदेतन्मृगविशेषस्य सत्यं सूक्ष्मञ्च वर्णनमित्यत्र सत्यानुभूतिः।

अलङ्कारवादिनामनुसारेणात्र स्वभावोक्त्यलङ्कारः। अस्य चास्मन्मतानुसारेण सत्यानुभूतावन्तर्भावः।



# सर्वज्ञात्ममुनिमते जीवस्वरूपविमर्शः

**पण्डितश्रीरामनारायणत्रिपाठी,**

जगदीशपुरम्, भीटी ( शिवपुरम् )

गोरखपुर

❀ ❀ ❀

संसारेऽस्मिन्नैतादृशाः सन्ति केचन ये स्वात्मनाऽपरिचिताः सन्ति। आबालवृद्धा आपामरपण्डिताः पुरुषाः स्त्रियस्तिर्यग्योनयः पशुपक्षिप्रभृतयः सर्वे प्राणिन आत्मानं सम्यग् जानन्ति। 'अहं करोमि', 'जानामि', 'ममेदम्' इत्यादिरूपैरहर्निशं व्यवहरन्ति, तद्रक्षायै सर्वतोभावेन प्रयतन्ते, तदर्थमेव च भयत्रासादिकं वहन्ति। सर्वापेक्षया स्वात्मानं प्रियत्वेनानुभवन्ति। तस्मात् तत्सत्तायां न कापि विचिकित्सा केषाञ्चित्, किन्तु तत्स्वरूपविषये त्ववश्यमेव मतभेदाः सन्ति।

आत्मनः (जीवस्य) स्वरूपं श्रुतिस्मृतिपुराणागमदर्शनादिषु बहुधा वर्णितम्। तत्र स्वस्वसिद्धान्तानुसारेण सर्वाणि दर्शनानि नास्तिकास्तिकानि चार्वाकजैनबौद्ध-सांख्ययोगन्यायवैशेषिकमोमांसावेदान्ताभिधेयानि विशेषरूपेण विवेचयन्ति।

तत्र वेदान्तदर्शने अद्वैतद्वैतविशिष्टाद्वैतद्वैताद्वैतशुद्धाद्वैतादयः सर्वे सम्प्रदायाः प्राधान्येन जीवेश्वरस्वरूपं साधकबाधकयुक्तिभिः सम्यग् व्याकुर्वन्ति, तत्सत्तां च प्राबल्येन समर्थयन्ते। तेष्वद्वैतसम्प्रदाये जीवस्वरूपनिरूपणे प्रतिबिम्बाभासावच्छेददृष्टिसृष्टि-वादानालम्बन्त आचार्या विवरणवार्त्तिकभामतीकारानुयायिनः प्राचीनसम्प्रदायविदश्च।

सम्प्रति सर्वज्ञात्ममुनेर्जीवस्वरूपविषयकं मतमाश्रित्य तत्स्वरूपं निरूपयितुं प्रयते यत् संक्षेपशारीरकस्य तृतीयाध्याये मुनिना वर्णितम्।

नायं जीवः पुरुषकरपादादिवत् परस्य ब्रह्मणोंऽशः, 'निष्कलं निष्क्रियं शान्तम्[१]' इत्यादिश्रुत्या ब्रह्मणो निष्कलत्वप्रतिपादनात्। न च 'पादोऽस्य विश्वा भूतानि[२]' इति श्रुतिः, 'ममैवांशो जीवलोके[३]', 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्[४]' इति स्मृतिश्च विरुध्येते, औपाधिकपरत्वात्। यथा जलसूर्यकः सूर्यांशो मृषाभेदवान्, यथा च घटाकाश आकाशांशो मृषाभेदवान्, जलघटोपाधिवशादंश इव प्रतिभाति, तथैवात्रापि निरंशस्य ब्रह्मणोऽविद्योपाधिवशादंशः कल्पितोऽस्ति।

---

१. श्वे० उ० ६।१९; २. छा० उ० ३।१२।६; ३. गी० १५।७; ४. गी० १०।४२।

वस्तुतस्तु सावयवे पदार्थेऽंशांशिभावोक्तिः संगच्छते, न तु निरवयवस्य ब्रह्मणोऽवयवः संभवति। सावयवत्वे तु तस्य विनाशप्रसङ्गोऽनिष्टः प्रसज्येत। अपि त्वत्र 'यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवैतस्मादात्मनः सर्वं एत आत्मानो व्युच्चरन्ति[१]' इति वह्निविस्फुलिङ्गन्यायेनांशांशिभावोक्तिः। यद्यपि वह्नौ भेदः परिमाणश्च स्वगतं न दृश्यते, तथाप्युपाधिगतमेव तदुभयं तत्राप्युपचर्यते। अयमग्निरस्मादग्नेर्भिन्नः, अयमस्य विस्फुलिङ्गः, अयमस्मादल्प इति। एवम् 'अस्थूलमनण्वह्रस्वमदीर्घम्[२]' इति श्रुत्या चतुर्विधपरिमाणशून्ये ब्रह्मणि ममैवांश इत्यंशांशिभावेन भेदाऽल्पत्वमहत्त्वादिसर्वमुपचारा-दौपाधिकं ध्येयम्। तथा च श्रुतिः—'बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोपि दृष्टः[३]' इति 'समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः'[४] इति च। तथा च विस्फुलिङ्गो वह्निरेव, न तु वह्न्यंशः। एवं जीवोऽपि ब्रह्मैव, न तु ब्रह्मांशः। 'ब्रह्मदाशा ब्रह्मेमे कितवा उत[५]' इति दाशादिष्वपि पिण्डेषु गोत्वस्येव कात्स्न्र्येनैकैकस्मिन् ब्रह्मभावपरिसमाप्तिदर्शनात्, 'स एष इह प्रविष्ट आनखाग्रेभ्यः'[६], 'तत् सृष्ट्वा तदेवानु-प्राविशत्[७]' इत्यादिश्रुतिभ्य ईश्वर एव शरीरधारीति निश्चितत्वाच्च। अन्यथा निरंशे ब्रह्मण्यंशांशिभावकल्पनाया अयोग्यत्वात्। अत्रांशशब्दो रूपभेदपरकत्वेन ब्रह्मानन्त्यपर-कत्वेन अंश इव परकत्वेनोन्नेयो यतो ह्यत्राविद्याकृतोपाधिपरिच्छिन्न एकदेशोंऽश इव कल्पितः।

नापि जीवो दध्यूषरालङ्कारामत्र फेनवत् परस्य ब्रह्मणो विकारः, विकारित्वे सति विनाशित्वेनानित्यत्वापातात् ( कृतहानाकृताभ्यागमप्रसङ्गात् )। तथा सति 'अजो नित्यः शाश्वतोऽयं पुराणः[८]' इत्यादिश्रुतिवचनविरोधाच्च।

न च जीवो घटात् पट इव ब्रह्मणो भिन्नः, 'नान्यतोऽस्ति द्रष्टा[९]', 'तत्त्वमसि[१०]', 'सोऽयमात्मा[११] ब्रह्म', ऐतदात्म्यमिदं[१२] सर्वम्', 'अहं ब्रह्मास्मि[१३]' इत्याद्यभेदपरक-श्रुतिविरोधात्।

वस्तुतस्तु जीवस्य ब्रह्मणा सहात्यन्ताभेद एव वास्तवः, भेदप्रतीतिस्त्वाविद्यिकी सृष्ट्यादौ परमेश्वरस्य मायाशबलितं स्वरूपमेव 'बहु स्याम[१४]' इत्येवं समीक्षणपूर्वकं

---

१. बृ० उ० १।१।२०; २. बृ० उ० ३।७।८; ३. श्वे० उ० ६।८।
४. बृ० उ० १।३; ५. अथर्वसं०; ६. बृ० उ० १।४।७।
७. तै० उ० २।६।१; ८. क० उ० २।१।१८; ९. बृ० उ० ३।७।२३।
१०. छा० उ० ६।१४।३; ११. छा० उ०; १२. छा० उ० ६।८।७।
१३. बृ० उ० १।४।१०; १४. छा० उ० ६।२।३।

मायिकं भूतसूक्ष्मजातं सृष्ट्वा 'हन्ताहमिमास्तिस्रो देवताः[१]', 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि[२]' इति विमृश्य पञ्चीकृत्य च 'तत् सृष्ट्वा तदेवानुप्राविशत्[३]' इत्यादिना जीवत्वेनावस्थितम्। न च तत्रान्तर्यामिभावेनैव परमात्मनः प्रवेशोऽभिहितः, न जीवभावेन, 'प्राणन्नेव प्राणो नाम भवति[४]' इत्यादिश्रुत्या प्राणनादिव्यापारवत्त्वप्रतिपादनविरोधात्। न चात्रार्थवाद एवाङ्गीकरणीयः प्रमाणान्तरविरोधाभावात्। तस्मात् स्वार्थपरेष्वभेदप्रतिपादकश्रुतिवचनेषु सत्सु न जीवः परमात्मनोऽतिरिक्तोऽधिको भिन्नो विकारो वा सिध्यति, अपि तु स्रष्टुरविकृतस्य परमेश्वरस्य स्वसृष्टजलभेदेष्वविकृतस्य सूर्यस्य प्रवेशवत् प्रवेश एव, स्रष्टृत्वेनोपलक्षितं सर्वं तु तत्स्थानमेव।

अपि चात्रात्मनः प्रत्यक्चैतन्यलक्षणात् स्वस्वरूपाद् भिन्नमागमापायि यत् किमपि वस्तु प्रतिभासमानतया वर्तते, तत् सर्वं भिन्नरूपतया स्फुरणं कूटस्थसाक्षि संविदायत्तं न स्वप्रकाशम्। अतः सर्वं दृश्यमात्मनि कल्पितमेवानुमानादवगच्छ।

अनुमानप्रकारश्चेत्थम् – विमतं प्रत्यक्चैतन्यमात्रादधिकं रूपं प्रत्यक्चैतन्यैकरसाधीनप्रकाशं भवितुमर्हति, प्रत्यक्चैतन्यातिरिक्तत्वाद् आगमापायित्वाद् बुद्ध्यादिवत्। तथा च दृश्यस्य कल्पितत्वात् कल्पितस्य चावस्तुत्वात् प्रत्यक्चैतन्यस्वरूप एव जीवः, न तदंशस्तद्विकारोऽन्यो वा।

नन्वेवं जीवब्रह्मणोरत्यन्ताभेदे सिद्धे सति ब्रह्मणोऽप्यज्ञानाश्रयत्वेनाज्ञत्वं संसारित्वं सिध्यति, तच्चानुभवविरुद्धं न्यायविरुद्धं च ब्रह्मणः, संसारित्वाद्यननुभवात्, अनुभूतान्यनिष्ठधर्मस्यान्यत्र कल्पनाया अन्याय्यत्वादिति चेत्, न. ब्रह्मशब्देन चिन्मात्रविवक्षिते सत्यदोषात्, न जानामीत्याद्यनुभवाच्च। महो (अज्ञानम्) संसारोऽपि चिन्मात्राश्रय एव, न त्वद्वैताश्रयः, (ब्रह्माश्रयः) ब्रह्माश्रयविषयकानुभवाभावात्। चैतन्याश्रयत्वेऽपि सूक्ष्मशरीरोपाधिकचैतन्यस्याज्ञानाश्रयत्वं न संभवति। अतोऽज्ञानस्य ब्रह्माश्रयत्वं द्वितीयाध्याये प्रोक्तम्—'भगवति परमात्मन्यद्वितीये[५]'।

अपि च—

'ब्रह्मैव संसरति मुच्यत एतदेव..........
स्वाज्ञानतः स्वमहिमप्रतिबोधतश्च'[६]।

---

१. छा० उ० ६।३।२; २. छा० उ० ६।३।२; ३. तै० उ० २।६।१।
४. बृ० उ० १।४।७; ५. सं० शा० १।१७२ तथा द्रष्टव्यं तत्रैव १।३०।
६. सं० शा० ३।७।

एतेन यदुक्तं यद् ब्रह्मैवाज्ञानाश्रयः, तस्यायमेवाशयः—बुद्ध्याद्युपाधिधारी चेतनोऽज्ञानाश्रयो भवितुं नार्हतीति।

किं नाम जीवत्वम् ? अज्ञानस्याद्वैताश्रयत्वे (ब्रह्माश्रयत्वे) किमपि प्रमाणं नोपलभ्यते—ब्रह्म मूढमिति। नानुभवो भवति अतो नानुभवप्रमाणम्, नापि तादृशप्रतिपादकः कश्चनागमो विद्यते; अपि तु सर्वज्ञत्वाद्यावेदकागम एवोपलभ्यते। नाप्यनुमानादिप्रमाणान्तरं वा। न वा जड एवाज्ञानाश्रयः, जडत्वात्। तस्मात् परिशेषात् प्रत्यक्प्रकाशविषयाश्रयमेवाज्ञानमस्ति।

नन्वज्ञानस्य चिन्मात्राश्रयत्वस्वीकारे चैतन्यस्य जीवस्याप्यज्ञानाश्रयत्वं सुतरां सिध्यति। तथा चैतन्यस्य ब्रह्मणोऽज्ञानाश्रयत्वे जीववत् तस्याप्यज्ञत्वादिदोषापत्तिरिति चेत्, अत्रोच्यते युक्तिकुशला जना जीवत्वविशिष्टस्य चैतन्यस्याज्ञानाश्रयत्वं नाभिवाञ्छन्ति, नाप्यज्ञानाश्रयकोटिनिविष्टत्वं जीवस्य संभावयन्ति, अयुक्तत्वात्। यतो ह्यज्ञानमेव जीवत्वम्, अज्ञानाधीनसत्ताकत्वात्। यावदज्ञानं तावज्जीवत्वम्, अज्ञानाभावे जीवत्वाभाव इति। तथा सति न ह्यज्ञानं (जीवत्वम्) अज्ञानाश्रयं भवितुमर्हति, स्वाश्रयदोषप्रसङ्गात्। यथान्धकारो नह्यन्धकाराश्रयो भवति। अतोऽज्ञानप्रयोज्यस्य जीवत्वस्याज्ञानान्तरभावित्वादज्ञानाश्रयकोटिनिविष्टत्वं न युक्तं जीवस्य। तस्माज्जीवत्वस्याज्ञानाश्रयत्वविशेषणमिति परमतं न समीचीनम्। अज्ञानस्य चिन्मात्राश्रयत्वे न हि पूर्ववदात्माश्रयदोषः, द्वयोर्भिन्नवस्तुत्वात्। नापि कोपि न्यायविरोधो नाप्यनुभवविरोधो वा। एतेन जीवाश्रितैवाविद्या ब्रह्मविषयेति निरस्तम्। तस्माद् ब्रह्मणोऽन्यस्य न संसारः; किन्तु ब्रह्मण एव स्वाविद्याकल्पितपुर्यष्टकोपाधिद्वारा संसार इति सिद्धम्। तथा च स्मृतिः—

पुर्यष्टकेन लिङ्गेन प्राणाद्येन स युज्यते।
तेन बद्धस्य वै बन्धो मोक्षो मुक्तस्य तेन च[१] ॥ इति।

पुर्यष्टकञ्च—पञ्च कर्मेन्द्रियाणि इत्येका पुरी, पञ्च ज्ञानेन्द्रियाणि द्वितीया पुरी, मनोबुद्धिरहङ्कारश्चित्तमिति चतुष्टयं तृतीया पुरी, प्राणादिपञ्चकं चतुर्थी पुरी, वियदादिपञ्चकं तत्कार्यं भोगायतनं शरीरं भोग्यादयश्च विषयाः पञ्चमी पुरी, कामः षष्ठी पुरी, कामो हि—इच्छाभिलाषरागेत्यपरपर्यायः संसारस्य मुख्यप्रयोजकः कर्मप्रवर्तकः कारणात्मकः। कर्म सप्तमी पुरी। कर्म च धर्माधर्मलक्षणम्, इदमपि संसारस्य मुख्यं

---

१. उद्धृता—ब्र० सू० भा० २।४।७।

प्रयोजकं कार्यात्मकम् । तमोऽष्टमी पुरी । तमो ह्यज्ञानं भ्रान्तिज्ञानं वा[1] । इदमेवोक्तानां पुरीणां निदानं कामप्रवर्तकम् । अष्टानां समूहोऽष्टकं पुरीणामष्टकं पुर्यष्टकम् । पुरवत् स्वामिनो भोगहेतुत्वादेतत् सर्वमपि पुरीत्युच्यते । अत्राद्याश्चतस्रो भोगोपकरणानि, पञ्चमी भोगोपकरणात्मिका भोग्या च, अन्त्यास्तिस्रो निमित्तानि ।

नन्वष्टभ्य एताभ्योऽतिरिक्तयोः 'तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च[2]' इति श्रुत्या विद्यापूर्वप्रज्ञयोः संसारहेतुत्वे प्रतिपादिते सति कथं पुर्यष्टकस्यैव तद्धेतुत्वमुक्तमिति चेत्, नात्र यदेकवाक्यतया सहपाठाच्च कर्मपदेनैव तयोः संगृहीतत्वात् । एकस्मिन्नेव श्रुतिवाक्ये बन्धप्रयोजकतया त्रयाणामुपसंग्रहेण सादृश्यात् कर्मणा तयोः संग्रहणम्, अथवा एकस्मिन् पूर्वोक्ते श्रुतिवाक्ये कर्मणा सह विद्यापूर्वप्रज्ञयोः पाठेन बन्धप्रयोजकत्वेन समानार्थत्वात् (तुल्यप्रयोजनवत्त्वात्) तयोः कर्मणा संग्रहणम् । अर्थात् पुर्यष्टके कर्मपदम् अजहल्लक्षणया विद्या पूर्वप्रज्ञापरम् । लक्षणायां मुख्यार्थसंबन्धस्तु बन्धप्रयोजकत्वम्, यतो हि श्रुतौ विद्यादित्रयं बन्धकारणतयोक्तम् ।

ननु पुर्यष्टके तमोहेतुत्वमुक्तं संसारस्य, तर्हि कर्मणा संगृहीताया विद्याया हेतुत्वं कथं संगच्छेत, द्वयोः परस्परविरुद्धत्वादिति चेत्, उच्यते—न ह्यत्र विद्यापदेन ब्राह्मी विद्या गृहीता, अपि तु सांसारिकी । भवति च संसारमोक्षो ब्रह्मविद्यया, न तु सांसारिकविद्यया । ननु 'पुण्यः पुण्येन कर्मणा भवति पापः पापेन[3]' इति श्रुत्या शुभाशुभकर्मण एव संसारहेतुत्वे सिद्धे कथं विद्यापूर्वप्रज्ञयोस्तद्धेतुत्वमिति चेत्, न, कर्मैव तद्धेतुरित्येतादृशान्ययोगव्यवच्छेदकैवकारघटितवचनालाभात् पूर्वोक्तश्रुतौ त्रयाणामपि संसारहेतुत्वप्रतिपादनाच्च ।

तत्र विद्या नाम ज्ञानमात्रं मानसम् । सा चतुर्विधा । तत्रैका शास्त्रविहिता देवताद्युपासनरूपा, अन्या विहितसमा विधिं विनापि यदृच्छयोपपन्ना गङ्गादिदर्शनरूपा श्रेयस्करी, अपरा शास्त्रनिषिद्धाऽसच्छास्त्रविषया, चतुर्थी निषिद्धतुल्या बीभत्सितशवादिविषया सद्योदुःखकरी । एताश्चतस्रो विद्याकर्मवत् संसारारम्भिका । कर्मापि चतुर्विधम् । शास्त्रविहितमेकम्, यथा यागादि, विहितसममपरमाहारविहारादि, शास्त्रनिषिद्धं त्वन्यद्धिंसादि, निषिद्धसममितरत् ।

पूर्वप्रज्ञा चापि चतुर्विधा, यतो हि पूर्वप्रज्ञा नामानेकजन्मसु सञ्चिता भोगवासना

---

१. सं॰ शा॰ ३।१६ तथा पैं॰ उ॰ २ अ॰—अथ ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकं प्राणादिपञ्चकं वियदादिपञ्चकमन्तःकरणचतुष्टयं कामकर्मतमांस्यष्टपुरम् ।

२. बृ॰ उ॰ ४।४।२;　　　३. तत्रैव—४।४।५ ।

या विद्याकर्मजन्या संस्काराख्या, सापि कारणचातुर्विध्याच्चतुर्विधा, कार्यस्य कारणानुविधायित्वात् । एवं चातुर्विध्यं तस्या विहिताविहितनिषिद्धानिषिद्धभेदात् ।

ननु 'लिङ्गमनो यत्र निषक्तमस्य[१]', 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः[२]' इत्यादिश्रुतिभिर्लिङ्गशरीरस्य जीवोपाधित्वमुच्यते । तत् किं पुर्यष्टकमाहोस्विदन्यद् वा ? तत्रोच्यते—क्वचित् 'स वा अयमात्मा ब्रह्म विज्ञानमयः' इत्यादौ पुर्यष्टकस्यापि प्रत्यगात्मसद्भावसूचकत्वाल्लिङ्गशब्देन लक्षणया वृत्त्या पुर्यष्टकमप्युच्यते, न तु लिङ्गयति नियमेन स्वधर्मं ज्ञापयतीति मुख्ययाऽभिधया वृत्त्या । मुख्यार्थत्वेन सप्तदशकमेव लिङ्गशब्देन लोके प्रसिद्धम् । तस्य सप्तदशकस्य पुर्यष्टकेऽपि सत्त्वात् । पुर्यष्टकमप्युपचारेण लिङ्गमुच्यते ।

अनयोर्मध्ये विशेषस्त्वयान्—मोक्षं यावत् प्रतिजन्म सप्तदशकस्य लिङ्गशरीरस्यापरिवर्तनपूर्वकमनुवर्तनं भवति पुर्यष्टके प्रतिजन्म विद्याकर्मपूर्वप्रज्ञातमोभूतानां विपरिणामः ।

लिङ्गशरीरम्—कर्मेन्द्रियाणि पञ्च, चित्ताहङ्कारौ बुद्धावेकीकृत्य मनोबुद्धिरित्यन्तःकरणद्वयम्, प्राणादयो वायवः पञ्च—इत्येतत् सप्तदशात्मकं लिङ्गशरीरमित्युच्यते । तदेव सूक्ष्मशरीरमपि कथ्यते । अनेन लिङ्गशरीरेणावच्छिन्नश्चिदात्मा जीवपदवाच्यो भवति ।

एवम्भूतस्य लिङ्गशरीरस्य जीवनियामकत्वेऽपि सति न तावन्मात्रस्य संसारहेतुत्वं सिध्यति; अपि तु पुर्यष्टकमेव संसारहेतुः । पुर्यष्टकसहितस्य चैतन्यस्य संसरणदुःखयोगः, तद्रहितस्य च संसरणदुःखाभाव इत्यन्वयव्यतिरेकात्मकाभ्याम् 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः[३]', 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति[४]' इत्याभ्यां श्रुतिभ्यां प्रमीयते ।

अत्रेदं ज्ञेयं यत् पुर्यष्टके कारणसूक्ष्मस्थूलशरीरत्रयसत्ता, अतस्तदभावे संसाराभावः । नहि कारणशरीरसत्त्वे लिङ्गशरीरनाशे संसारनिवृत्तिः, नापि स्थूलशरीराभावे केवलेन लिङ्गशरीरेण संसारसम्बन्धः, विषयोपभोगायोग्यत्वात् ।

न ह्येतस्य पुर्यष्टकस्यात्मनि स्वाभाविकः सम्बन्धः, स्वाभाविकत्वे हि तस्य हानासम्भवान्मोक्षाभावप्रसङ्गः, किन्त्वारोपित एव । 'स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं

---

१. बृ० उ० ४।४।६; २. कठ० उ० ३।४ ।
३. छा० उ० ८।१२।१; ४. छा० उ० ८।१२।१ ।

शुद्धमपापविद्धम्[१]', 'स यत्तत्र किञ्चित् पश्यत्यनन्वागतस्तेन भवति[२]', 'असङ्गो ह्ययं पुरुषः[३]', 'अप्राणो ह्यमनाः शुभ्रः[४]','स एव नेति नेति[५]' इत्यादिश्रुतिसिद्धस्य नित्यमुक्तानन्दचिद्रूपस्यात्मनः सर्वोपाधिरहितत्वान्न कदाचिदपि पुरसम्बन्धो भवितुमर्हति। न चेमाः श्रुतयः परमात्मविषया जीवात्मनामपि परमात्मरूपाविशेषात्। 'ब्रह्मदाशाः[६]', 'नान्योऽतोऽस्ति द्रष्टा[७]' इत्यादिश्रुतेः। एवं भूत आत्मनि पुरसम्बन्धः, तत्प्रयुक्तं संसारित्वं सर्वं मायिकं मिथ्यैव भासते, पुर्यष्टकस्य मायिकत्वात्। स्वाज्ञानादेव सर्वं विरचय्य तद्बलात् स्वस्मिन्नारोपितम्। असङ्गस्यात्मनो मायासम्बन्धोऽवास्तवः।

यथाकाशस्य कदाचिदपि न मलेन सम्बन्धः, नापि कदाचित् संबन्धाभावः, तस्य स्वभावतो निरवयवत्वादसङ्गत्वाच्छुद्धत्वाच्च; तथापि बालैर्घनधूमधूलिसत्त्वे मलिनं नभः, तदपाये विमलं नभः, इत्युभयमध्यस्यते। एवमात्मनि बन्धमोक्षावध्यस्येते अज्ञैः। अर्थाद् भ्रममात्रसिद्धमिदम्, न पारमार्थिकम्।

एवं बन्धस्याविद्यिकत्वादाविद्यिकं हि वितथं विषयं सत्यं परमात्मवस्तु यथा न स्पृशति, तथैव परमात्मवस्त्वपि किमप्याविद्यिकं न स्पृशति, कल्पितपरमार्थयोः परस्परविरोधादिति युक्त्या तादृशानुभवेन चात्मनि बन्धदशायामपि बन्धात्मनोः परस्परस्पर्शाभावाच्चिदात्मनो नित्यमुक्तता सिध्यति। यथोषरभूमिर्मृगतृणजलवाहिनीं नदीं न स्पृशति, तथात्माप्युपाधिनारोपितं बन्धनं न स्पृशति। यथा मृगवारिप्रवाहपूर्णा नदी ऊषरभूमिं न स्पृशति, तथैवारोपितबन्धोऽप्यात्मानं स्पृशति, उपाधेरेव बन्धमुक्तिकल्पना, आत्मनस्तु नित्यमुक्तिरित्यक्षतमेव।

ननु 'एष आत्मा निष्क्रामति[८]', 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति[९]','तदन्तरप्रतिपत्तौ रंहति[१०]' इत्यादिवचनैर्जीवस्य संसारप्रतिपादनात् कथं ससारस्य कल्पितत्वमिति चेत्, शृणु, किं चैतन्यस्य संसरणम्, अथवा पुर्यष्टकस्य, उताहो मिलितस्य? नाद्यः, परलोकादौ चैतन्यस्य गमनं नास्ति, चिदात्मनो विभुत्वात्। नहि सर्वगते विभुपदार्थे गमनागमनक्रियासंभवः। नापि द्वितीयः, तस्य जडरूपत्वात्। नहि जडस्य स्वतः प्रवृत्तिः क्वचिद् दृष्टा। नापि तृतीयः, चिज्जडात्मकस्यैकस्य वस्तुनोऽसंभवात्। नहि जडाजडयोर्विरुद्धस्वभावयोस्तात्त्विक संबन्धः।

---

१. ईश० उ० ८; २. बृ० उ० ४।३।१४; ३. बृ० उ० ४।३।१५।
४. मु० उ० २।१।२; ५. बृ० उ० २।३।६; ६. अथर्वसं०।
७. बृ० उ० ३।७।२३; ८. बृ० उ० ४।४।२; ९. बृ० उ० ४।४।२।
१०. ब्र० सू० ३।१।१।

ननु यद्यपि चिदात्मा विभुत्वात् स्वयं न गतिमान्, तथापि घटगत्या घटवेष्टिताकाशगमनवत् पुर्यष्टकवेष्टितस्य परिच्छिन्नत्वाद् गमनं सम्भवेदिति चेत्, न, तत्र केवलमुपाधिगमनसत्त्वात्। न ह्युपाधिगमनेऽप्यौपाधिकस्य गमनं भवति। घटाकाशगमनदृष्टान्तेऽपि घटस्यैव गमनमस्ति, न त्वाकाशस्य। अन्यथा (यदि) घटे गच्छति घटावच्छिन्नस्य नभसोऽपि गमने स प्रदेशो घटेनेव नभसापि शून्यः स्यात्; किन्तु तथा नावलोक्यते। गच्छति घटे घटाकाशस्य गमनप्रतीतिस्तु भ्रममात्रा। उपाध्यपसरणे च स्वरूपस्योपहितत्वमपसर्पति केवलं न स्वरूपमप्यपसरति। अतो दार्ष्टान्ते पुरवेष्टितं चितः परिच्छिन्नरूपं परत्र गन्तुं नालम्। ननु दृष्टान्ते घटे गते नभसोऽपि गमने तत्र नभोऽन्तरस्योत्पन्नत्वान्न घटप्रदेशस्य नभसा शून्यत्वमिति चेत्, न, गगनस्य निरवयवद्रव्यत्वान्नभोऽन्तरस्योत्पत्त्यभावात्। अतो गच्छति घटे नभस्त्वचलमेवास्ति। नीयमानेन घटेन तु पदे पदे नभसः परिवेष्टनेन घटाकाशः क्रियते, तदा ततो वेष्टनाद् बहवो घटाकाशा भवन्ति। तत्र भेदाग्रहाद् घटाकाशो गच्छतीति भ्रमो लोकस्य। निरवयवस्याकाशस्य वस्तुतो घटेनाकर्षासम्भवात्। घटगमनक्रियया घटनभसोः परस्परसंयोगे जायमानेऽवच्छेदकभेदेनावच्छिन्नस्य नानात्वे जायमानेऽपि सर्वत्र तदेकदर्शनात्, तद्गमनं मानहीनम्।

एवमेव दार्ष्टान्तिकेऽपि स्वीकारे पुरमेव गच्छति, चैतन्यं त्वचलमेव वर्तत इति स्वीकारे गच्छता पुरेण केवलं तच्चैतन्यं घटाकाशवत् परिवेष्ट्यते, तदा बहूनि भिन्नभिन्नघटावच्छिन्नाकाशवद् भवितुमर्हन्ति चैतन्यस्य परिच्छिन्नरूपाणि। एवं सति महाननर्थः समापतेत् 'पुण्यः पुण्येन कर्मणा भवति पापः पापेन[1]', 'कपूयां योनिमापद्यते[2]' इत्यादिवेदाप्रामाण्यं भवेत्। तद्यथा—पुरगमनेन भिन्नभिन्नपुरावच्छिन्ने चैतन्ये जाते पूर्वं येन पुरवेष्टितचैतन्येन यत् कर्म कृतम्, ततोऽन्यत्र स्वर्गादौ तस्य कर्तुर्गमनान्नाशाच्च पुरवेष्टितचैतन्येऽन्यस्मिन् जाते पूर्वकृतस्य कर्मणो नाशः, तथा स्वर्गादावपरस्य कर्तुरुदयात् क्रियाभावेऽपि (कर्मभावेऽपि) अकृतस्य कर्मणः फलस्य भोगस्यागम इति दुरन्ता प्रमाणन्यायविरुद्धा स्थितिः, देहात्मवादसमता च। अवच्छिन्नचैतन्यानामन्यत्वेऽपि सन्तानैक्येऽङ्गीकृते सति पूर्वोक्तदोषाभावे बौद्धमतापातः। उपाधेः पुरस्य चलने सत्यपि वेष्ट्यमानस्य चैतन्यस्य सर्वत्र चलति घटे तदवच्छिन्नाकाशस्य तन्निहितद्रव्यस्येवैक्यप्रत्यभिज्ञाबलान्न कर्तृत्वभोक्तृत्वभेदप्रसङ्ग इति न शङ्क्यम्, चैतन्यस्यैक्येऽपि न तन्मात्रस्य कर्तृभोक्तृत्वम्; किन्तु पुरावच्छिन्नचिद्वलयस्यतस्य च भेदात्। विशेषणापगमे विशिष्टस्याप्यपायात्। यथा कुण्डलापसरणे कुण्डलिनो विनाशस्तथैव घटचलने

---

१. बृ० उ० ४।४।५; २. छा० उ० ५।१०।७।

घटवेष्टिताकाशस्य नाशः। एवं पुरवेष्टितचैतन्यस्यापि विनाशोऽप्युक्त एव, एष विचारस्त्वात्मनः पुरसम्बन्धमङ्गीकृत्य कथितः।

इदानीं तु तत्सम्बन्धाभावो निगद्यते—यथाकाशस्य घटसम्बन्धो वास्तवो न तर्कसहो निरवयवात् तथैव चिदात्मनोऽपि पुरसम्बन्धो वस्तुतो न तर्कसहः। तस्मात् पुरावच्छिन्नचिद्वलयस्य लोकान्तरगमनं भोक्तृत्वादि लिङ्गघटितत्वं वा परमार्थतो न संभवति।

ननु विभुद्रव्यस्य सकलमूर्तद्रव्यसंयोगित्वनियमाद् आकाशस्य घटसम्बन्धो युक्त इति चेत्, न, विकल्पासहत्वात्। किं घटो गगनैकदेशं परिच्छिनत्ति, किं वो कृत्स्नमाकाशम्? नाद्यः, नभसो निरवयत्वेन प्रदेशाभावात्। घटावच्छिन्नभागे एव तत्प्रदेश इति चेत्, न, परस्परपराश्रयापत्तेः। घटसंयोगे सति नभसो घटावच्छिन्नभागसिद्धिः, घटावच्छिन्नभागसिद्धौ च घटाश्रितसंयोगसिद्धिरित्यन्योन्यापेक्षणात्। नापि द्वितीयः, परिच्छिन्नद्रव्यसंयोगस्य विभुद्रव्यव्यापित्वासंभवेन नभोमात्रस्य घटावच्छिन्नत्वायोगात्। अन्यथा घटाद् बहिर्नभसोऽभाव प्रसङ्गात्। एवमात्मनोऽपि निरवयवत्वान्न तदेकदेशः पुरेण वेष्ट्यते, नापि परिच्छिन्नेन पुरेण, अपरिच्छिन्नस्यात्मनः कृत्स्नतया परिवेष्टनं कर्तुं शक्यते। 'स समानः सन्नुभौ लोकावनुसंचरति[1]' 'सधीः स्वप्नो भूत्वा[2]' इत्यादिवचनानि त्वाविद्यिकावच्छिन्नत्वाद्यनुवादपरकत्वेनोन्नेयानि।

यद्यल्पेनापि महत आवरणं स्वीक्रियतेऽङ्गुल्या सूर्यस्येव, तदाप्येकेनैव पुराष्टकसङ्घातेन चिदात्मनो जीवतया क्रोडीभावे जीवान्तरमीश्वरो वा नावशिष्येत। मा भूदीश्वरो जीवान्तरं वेति चेत्, न, जीवान्तराभाव एकस्य ज्ञत्वाज्ञत्वादिविरोधात्। प्रसिद्धो गुरुशिष्यसम्बन्धव्यवहारो न भवेत्, नापि बन्धमोक्षव्यवस्था चोपपद्येत। तद्यथा—जीवान्तराभावे बद्धस्य जिज्ञासोः शिष्यस्यासत्त्वे गुरुः कं प्रति शास्त्रतत्त्वं बोधयेत्, तथा मुक्ते गुरावसति क उपदेष्टा उपदिशेत्। एवं गुरुशिष्याभावे तत्त्वबोधकशास्त्रस्य निर्विषयत्वादप्रामाण्यापत्तिस्तथा मुक्तत्वबद्धत्वे विना गुर्वादिभावश्च नोपपद्यते। अस्तु स्वप्नवदिति चेत्, न, कल्पितस्य जीवस्य तत्त्वोपदेष्टृत्वायोगादिति सर्वज्ञे ब्रह्मण्येव सर्वं प्रकल्प्य जीवेश्वरबन्धमुक्तगुरुशिष्यादिसकलव्यवस्था निर्वाह्या।

एवमीश्वराभावे 'एष सेतुर्विधरणः[3]', 'एष ह्येव साधु कर्म कारयति[4]', 'रातिर्दातुः परायणम्[5]', 'यो ब्रह्माणं विदधाति पूर्वं यो वेदांश्च प्रहिणोति[6]' इत्यादीनां निर्विष-

---

१. बृ० उ० ४।३।७; २. बृ० उ० ४।३।७; ३. बृ० उ० ४।४।२२।
४. कौ० उ० ३।८; ५. बृ० उ० ३।९।२८; ६. श्वे० उ० ६।१८।

यत्वादप्रामाण्यापत्तिः। तस्मात् परमात्मनः पुराष्टकसम्बन्धो न वास्तवो युक्त्यसहत्वात्। यो यत्र युक्तिं न सहते, स तेन सह वस्तुतो न संबध्नाति, यथाकाशस्य घटसम्बन्धस्तथा चायं तस्मात् परिकल्पित एव पुरसंबन्धः। कथं तर्हि दृष्टान्तदार्ष्टान्तयोः परिच्छिन्नत्व-बुद्धिः? नभोनैल्यादिवद् असंभावितस्यानुभूयमानस्यापि तत्प्रतीतिः स्वीकार्या। तस्मात् सिध्यति नभोगमनवत् पुरसंबन्धनिबन्धं परलोकगमनमपि काल्पनिकमेव। 'तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः[1]' इत्यादिना जीवस्य गत्याद्युपपादनमौपाधिक-मेव। पुरात्मनोरन्योन्यधर्माध्यासात् पुर आत्मत्वाभासः, आत्मनि च गमनाद्यवभास इत्यभेदमापाद्य मूढमतिरैक्येण व्यवहरति।

यद्यप्येवं परिपूर्णचिद्रसघन आत्मा निरस्तमले स्वमहिम्नि सततं तिष्ठति, तथापि तत्त्वमसीति वाक्यकृतां मतिमन्तरेण स्वरूपावस्थानलक्षणं कैवल्यमात्मनो न भवति, नित्यमुक्तेऽप्यात्मनि अनाद्यविद्याप्रवाहवशादनर्थप्रतिभासशून्यानन्दानुभवरूप-कैवल्यस्याप्रतिभासादज्ञातस्य तस्य विस्मृतग्रैवेयकवत् प्रेप्सितत्वादनर्थरूपाज्ञाननिवर्तक-ज्ञानाय मुमुक्षूणां व्यापारः। तत्र मौलिभूतस्य वेदान्तवाक्यार्थज्ञान च नितान्तमावश्य-कम्। न तावदिन्द्रियैरात्मनोऽपरोक्षज्ञानं संभवति, इन्द्रियाणां पराग् विषयत्वात् 'पराञ्चि खानि व्यतृणत् स्वयम्भूः[2]' इति श्रुतेरनुभवाच्च। पराग्विषयाणीन्द्रियाण्यविषयस्वप्रकाशे चैतन्ये प्रवर्तितुं न समर्थानि, नापि स्वरूपज्ञानमेव भ्रमं निवर्तयति, स्वरूपचैतन्या-ज्ञानयोः सहभावस्यानादिकालतो निरन्तरमनुवर्तमानत्वान्न स्वरूपज्ञानस्य भ्रमनिवर्त-कत्वोपपत्तेः। तस्मात् तत्र गुरूपदेशवेदान्तवाक्यकृत एव साक्षात्कारोऽभ्युपेयः।

आत्मन आविद्यकोपाधिकल्पितमेव संसरणमित्यत्र मानम्—'स समानः सन्नुभौ लोकावनुसंचरति ध्यायतीव' इति श्रुतिरेव, न त्विदं स्वकपोलकल्पितम्। घटाकाशदृष्टान्ते-नात्मनो गमनस्य कल्पितत्वं समर्थ्य बिम्बप्रतिबिम्बदृष्टान्तेनापि कल्पितत्वं समर्थयति—अपरिच्छिन्नस्य शुद्धचिदात्मनः किमपि केवलचिद्रूपेण केवलजडरूपेण दुर्निरूपम्। अत एव चित्सदृशमुपाध्युपरागतद्धर्मविशेषविशिष्टं चिदाभासाख्यं जीवपदवाच्यं स्वाविद्याध्यस्तपुरहेतुकं यद्रूपं परिकल्पितमभवत्, तत् परिच्छिन्नं सूक्ष्मं भवति, तत्परिच्छिन्नत्वाद् व्रजति। यथा जलपात्रहेतुकं सूर्यस्य प्रतिबिम्बं परिकल्पितं भवति, जलपात्रे सूर्यातिरिक्तप्रतिबिम्बदर्शनात्, एवं पुरचैतन्यातिरिक्तं चित्प्रतिबिम्बमपि स्यात्। चित्प्रतिबिम्बस्य चिज्जडात्मत्वेऽपि चित्प्राधान्येन चित्प्रतिबिम्बव्यवहारः कल्पितजड-प्राधान्येनाभासव्यवहारश्चेति प्रतिबिम्बस्य बिम्बभेदाभिधानम्, प्राभासस्य मिथ्यात्वा-भिधानम्।

---

१. ब्र० सू० ३।१।१; २. कठ० उ० ४।१।

ननु पुरादेः परलोकगमनं कथमुपपन्नम्, यतो हि पुरं प्रतिबिम्बं वा स्वतो गन्तुं नार्हति, जडत्वेन चेतनानधिष्ठितस्य स्वतो गमनादिप्रवृत्त्ययोगात्। नापि जीवस्तस्य प्रेरकस्तस्योत्क्रान्तिकाले संपीण्डितकरणत्वेन बुद्धेर्लीनत्वाद् विशेषबोधरहितस्य जीवस्य प्रेरकत्वायोगात्। नापि परमात्मा प्रेरकः, कूटस्थचिन्मात्रतयोदासीनत्वात्। नाप्येतदन्यः कश्चनानुग्राहकः, अदृष्टत्वादिति चेत्, उच्यते—मायाशक्तिमतः परमेश्वरस्य मायाधीनव्यापारेण पुरतदवच्छिन्नजीवाधिष्ठातृत्वसंभवात् पुरादिगमनोपपत्तिः। यथा जीवस्य पुर्यष्टकमुपाधिस्तथा परमेश्वरस्य तम इति प्रथिता जडशक्तिरुपाधिः, किन्तु तन्नियन्तृत्वाज्जीववन्नेश्वरं व्यामोहयति। अत्र मानम्– 'मायिनं तु परमेश्वरम्[१]', 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया[२] च', 'योनिं योनिमधितिष्ठत्येक[३]' 'तद्यथाऽनः सुसमाहितमुत्सर्जद् यायात्[४]', 'प्राज्ञेनात्मनान्वारूढ उत्सर्जन् याति[५]' इत्यादि।

ननु 'न तस्य कार्यं करणं च विद्यते[६]' इत्यादिश्रुत्या परमात्मनः कृतिकर्तव्याभावप्रतीतेः कथं माययापि तस्य पुराद्यधिष्ठातृत्वसंभव इति चेत्, न, स्वरूपेण वस्तुतः परमात्मनः कृतिकर्तव्याभावेऽपि कल्पितरूपेण ( सोपाधिकरूपेण ) कृत्याद्युपपत्तेः। यथाऽविद्यादशायां पुरहेतुकं संसारयोग्यम् अज्ञस्य स्वरूपावरकाज्ञानप्रयुक्तं जीवशब्दवाच्यं वपुर्भवति, तथा परमेश्वरस्य जडशक्त्युपाधिकं परमेश्वरत्वं वपुर्भवति। एवं परमेश्वरत्वस्य जीवोत्क्रान्तिसमयेऽपि सत्त्वात् परमेश्वरतन्त्र एव पुरोपाधिको जीवः परलोकादिकं गच्छति।

नन्वीश्वरस्य मायिकोक्तरूपवत्त्वेऽपि जीवस्य तद्भिन्नत्वात् कथमीश्वराधिष्ठेयत्वमिति चेत्, न, जीवे स्वस्वरूपाज्ञानाद् विपरीतरूपाभिमानाच्च। ईश्वराधिष्ठेयतयैव जीवस्य कर्माधीनसंसारानर्थप्राप्तिः। जीवेश्वरविशेषेपि चैतन्ये स्वाश्रयव्यामोहकावरणशक्तिप्रधानाविद्योपाधिकत्वेन जीवस्य स्वस्वरूपानभिज्ञत्वाद् ईश्वरस्य स्वाश्रयाव्यामोहकसत्त्वप्रधानविक्षेपशक्तिमदविद्योपाधिकत्वेन स्वाभाविकस्वरूपाभिज्ञत्वाद् ईश्वरप्रयुक्तः संसारोऽज्ञे जीव एव भवति, नेश्वरे। ईश्वरप्रयुक्तत्वे च प्रमाणम्—'भीषाऽस्माद् वातः पवते[७]', 'एष एव साधुकर्म कारयति यमुन्निनीषते', 'एष ह्येवासाधुकर्म कारयति यमधो निनीषते[८]', 'यदिदं किञ्च जगत् सर्वं प्राण एजति निःसृतम्। महद्भयं वज्रमुद्यतम्[९]',

---

१. श्वे० उ० ४।१०; २. श्वे० उ० ६।८; ३. श्वे० उ० ४।१०-११।
४. बृ० उ० ४।३।३५; ५. बृ० उ० ४।३।३५; ६. श्वे० उ० ६।८।
७. तै० उ० २।८।१; ८. कौ० उ० ३।८; ९. कठ० उ० २।३।२।

'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते। अथ तस्य भयं भवति'[1] इत्यादिश्रुतिः।

केचन मन्यन्ते यज्जीवस्य सकलकर्मफलभोगः परमेश्वरदातृकः, न तु जीव ईश्वराधिष्ठितो गच्छति, इति तन्न समीचीनम्, युक्तिविरोधात्। अपि तु प्रभुणा परमेश्वरेणाधिष्ठितो मरणकाले ऊर्ध्वोच्छ्वासदशायां मरणवेदनावशाद् हिक्कादिशब्दं कुर्वन् कर्मादिसंसारसंभृतो जीवः शकटवत् परलोकं गच्छति न स्वयं मायाधीनत्वात्। यथा शकटः शाकटिकपुरुषसम्बन्धवशादेव भारेण शब्दं कुर्वन् व्रजति, न स्वयं जडत्वेनास्वातन्त्र्यात्। तथा च श्रुतिः—'प्राज्ञेनात्मनान्वारूढः'[2], 'तद्यथाऽनः सुसमाहितमुत्सर्जद्'[3] इति। ननु शकटस्याचेतनत्वाद् युक्तं चेतनाधिष्ठानेन गमनम्, जीवस्तु स्वयं चेतनस्वभावतया स्वतन्त्रः कथं चेतनान्तराधिष्ठितो गच्छेदिति चेदुच्यते, नैष दोषो जीवस्य चेतनत्वेऽपि भ्रान्त्या परतन्त्रत्वोपपत्तेः। तथाहि—यतः पुरावच्छिन्नो जीवोऽत्र एव पुरपरतन्त्रः। जीवः स्वयं चेतनस्वभावतया स्वतन्त्रस्तथापि पुरगतचैतन्याभासाविवेकादात्मानं परतन्त्रं मन्यते। अतः परमेश्वरेणाधिष्ठितो जीवो व्रजतीति युक्तमेव।



---

१. तै० उ० २।७।१; २. बृ० उ० ४।३।३५; ३. बृ० उ० ४।३।३५।

# व्याकरणसिद्धान्ते शब्दार्थयोस्सम्बन्धस्तत्र नागेशसिद्धान्तितबौद्धार्थसत्तावादस्य प्रत्याख्यानञ्च

**श्रीराजेन्द्रप्रसादशर्मा,**
**परामर्शकः,**
**राष्ट्रीय-विज्ञान-प्रौद्योगिकी और विकास-अध्ययन-संस्थान**
नयी दिल्ली

❀ ❀ ❀

"पदं वाचकम्, अर्थो वाच्यः, "**सिद्धे शब्दार्थसम्बन्धे**" इति भाष्यम्[1]। अत्रायं भावः—अत्र शब्दार्थयोर्नित्यत्वं तयोः सम्बन्धस्यापि नित्यत्वम्। नित्याः शब्दाः, अर्थाः, नित्याः सम्बन्धाः, तेषां प्रत्येकं सम्बन्धो नित्यः। तथा च वाचकं पदन्नित्यं वाच्यम्पदमपि नित्यम्। किञ्च, किम्पदं कस्यार्थस्य वाचकम्, सर्वाणि पदानि सर्वार्थवाचकानि? यथा "सर्वे सर्वार्थवाचकाः" इति भाष्यम्[2]। उत वा प्रत्येकपदतदर्थयोर्वाच्यवाचकत्वम्? **युक्तयुञ्जानानाम्मते** सर्वे शब्दाः सर्वेषां नित्यानामर्थानां वाचकाः। तेषां बोधकत्वसम्बन्धोऽप्येको नित्य एव, तन्माहात्म्येनैव सर्वेषां शब्दानां स्वाभीष्टार्थवाचकता सिद्ध्यति। एवमेव **अयुक्तयुञ्जानानामपि** बुद्धिविशेषबलेनौपचारिकसम्बन्धान्तरकल्पनया (सामीप्यादि) **सति तात्पर्ये सर्वे सर्वार्थवाचकाः** सिद्ध्यन्ति। किञ्च, साधारणव्यवहारे "नित्याः शब्दाः, नित्या अर्था नित्यश्च सम्बन्धः" इति स्वीकारेऽपि वाच्यवाचकत्वसांकर्यम्भवति, प्रसज्यते वा। तत्परिहाराय प्रत्येकं शब्दार्थयोः सम्बन्धं निश्चेतुं शाब्दिकानां (वैयाकरणनैयायिकमीमांसकानां) प्रयत्नः, तत्र शब्दनित्यत्ववादिनो वाक्यार्थज्ञाननिपुणा **मीमांसकाः** "औत्पत्तिकस्तु शब्दानामर्थैः सम्बन्धो नित्यः"[3]। "इमम्पदमिममर्थं बोधयतु, अस्मात् पदात् अयमर्थो बोद्धव्यः" इत्याकारा वेश्वरेच्छा शब्दार्थयोः सम्बन्धः, इति प्रमाणपटवो **नैयायिकाः**[4]। **वैयाकरणास्तु**

---

१. महाभाष्यम्–१।१।१ पृ० २२; (चारुदेवसम्पादितम्)।
२. भाष्यम्, लघुमञ्जूषा–पृ० २५;
३. मीमांसासूत्रम्–१।१।५।
४. शक्तिवादः—'संकेतो लक्षणा चार्थे पदवृत्तिः, इदं पदमिममर्थं बोधयतु'।

बोधजनकत्वयोग्यतारूपशब्दार्थयोरनादिसम्बन्धः, इति[1] **प्राञ्चः**, "शब्दार्थयोरितरेतराध्यासरूपो वाच्यवाचकभावापरपर्यायस्तादात्म्यं सम्बन्धः" इति[2] **नव्या** वदन्ति। स्वस्वशास्त्रीयवासनानुसारेण तर्कयन्तः सिद्धान्तस्थापनपटीयांस इति नात्र विचिकित्सावसरः। सर्वेषां स्वशास्त्रीयलक्षणसमन्वयपद्धतिर्बौद्धिकव्यायामकौशलोल्लासं समुद्वेलयन्ती प्रमोदयति मतिमतां मानसम्। कथं ते स्वतर्ककौशलबलेन परमतम्प्रत्याख्यातुं प्रयतन्ते इति पाठं पाठं व्युत्पित्सूनां बुद्धिः कमप्यनिर्वचनीयं बौद्धिकमानन्दमनुभवन्ती, विस्मरति बाह्यविषयानन्दम्। एवमिह शब्दार्थसम्बन्धविषये वैयाकरणमतं स्वान्तःसुखाय समालोचयितुं प्रवर्त्तामहे।

अत्र प्राचीनमतमनुसृत्य भट्टोजिदीक्षिता आहुर्यथा---

इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा।
अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा[3] ॥ इति।

यथेन्द्रियाणां स्वविषयेषु बोधजनकयोग्यतारूपसम्बन्धोऽनादिर्भवति, तथैवार्थैः सह शब्दानामप्यनादिर्बोधजनकयोग्यतारूपः सम्बन्धः, इति संक्षिप्तार्थः। अस्मिन् मते किं शब्दस्वरूपम्, किञ्चार्थस्वरूपं ययोरनादिसम्बन्ध उच्यते? तथा च शब्दार्थयोर्बाह्यं स्वरूपमुत वा तद्विलक्षणं यत्किञ्चिद्बुद्धिविषयसमाविष्टं बौद्धिकम् इत्येवंपरो विचारः। न हि सविशेषं चिकीर्षितम्, अथापि शब्दस्वरूपं बौद्धं स्फोटात्मकं गृह्यते, किन्तत् स्फोटस्वरूपम्? कतिधा स्फोट इत्यादिकं प्रकरणप्राप्तमुपरिष्टाद् वक्ष्यामः।

किञ्च, नव्यमते शब्दार्थयोरितरेतराध्यासरूपं वाच्यवाचकभावापरपर्यायं तादात्म्यमनादिसम्बन्धोऽभिप्रेतः। बोधजनकयोग्यतायाः सम्बन्धत्वाभावात्, सम्बन्धो हि सम्बन्धिभ्यां भिन्न उभयाश्रितो विशिष्टबुद्धिनियामकश्चेत्यादिना बोधजनकयोग्यतायाः सम्बन्धत्वासिद्धेरित्यत्र तात्पर्यम्।

अस्तु लघुकायेऽस्मिन् शोधप्रबन्धे नव्यमतमेवास्माभिर्यथामति परीक्षितुं प्रयत्यते। चिकीर्षितेऽस्मिन् सम्बन्धस्वरूपविवेके सम्बन्धिनोश्शब्दार्थयोः किं स्वरूपमिति विचारपथमारोहति सम्बन्धस्य सम्बन्धिसापेक्षत्वात्।

तत्रादौ शब्दार्थयोस्तादात्म्यं सम्बन्धः, इति तादात्म्यवादिनां मतमनुसृत्य शब्दार्थयोः स्वरूपं निरूप्यते।

---

१. व्याकरणभूषणसारे, शक्तिप्रकरणे, कारिका–३६।

२. लघुमञ्जूषा, पृ० २५।

३. वाक्यपदीयम्–३.३.२९ तथा च वैयाकरणभूषणसारे, शक्तिनिर्णयः, कारिका–३६।

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते[1] ॥

इति **वैयाकरणाः** ।

इदमन्धंतमः कृत्स्नं जायेत भुवनत्रयम् ।
यदि शब्दाह्वयं ज्योतिरासंसारान्न दीप्यते[2] ॥

इत्याऽलङ्कारिकाः । इदमत्र तात्पर्यं पुरोवर्तिनं घटं पश्यन्नपि तमजानन्नभिज्ञं पृच्छति—"कोऽयं पदार्थः ?" स च घट इत्युक्त्वोत्तरं ब्रूते । घकाराद्यानुपूर्वीघटित-घटशब्दो न हि पदार्थरूपः । अथापि 'घटः' इत्युच्यते अथवा घटरूपेण गृह्यते । न हि पृथुबुध्नोदराकारस्वरूपः पदार्थो घटशब्दस्वरूपस्तथापि घटशब्दात्मकतया गृह्यते । तेन सिद्ध्यति घकाराद्यानुपूर्वीघटिताः शब्दाः स्वेन रूपेण सह स्ववाच्यार्थस्वरूपतया गृह्यन्ते । एवमेवोत्तमवृद्धेन "घटमानय" इति प्रैषानन्तरं प्रेष्यो मध्यमः पृथुबुध्नोदरा-कारपदार्थमानयति, न त्वानयनक्रियायाः कर्मीभूतघकाराद्यानुपूर्वीघटितं घटशब्द-स्वरूपम् । एवमुभयथाऽपि घटशब्दो घटपदार्थस्वरूपाभिन्नस्वरूपोऽपि सिद्ध्यति । एवमेव घटपटादिशब्दानां तत्र तत्र तदर्थानामपि समाना स्थितिः समाश्रीयते । अतः पदार्थः स्वस्वरूपसमभिव्याहृतस्ववाचकशब्दाभिन्नो वाचकशब्दोऽपि स्वस्वरूपसमभिव्याहृत-स्ववाच्यपदार्थस्वरूपाभिन्नः । अत एव शब्दार्थयोः स्वसामानाधिकरण्येनेतरेतरात्मक-त्वात्तादात्म्यमप्यनुभूयते । इदमेवानुभूयमानतादात्म्यं शब्दार्थयोस्सम्बन्धः । शब्दार्थयोः सम्बन्धिनोरनादित्वाद् अभ्युपगमादनादिरेव सिद्धः शब्दार्थसम्बन्धः । तथा च वर्णानु-पूर्वीघटितेन स्वरूपेण सहार्थस्वरूपोऽपि भवति । अर्थश्चापि स्वेन पृथुबुध्नोदराकारादि-स्वरूपेण सह स्ववाचकशब्दस्वरूपोऽपि भवतीति शब्दार्थावन्योऽन्यात्मकौ । अत्र तादात्म्यं एवैनयोः सम्बन्धः सिद्धः । अतो युक्तमेवोक्तम्—"**अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते**"[3] इति । शब्दानुविद्धाः पदार्थाः, युक्तं चेदं भाष्यं—'योऽर्थः स शब्दः, यः शब्दः, सोऽर्थः[4] ।' एवमेव **शाब्दतरङ्गिण्या**मपि शब्दार्थयोरितरेतरात्मकं स्वरूपमुक्त्वा तयोस्तादात्म्यं सम्बन्धं दृढीकर्तुं विशिष्याह **ग्रन्थकारः**—"अपि च कोकिलरूपार्थस्य पिकपद एव शक्तिं जानतः कोकिलपदे तामजानतः पुंसः कोकिलदर्शने सति 'कोकिलोऽ-यम्' इत्यनुव्यवसायापत्तिः । ज्ञानेऽर्थमात्रस्य भानादर्थस्य च तेन ज्ञातत्वात् । अतो वाचकपदमपि तत्र भासत इति स्वीकरणीयम् । कोकिलपदस्य वाचकस्य तेनाज्ञानान्न तस्य तथानुव्यवसायापत्तिरिति ।

---

१. वाक्यपदीयम्–१,१२३; २. काव्यादर्शः–१,४; ३. वाक्यपदीयम्–१।१२३ ।
४. पातञ्जलमहाभाष्यम्; लघुमञ्जूषा पृ० २५ ।

एवमर्थे शब्दो भासते, अतोऽर्थः स्वेन स्वरूपेण सह स्ववाचकशब्दस्वरूपोऽपि भवति। एवमेव शब्दोऽपि स्वेन रूपेण सह स्ववाच्यार्थस्वरूपोऽपि भवतीत्येव सुदृढं सुस्पष्टं बोभूयते[1]। इयांस्तु भेदः पदार्थं विदाङ्कुर्वन् पदार्थस्वरूपेण सह पदार्थं तद्वाचक-शब्दप्रतिभासितं स्वरूपमपि जानन् वाचकपदपर्यायानभिज्ञत्वाद् अज्ञातं पर्यायशब्दमर्थे प्रतिभासमानमपि तत्त्वतो न जानाति। अतः पदार्थः स्वेन रूपेण ज्ञायमानः स्ववाचक-शब्दैरपि प्रतिभासितत्वादवच्छेदकावच्छेदेन वाचकशब्दस्वरूपः। किञ्च, तथात्वेऽप्यनु-भवितुर्ज्ञाने न हि कार्त्स्न्येन भासते। अनुभवितृज्ञानवैकल्यमत्र कारणम्।

एवमत्रैव ग्रन्थे शब्दार्थयोरितरेतरात्मकत्वं तयोस्तादात्म्यरूपसम्बन्धश्च प्रपञ्चयितुं पुनस्तृतीयविकल्पमाह—"किञ्च, 'अयं घटः' इति प्रत्यक्षे घटस्य विशेष्यता घटत्वस्य प्रकारतेति विषयताभाननियमनिर्वाहार्थमपि पदभानमावश्यकम्। पदभाने सति "यज्ज्ञानं यत्पदविषयकं तत् तज्जन्यबोधीयविषयतासमानविषयताकम्" इति नियमाद् घटविशेष्यत्वादिनियमो निर्वहति[2]" इति।

एवमपि प्रत्यक्षीक्रियमाणेषु घटपटादिपदार्थेषु प्रकारतया विशेष्यतया ज्ञानार्थं विषयताविवेकार्थं वापि पदतदर्थयोरभिन्नस्वरूपत्वं स्वीकार्यम्। तच्च तादात्म्यसम्बन्धेन, एवमपि शब्दार्थयोरन्योऽन्याभिन्नस्वरूपत्वं तादात्म्यस्य च तत्र सम्बन्धत्वं सुतरां सिद्ध्यतीति विकल्पाशयः।

एवमेव—"घटादिपदानामपि घटत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्ने शक्तिः। अतो घटपदजन्यबोधे विशेष्यत्वादिकं भासते। तस्माद् घटपदजन्यबोधे विशेष्यत्वादिकं भासते। व्यवसाये विषयता भासते इत्यकामेनाप्यङ्गीकार्यम्। कथमन्यथा घटमहं जानामीत्यनुव्यवसाये विषयत्वं भासते। व्यवसायविषयस्यैवानुव्यवसाये भानात्। व्यवसायाविषयस्यापि व्यवसायविषये विद्यमानस्यानुव्यवसाये भानोपगमे 'अयं गुडः' इति व्यवसायानन्तरभाव्यनुव्यवसायो व्यवसायविषयगुडे विद्यमानं माधुर्यमवगाहेत। विषयतायाश्च भानं न विषयत्वान्तरम्, अपि तु स्वमेवेति नानवस्था। तस्मात् प्रत्यक्षादावपि विषयताभाननियमनिर्वाहाय पदभानमावश्यकम्[3]" इति।

प्रत्यक्षज्ञानेऽपि प्रकारतादिविषयतया तज्ज्ञानं जायते, तदेवानुव्यवसायात्मकं भवति, न हि ततोऽधिकं न्यूनं वा। अतस्तादृशविषयता ज्ञाननिर्वाहार्थमपि शब्दार्थयोर-भिन्नस्वरूपस्वीकार आवश्यक इत्यत्रेत्याशयः।

---

१. शब्दतरङ्गिणी–( वें० सुब्रह्मण्यशास्त्रिणा विरचिता ) पृ० ६६।

२. शब्दतरङ्गिणी–पृ० ६६; ३. तदेव–पृ० ६६-६७।

चतुर्थो हेतुरत्र दीयते। एवमेव—"न्यायसूत्रकर्तुर्गोतमस्यापि शाब्दबोधे पदभानं सम्मतम्।" "इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं (१.१.४) इति **प्रत्यक्षलक्षणसूत्रम्**। तत्राव्यपदेश्यम् इत्यस्य वाचकशब्दाविषयक-मित्यर्थः। एवञ्च, प्रत्यक्षं शब्दाविषयकं वदन् शाब्दबोधं वाचकशब्दविषयं मन्यते **सूत्रकारः**। तस्मिन्नेव सूत्रे "शब्दविषयकत्वेन प्रत्यक्षस्य शाब्दत्वापत्तिः" इति वदतो **न्यायभाष्यकारस्याप्यभिमतोऽयमर्थः**। व्यवस्थिते हि शाब्दे पदभाने शब्दविषय-कत्वात् प्रत्यक्षस्य शाब्दत्वमापादयितुं शक्यते। शब्दविषयकत्वमेव शाब्दत्वं न तु शब्द-जन्यत्वम्" इति तत्रैव **वाचस्पतिमिश्रैरुक्तम्**। तथा च नैयायिकैः शाब्दे पदभानाङ्गी-कारादन्यत्र प्रत्यक्षादौ तेषां तदभानाग्रहो मुधैव।"

यद्यद्विषयकं ज्ञानं तत्तदेव तेन चक्षुरिन्द्रियेण प्रत्यक्षीक्रियमाणो घटः प्रत्यक्ष एव। अतो घटविषयकं ज्ञानं प्रत्यक्षम्। तत्र यद्यपि घटस्वरूपविषये घटपदभानमपि जायते। किञ्चाथापि तादृशज्ञानं न हि शाब्दम्, शाब्दविषयकत्वाभावात्; प्रत्युत प्रत्यक्षमेव चक्षुरिन्द्रियसंनिकर्षजन्यत्वात्। अत एव प्रत्यक्षविषयकत्वात्। किंच तत्रापि पदभानं भवतीति प्रत्यक्षेऽपि शब्दार्थयोरभेदः सिद्ध एव। इत्यत आह – 'शब्दार्थयोः स्वरूपाभेदो न्यायभाष्यकर्तुः सम्मतः[1]" इति।

एवमेव प्रत्यक्षादौ विषयपदभानं न जायत इत्यभिमानो नैयायिकानामयुक्त एव प्रत्यक्षीक्रियमाणोऽपि घटः पृथुबुध्नोदराकारतया ज्ञायमानः सन् घट इत्यपि गृह्यते। प्रत्यक्षेऽपि विषये स्वरूपेण ज्ञायमाने तद्वाचकपदं भासत एव। पदतदर्थयोरभेदस्ता-दात्म्याकारापन्न इत्येवाभिप्रेत्योच्यते शाब्दतरङ्गिण्याम्—'अयं घटः, इत्यादिप्रत्यये पदार्थवाचकशब्दानुविद्ध एवार्थो भासते[2]" इति। शाब्दे तु "यज्ज्ञानं यत्पदविषयकं तत्तज्जन्यबोधीयविषयतासमानविषयताकम्" इति नियमादर्थनिष्ठप्रकारताविशेष्यता-रूपविषयताकं पदभानमपि भवत्येव। अत एवोच्यते घटादिपदानामपि घटत्वनिष्ठ-प्रकारतानिरूपितविशेष्यतावच्छिन्ने शक्तिर्यथा घटत्वनिष्ठा या प्रकारता तादृशप्रकारता-निरूपिता या घटनिष्ठा विशेष्यता तादृशविशेष्यत्वावच्छिन्ना शब्दधीर्भवति।"

अतः पदपदार्थयोस्तादात्म्यस्वीकारोऽतीवावश्यकः। तत्रैवान्वयव्यतिरेक-व्याप्तिभ्यामेवेदं दृढयति ग्रन्थकारः।

किञ्च, "यद् यत् सामानाधिकरण्येन प्रतीयते, तत्तदात्मकं यद्-यदात्मकं न भवति, तन्न तत्सामानाधिकरण्येन प्रतीयते। यथा गौनश्वात्मको गौरश्व इत्यश्वसामाना-

१. शाब्दतरङ्गिणी–पृ० ६७; २. तत्रैव–पृ० ६८।

धिकरण्येन न प्रतीयते। अर्थस्तु वाचकशब्दसमानाधिकरण्येन प्रतीयत इति शब्दात्मकः। न च गव्यश्वसामानाधिकरण्येन प्रतीत्यभावस्तयोरुपायोपेयभावात्, न तु तादात्म्याभावात्, शब्दार्थयोस्तूपायोपेयभाव सत्त्वात् सामानाधिकरण्येन प्रतीतिरिति वाच्यम्, उपायोपेयभावसत्त्वेऽपि रूपचक्षुषोर्वह्निधूमयोश्च सामानाधिकरण्येन प्रतीतेरदर्शनादुपायोपेयभावस्य सामानाधिकरण्येन बुद्धिनियामकत्वाभावात्। किञ्च, उपायोपेयभावस्य सामानाधिकरण्येन बुद्धिप्रयोजकत्वे शाब्द एव प्रत्यये तयोः समानाधिकरण्यं भासते, न त्वनुमित्यादौ, तत्रार्थस्य शब्दोपेयत्वाभावात्। साधितं च सर्वत्र ज्ञाने पदभानम्, तस्मादत्यन्तभिन्नयोर्घटपटयोः "घटः" "पटः" इति सामान्याधिकरण्येनाप्रतीतेरत्यन्ताभेदेऽपि घटो घट इति सामान्याधिकरण्येन बुद्धेरदर्शनाद् 'नीलो घटः' इति सामान्याधिकरण्येन प्रतीतेर्नीलघटयोरिव शब्दार्थयोरपि समानाधिकरण्येन प्रतीतेर्भेदसमानाधिकरणाभेदरूपं तादात्म्यं सिध्यति[1]।"

अनेनैव तादाम्यलक्षणमपि सिद्ध्यति—"**भेदसमानाधिकरणाभेदरूपं तादात्म्यम्**" इति। तेन पदतदर्थयोस्तादात्म्येऽपि पदतदर्थयोरभेदस्येव भेदस्यापि सत्वाच्छब्दादेव स्वादयः, न त्वर्थात्, पदतदर्थयोरभेदे सिद्धे स्वादयः प्रत्यया अर्थादपि प्रसज्यन्त इति न वाच्यम्, उक्ततादात्म्येऽभेदरूपे भेदस्यापि सत्त्वात्। उक्तकोट्या शब्दार्थयाः सामानाधिकरण्यं भेदाभेदरूपं च तादात्म्यम्। वास्तवमेव **नागेशभट्टास्तु**— "इदमेव तादात्म्यं शब्दार्थयोरितरेतराध्यासरूपम्। अत एव तद्भिन्नत्वे सति तदभिन्नत्वेन प्रतीयमानत्वम्" इत्याचक्षते, तदद्वैतवासनया। वस्तुतोऽध्यासमूलकतादात्म्यस्य प्रमात्वकत्वं सिद्ध्यति। भ्रमात्मकसम्बन्धस्याऽप्रमात्मकत्वम्, अप्रमात्वकत्वाद् यथार्थज्ञानग्राहकत्वाभावाद् शक्तित्वं दूरापेतं भवति। वास्तवसतोः पदतदर्थयोः समानाधिकरण्यबलेन भेदघटिताभेदरूपतादात्म्यं तु यथार्थज्ञानग्राहकत्वाद् भेदस्यापि वास्तवत्वाद् भेदाभेदयोरुभयोरपि तत्र समानरूपेण जागरूकत्वात्। अत एव यथार्थशक्तिग्राहकत्वात् पदतदर्थयोर्विभागरूपभेदस्यापि तत्र विद्यमानत्वाद् अभेदेऽपि यथार्थज्ञानग्राहकं स्वभावसिद्धं भवति। तथात्वे च तादृशतादात्म्येन पदस्यार्थवत्वात्, अत एव प्रातिपदिकत्वाद् विविक्तार्थग्रहणे प्रथमा सुलभा। अत एव तादृशतादात्म्येऽपि पदतदर्थयोरभेदेऽपि भेदस्य विविक्तत्वाद् भेदार्थकमतुबपि सुलभः, तद्धितानां भेदवाचकषष्ठ्यर्थकत्वात्। "**षष्ठ्युत्पत्तिस्तु भेदकात्**" इति **वाक्यपदीयं** समञ्जसं भवति।

---

१. शाब्दतरङ्गिणी, ( वे० सु० शास्त्रिणा विरचिता ) पृ० ६८।

एवं शब्दार्थयोस्तादात्म्यं सिसाधयिषुः पुनरपि प्रकारान्तरेण निर्ब्रूते। यथा—"अपि चातदुपायकोऽतद्विषयकश्च न तत्पुरस्सरो दृष्टः। सर्वोऽपि सविकल्पप्रत्ययः शब्दपुरस्सरः। अतश्च सविकल्पकप्रत्ययः शब्दविषयकः शब्दोपायको वा वाच्यः। आद्येऽर्थज्ञानस्य शब्दज्ञानात्मकत्वे सिद्धं शब्दार्थयोस्तादात्म्यम्[1]"।

अत्रेदं तात्पर्यम्—यः कोऽपि पदार्थः, स उपायकाविनाभूतः स्वविषयक एव वाऽवगम्यते। अनेनैव नियमेन सविकल्पकज्ञानमात्रं शब्दोपायकं शब्दविषयकं वा गृह्यते। सविकल्पज्ञानग्रहणे तस्य शब्दोपायकत्वे तूपायोपेययोरभेदरूपतादात्म्यं सिद्ध्यति।

द्वितीये शब्दविषयकत्वे तु—"द्वितीये किं शब्दोऽज्ञातः सन्नुपायः, उत ज्ञातः? नाद्यः, निर्विकल्पकस्यैवासिद्धिप्रसङ्गात्। विशिष्टबुद्धौ विशेषणज्ञानस्योपायत्व एव निर्विकल्पकं सिध्यति। अज्ञातस्याप्युपायत्वेऽज्ञातस्यापि घटत्वस्य 'अयं घटः' इति विशिष्टबुद्धिजनकत्वसंभवाद् घटत्वज्ञानानपेक्षणेन निर्विकल्पकाङ्गीकारस्य व्यर्थत्वात्। द्वितीयपक्षे च सिद्धं नः समीहितम्[2]।"

सविकल्पकज्ञानं शब्दविषयकम् इति द्वितीयपक्षे किं शब्दोऽज्ञातः सन् कारणं ज्ञातो वा विकल्पः, आद्यपक्षम् असंभवग्रस्तत्वाद् दूषयित्वा द्वितीयविकल्पे विचार्यमाणे ज्ञातस्य शब्दस्य सविषयकत्वेन सिद्धं शब्दार्थयोस्तादात्म्यम्। अत एव निष्कृष्टार्थं ब्रूते—"असंनिहितस्य न ज्ञानं संभवति। शब्दश्च न संनिहितः। अतोऽर्थतादात्म्यादर्थसंनिधानमेव शब्दसंनिधानमिति सन्निहितस्य शब्दस्य ज्ञानं भवेत्। तथा च सिद्धं शब्दार्थयोस्तादात्म्यम्[3]।"

अत एव "कः शब्दः" इति प्रश्नेऽपि "घट इत्ययमर्थः" इत्युत्तरयन्ति। तथा च शब्दार्थप्रश्नयोरेकाकारोत्तरदर्शनात् तन्मूलतादात्म्यप्रतीतिस्तथा च शब्दार्थयोस्तादात्म्यं सिध्यति।

इतोऽपि—"पदं श्रुतम्, अर्थं शृणु" इति व्यवहरन्ति। अत्र च अर्थपदं न शब्दपरम्। पदं श्रुतमिति पृथगभिधानादपि चार्थपरमेव, अर्थस्य च श्रावणप्रत्यक्षकर्मत्वं न संभवति, अपि च शब्दस्यैव। तस्माद् शब्दार्थयोस्तादात्म्यमभिसंधायैव 'अर्थं शृणु' इति व्यवहरन्तीति। निरुक्तप्रयोगमूलप्रतीत्यापि शब्दार्थयोस्तादात्म्यं सिध्यति[4]।"

---

१. शाब्दतरङ्गिणी, पृ० ६८; २. शाब्दतरङ्गिणी, पृ० ६८।
३. शाब्दतरङ्गिणी, पृ० ६८; ४. शाब्दतरङ्गिणी, पृ० ६८।

किञ्च, वाच्यम् आदैच्, वाचकं वृद्धिशब्दश्च समानाधिकरणे 'वृद्धिरादैच्'[1]" इति सूत्रं प्रयुञ्जानः **पाणिनिरपि** वाच्यवाचकयोस्तादात्म्यम् अभिप्रैति। प्रणववाच्यं ब्रह्मवाचकं प्रणवं च सामानाधिकरण्येन निर्दिशन्ती—"ओमित्येकाक्षरं ब्रह्म" इति श्रुतिरपि वाच्यवाचकयोस्तादात्म्यं द्रढयति[2]।

एवं पिनाकिनो मानभञ्जको रामो न तु तद्वाचकः शब्दः। रामेति द्व्यक्षर-नाम्नि मानभञ्जकत्वं प्रतिपादयन्नयं 'रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः' इति प्रयोगः शब्दार्थयोरभेदाध्यासमूलक इति तेन तादात्म्यं सिध्यति। अत एव "हिरण्यपूर्वं कशिपुं प्रचक्षते" इति प्रयोगोऽपि संगच्छते। अत्र "पुरुषविशेषं हिरण्य-पूर्वं कशिपुं प्रचक्षते" इत्युक्तम्, हिरण्यपूर्वकत्वमेव कशिपुपदस्यैव। तथा चार्थस्य हिरण्यपूर्वकशिपुशब्दस्य च सामानाधिकरण्येन प्रयोगस्तयोस्तादात्म्यं द्रढयति[3]।

अयं शब्दार्थयोस्तादात्म्यरूपसम्बन्धसाधको ग्रन्थ एवेति न भूयो व्याख्यानादि-प्रपञ्चावसरः। प्रत्युत, अयमेव तादात्म्यसम्बन्धः शब्दार्थयोरितरेतराध्यासमूलक उत वा सामानाधिकरण्येनेत्यत्रावधेयम्। जातिव्यक्त्योर्यो यदात्मकः, स तद्भिन्ननिर्देशार्थः। यथा मृदात्मको घटो मृद्भिन्नः, यो यद्व्याप्यः, स तद्भिन्ननिर्देशार्थं इति द्वितीयो नियमः। यथा राजपुरुषो राजाभिन्ननिर्देशार्थः। अत्र भिन्नयोर्मृद्घटयो राजपुरुषयो-स्तादात्म्यसम्बन्धः, स च भेदाभेदघटितः। अस्मिन् सम्बन्धे भेदाभेदौ स्वाभाविकौ वास्तविकौ भवत इति नहीतरेतराध्यासमूलोऽयं सम्बन्धः। यो यदायत्तस्थितिप्रवृत्तिकः, स तद्भिन्नत्वनिर्देशार्थो यद् यदायत्तस्थितिप्रवृत्तिकं वस्तु, तत्तद्भेदव्यपदेशार्हम् इत्या-म्नायते छान्दोग्ये प्राणसंवादे—"न वै वाचो न चक्षूंषि न श्रोत्राणि न मनांसीत्याचक्षते। प्राण इत्येवाचक्षते प्राणो ह्येवैतानि सर्वाणि भवन्ति" इत्यादिना। अत्र यथा वाङ्मनश्चक्षु-प्राणादीनां स्वरूपेण सम्बन्धेन वास्तविकेऽपि मिथो भेदेऽपि प्राणायत्तस्थितिप्रवृत्तित्वात् प्राणेन सहाभेदोऽपि वास्तविकः। एतादृशभेदाभेदघटितो मनःप्राणादीनां यः सम्बन्धः, सोऽपि तादात्म्यसम्बन्ध इत्युच्यते। एवञ्च, यो यद्व्याप्यः, स तद्भिन्नः, यथा ब्रह्मव्याप्यं जगद् ब्रह्माभिन्नम्। अत्र जगत्त्वेन कार्यत्वेन रूपेण ब्रह्मत्वेन जगत्कर्तृत्वेन रूपेणेत्यु-भयोर्भेदोऽपि वास्तविकः, अनुभूयमानत्वात्। अभेदोऽपि वास्तविको ब्रह्मणा जगत्कर्त्रा सह कार्यकारणयोरभेदाभ्युपगमात्। एवम् एतादृशवास्तविकभेदाभेदघटितस्तादात्म्य-सम्बन्धः **प्रामाणिकै**रुच्यते, न तु तादात्म्यसम्बन्ध इतरेतराध्यासमूलको भवितुमर्हति। **वैयाकरणसिद्धान्तलघुमञ्जूषायां नागेशभट्टपादास्तु** "इतरेतराध्यासमूलको भेदाभेद-

---

१. अष्टाध्यायी, १.१.१; २. शाब्दतरङ्गिणी, पृ० ६९; ३. तत्रैव–पृ० ६९।

घटितस्तादात्म्यसम्बन्धः[१]" इत्याहुः। किञ्च, तदेतत् सर्वं केवलाद्वैतवासनयेति प्राग् उक्तमेव, अयुक्तं चाप्येवमेव। अध्यासमूलके तादात्म्यसम्बन्धे स्वीक्रियमाणे च कोऽयम् अध्यासपदार्थ इति जिज्ञासा भवति। भ्रमसामग्रीसत्त्वे ह्यध्याससिद्धिः। भ्रमसामग्री च भ्रममात्रे सावयवत्वम्. इन्द्रियसंयुक्ततया ग्राह्यत्वं सादृश्यं पूर्वप्रमाजन्यम्, संस्कारो दोषश्च। यथा शुक्तिरजतयोरनयैव सामग्र्या दृश्यत तरेतराध्यासः। शुक्तिरजतयो-रुभयोरपि सावयवत्वाद् एकेनैव चक्षुरिन्द्रियसंनिकर्षेण ग्राह्यत्वात्। उभयनिष्ठशुक्ल-त्वस्यापि भूयोधर्मस्य विद्यमानत्वात्। उक्तसादृश्यस्य पूर्वप्रमाजन्यत्वात्। संस्कारस्यापि तादृशस्य सिद्धेरुद्‌बुद्धेश्च दृष्टिदोषस्य तत्र सत्त्वाद् शुक्तिरजतयोरितरेतराध्यासो भ्रम-ज्ञानरूपः सिद्धयति। किञ्च, प्रकृते शब्दार्थयोरुभयोः सावयवत्वेऽपि समानेन्द्रियसंयुक्त-तया ग्राह्यत्वाभावात्। तयोरितरेतराध्याससिद्धिः स्पष्टैव।

नन्विन्द्रियसंयुक्ततया ग्राह्यत्वं तु वर्तते एवेति चेदुच्यते—शब्दार्थयोः सादृश्यं खपुष्पायितं भवति। उभयत्र समानस्य कस्यचिद् भूयो धर्मस्यैवाऽभावात्। सादृश्याभावे च तथात्वे तु पूर्वप्रमाजन्यसंस्कारस्य सुतराम् अभावः। न चाप्यत्र दोषसिद्धिः। पुरोवर्तिनं पृथुबुध्नोदराकारं घटं पश्यन् द्रष्टा वक्ता वा चक्षुरिन्द्रिय-संनिकर्षेण विशुद्धेन गृह्णाति। नेह कश्चिद् दोषः। एवम् अध्याससामग्र्यभावे शब्दार्थयोरितरेतराध्यासो न सिध्यति। कुतस्तद्रूपतादात्म्यसम्बन्धः।

अतोऽगत्या पूर्वनिरुक्तकोटिभिः सामानाधिकरण्येन स्वाभाविकभेदाभेदघटित-स्तादात्म्यसम्बन्ध एव स्वीकार्यः। अत एवाहुः **प्रामाणिकाः—"भेदसहिष्णुरभेदसम्बन्ध-स्तादात्म्यम्"** इति। वस्तुतोऽयमेव शब्दार्थयोस्तादात्म्यसम्बन्धः, स एव शक्तिः। एवं हि शब्दार्थयोस्तादात्म्यसम्बन्धे शिद्धेऽन्नमित्युक्ते न मुखपूरणापत्तिः, न चापि 'घटो नास्ति', 'शशश्रृङ्गं नास्ति' इत्यादिषु वाक्येषु दोषभीत्या शब्दार्थयोर्वस्तुतो बौद्धसत्तां स्वीकुर्वन्ति, तेषां मनोराज्यं सिध्यति।

**नव्यव्याकरणमते** शब्दार्थयोस्तादात्म्यसम्बन्धः शक्तिरिति फलितार्थोऽपि शब्दार्थयोः बाह्यसत्तयैव सुतरां सिद्धयति। इतरेतराध्यासमूलकं तादात्म्यम् आदाय 'अन्नम्' इत्युक्ते पूरणापत्तिदोषान् परिहर्तुं ये **नैयायिकादयः** प्रयतन्ते, तेऽपि मन्ये तादात्म्यसम्बन्धलक्षणप्रकरणे नागेशपादा इवाद्वैतवासनावासितान्तःकरणा नात्र शुद्धां शास्त्रीयव्यवस्थाम् अनुसरन्ति, अथवा दोषदर्शिनो **नैयायिका** वादिनां वदतो व्याघातसिद्धय एव प्रयतन्ते। अस्तु, शब्दार्थयोरभेदाध्यासमूलकतादात्म्यम्

---

१. वैयाकरणसिद्धान्तलघुमञ्जूषा पृ० २५।

आदाय बौद्धयोरेव शब्दार्थयोर्वाच्यवाचकभावः, तादृशयोरेव शब्दार्थयोस्तादात्म्यम्, तदेव शक्तिरिति पक्षसाधकयुक्तयोऽपि वादिनां स्थालीपुलाकन्यायेन परीक्षन्ते। शब्दार्थयोर्बाह्यसत्ताभ्युपगमे बौद्धसत्तया स्वीकारे 'अन्नम्' इत्युक्ते मुखपूरणापत्तिः। बाह्यस्यैवान्नस्य पूरकत्वाद् बौद्धार्थस्य तु पूरकत्वाभावान्मुखपूरणापत्तिदोषं परिहर्तुम् अर्थस्य बौद्धसत्ताऽवश्यं स्वीकार्येत्युच्यते, तदसत्, **तव मते** शब्दार्थयोरभेदस्याध्यस्तत्वात् प्रामाण्यग्रहेऽध्यस्तस्यावश्यं बाध्यत्वान्नहि 'अन्नम्' इत्युक्ते मुखपूरणापत्तिदोषः प्रसज्यते। यथा रज्जावध्यस्तस्याऽहेः प्रामाण्यग्रहे सर्पस्य बाधितत्वाद् रज्जुज्ञानमेव भवति, न तु सर्पज्ञानम्। एवमेव अन्नमित्युक्ते, अध्यस्तस्य पूरकत्वरूपस्यार्थस्यावश्यं बाधितत्वान्न हि पूरकत्वापत्तिरूपो दोषः प्रसक्तः। तथात्वे तु शब्दार्थयोर्बौद्धसत्तास्वीकारो मुधैव।

नन्वभेदस्याध्यस्तत्वेऽप्यन्नमित्युच्चारणसमकालिकज्ञानकालेऽध्यस्तस्यार्थस्याऽबाधितत्वाद् अर्थस्य बौद्धसत्तास्वीकार आवश्यक इति चेत्, न, तज्ज्ञानस्य प्रामाण्यानास्कन्दितत्वात्। यथा रज्जावध्यस्तसर्पज्ञानस्याप्रामाणिकत्वम्। अत एव रज्जुर्वा सर्पो वेति साध्यसंदेहरूपां पक्षताम् उद्भाव्य रज्जुरियं चेतनव्यापाररहितत्वाद् इत्यनुमित्या परीक्ष्य संजातभाने यथार्थज्ञानकालेऽध्यस्तस्य सर्पस्यावश्यं बाधितत्वात् रज्जुमेव गृह्णाति ज्ञाता।

एवमेव 'अन्नम्' इत्युक्तेऽध्यस्तस्य पूरकस्यान्नपदार्थस्य एवमेव गतिः। 'अन्नम्' इत्युक्ते शब्दोऽयम् अर्थो वेति संदिह्य शब्द एवायम्, नार्थः, उच्चारयितुर्मुखस्यापूरितत्वात्। अतोऽनया युक्त्या बौद्धार्थस्वीकारो नावश्यकः। नन्वेवं **स्वतः प्रामाण्यवादो** व्याहन्यत इत्यपि वक्तुं न शक्यम्। भवतु वां का ते हानिः **नैयायिकमानिनः**। स्वतःप्रामाण्येऽपि यथा **मीमांसकमते** "घटमहं जानामि" अथवा "ज्ञातो मया घटः" इति ज्ञाततान्यथानुपपत्या गृह्यमाणं स्वतःप्रामाण्यं परम्परयाऽभ्युपगम्यते, तथात्रापि स्वतस्त्वमलमिहातिविस्तरेण, अप्रकृतत्वात्।

इतश्च तद्धर्मावच्छिन्नविषयकशाब्दत्वावच्छिन्नं प्रति तद्धर्मावच्छिन्ननिरूपितवृत्तिविशिष्टं ज्ञानं हेतुरिति कार्यकारणभावो **गदाधरभट्टपादैरुक्तः**। स एव **नागेशभट्टैः** स्वीकृतः[1]। अतस्तेषां मते शब्दार्थयोर्वाच्यवाचकभावापरपर्याय इतरेतराध्यासरूपाभेदमूलकतादात्म्यसम्बन्धस्य तादात्म्यसत्त्वेऽपि तद्धर्मावच्छिन्नविषयकशाब्दधिय एव साम्राज्यं भवति। एवञ्च, 'अन्नम्', इत्युक्तेऽन्नत्वरूपशक्यतावच्छेदकधर्मावच्छिन्नविषयक-

---

१. वैयाकरणसिद्धान्तलघुमञ्जूषा, पृ० १०।

ज्ञानस्वरूपस्यार्थोपस्थितिर्भवति, न तु विषयशरीरस्य पूरकत्वादेः। नन्वस्त्वेवम्। किञ्च, अर्थस्य बौद्धसत्ताया आनर्थक्यम् विनष्टे घटे 'घटो नष्टः' इति प्रयोगो न स्यात्। अतीते विनष्टघटस्य प्रयोगकालेऽभावाद् इति चेत्, तदपि न विचारसहम्। शब्दश्चार्थश्च सम्बन्धश्च, तेषां समाहारः शब्दार्थसम्बन्धं "जातिरप्राणिनाम्[1]" इति क्लीबत्वं चैकत्वं च। तस्मिन् शब्दार्थसम्बन्धे "तृतीयासप्तम्योर्बहुलम्[2]" इत्यम्भावाभावे सिद्धे नित्ये सतीत्यभ्युपगते, अर्थवान् घटशब्दो नित्यः, अर्थवतामेव शब्दानाम् अनुशासनात्[3]। अर्थस्वरूपज्ञानविषयतयाऽर्थस्य शब्देन सम्बन्धो नित्यः, स चेश्वरेच्छारूपः, अनादिबोधजनकयोग्यतारूपः, स्वाभाविकः, तादात्म्यम्, यो वा को वा भवतु, नाऽस्माकं तत्र चिन्ता। सम्बन्धेन नित्यत्वेन चार्थवान् घटशब्दो नित्यः, नित्यत्वे च प्रयोगकाले कार्यत्वेन रूपेणानित्यत्वात् तदीयसत्तानिषेधमात्रपरत्वाद् **'घटो विनष्टः'** इति प्रयोगः संगच्छते।

शब्दनित्यत्ववादेऽपि कार्यत्वेन रूपेण तस्यानित्यत्वस्वीकाराद् व्यवहारबलेन तादृशप्रतीतेरनुभवाच्च। इतश्च 'घटोऽस्ति', 'घटो नास्ति' इति प्रयोगौ शब्दार्थयोस्तादात्म्यतया बौद्धसत्तास्वीकारमन्तरेण न संगच्छेताम्, इत्युक्तिरपि प्रौढिवादमात्रम्। यदुच्यते '**उक्तार्थानामप्रयोगः**' इति न्यायाद् अर्थस्य बाह्यसत्तामात्रस्वीकारे घटरूपस्यार्थस्य सत्ताया बाह्यजगति विद्यमानत्वाद् 'अस्ति' इति प्रयोगोऽसंगतः, **तदेतद् बालभाषितम्**, घटस्य बुद्धिसतो बाह्यसत्तानिर्धारणार्थम् अस्तिक्रियाप्रयोगोऽसंगतः। वस्तुतो बौद्धसत्तां विना बाह्यसत्त स्वीकारेणास्तिक्रियापदस्य सार्थक्यं सिध्यति। बुद्धौ घटसत्तेव पटसत्ताऽपि विद्यते। किञ्च, पटस्य बाह्यसत्ताभावे, पटोऽस्तीति न कोऽपि प्रयुङ्क्ते। पदार्थस्य बाह्यसत्ताम् उपजीव्य बुद्धावागतान् वाचकशब्दैर्बोधयन्ति लोकाः। उपजीव्यत्वाद् बाह्यसत्ताया एव प्राधान्यम्, अतः 'घटोऽस्ति' इति प्रयुञ्जानो वर्त्तमानकालिकघटनिष्ठसत्तां बोधयत्यस्तिक्रियापदेन। एवञ्च "**उक्तार्थानामप्रयोगः**" इति न्यायस्य प्रवेशलेशोऽपि नात्रास्ति।

वस्तुतस्तु इत्थमत्रावधेयम्—'घटः' इत्यत्र घटविषयकज्ञानं सप्रकारकमर्थो वाच्यः। एवमेव घकाराद्यानुपूर्वीघटितशब्दविषयकं ज्ञानं घटत्वप्रकारकम्, वाचकम्पदमिति व्यवह्रियते। अत्रार्थविषयाकारकं ज्ञानमर्थत्वेन रूपेण शब्दविषयकज्ञानाद्भिन्नम्। एवमेव वाचकपदविषयाकारकं ज्ञानं च वाचकपदत्वेन रूपेण (वर्णानुपूर्वीघटितरूपत्वेन) अर्थाकारकज्ञानाद् भिन्नम्। किञ्च, ज्ञानत्वेन रूपेण समानाधिकरणतयो-

१. पाणिनिसूत्रम्—२.४.६; २. तत्रैव—२.४.८६; ३. महाभाष्यम्—१.३.४३।

भयोरप्यभिन्नत्वम् । एवं हि सामानाधिकरण्येन भेदाभेदघटितं शब्दार्थयोस्तादात्म्यं तत्तज्ज्ञानविषयतया सिध्यति । तदेव तादात्म्यं शक्तिः सम्बन्धस्य शक्तिभिन्नत्वं वदतां मतेऽपि नास्ति कश्चिद्दोष इत्यग्रे वक्ष्यामः । एवं तादात्म्यस्वरूपस्वीकारे शब्दार्थयोर्बौद्धसत्ताऽऽवश्यकतैव नोदेति ।

नन्वेवं 'सविषयकं ज्ञानं विषयसत्तासापेक्षम्' इति नियमेन सविषयकज्ञानस्य विषयसत्तासापेक्षत्वाद् घटपदार्थानभिज्ञः सन्निहितं चक्षुरिन्द्रियसंयुक्तं घटपदार्थं पश्यन्नपि तमजानन्नाप्तं पृच्छति—'कोऽयं पदार्थः' इति ? किञ्च, तत्रार्थविषयकज्ञानस्यार्थसान्निध्याद् उद्‌बोधो भवेत् । किञ्च, तद्वाचकपदस्य तत्रासन्निधानात् तद्वाचकपदविषयकज्ञानानुदयात् कथं स "घटः" इत्युत्तरयति, इत्यपि न वाच्यम्, शब्दार्थयोस्तादात्म्यशक्तिग्रहवतां भेदसहिष्णवभेदरूपतादात्म्यसम्बन्धमहिम्नैवासन्निहितस्यापि वाचकपदविषयकज्ञानस्यापि स्वीकारात् । एवमेवासन्निहितेऽपि घटपदार्थे "घटमानय" इत्युक्तिमात्रेणैव घटशब्दसन्निधिमात्रेणैव घटशब्दे तादृशतादात्म्यसम्बन्धेन घटशक्तिग्रहवतां प्रयोज्यस्यासन्निहतस्याप्यर्थस्योक्तार्थविषयकं ज्ञानं जायत एवेत्यपक्षपातया धिया शब्दार्थयोर्बौद्धसत्तास्वीकारे दुराग्रहस्त्याज्य एव । न चाप्येवं 'घटः' इत्युक्ते सन्निहिते घटरूपेऽर्थे तत्समवेतस्याकाशस्यापि बोधो जायताम्, इत्यपि वाच्यम्, घटत्वप्रकारकघटविशेष्यकपदार्थमात्रस्यैव घटपदवाच्यत्वात्, घटपदार्थनिष्ठायाः पृथुबुध्नोदराकारायाः प्रकारताया एव तत्राभ्युपगमाच्च । शब्दार्थयोर्बौद्धसत्तास्वीकाराभावे "घटोऽस्ति" इत्यत्र बाह्यसत्ता घटेन सह "**उक्तार्थानामप्रयोगः**" इति न्यायात् "अस्ति" इति क्रियापदप्रयोगाऽसंगतिरित्यतः शब्दार्थयोर्बौद्धसत्तास्वीकार आवश्यकः । तथा च बौद्धसत्ताविशिष्टघटस्य बाह्यसत्तां बोधयितुम् 'अस्ति' इति चेत्, न, अत्र पृच्छ्यते पण्डितमानी ! "उच्चारितशब्दोऽर्थं गमयति नानुच्चारितः" । घट इति शब्दो द्रव्यं क्रिया वा ? "पदार्थः सत्तां न व्यभिचरति" पदार्थत्वसामान्यस्य सत्ताबोधकः पदार्थविशेषस्य वा स्वसमानाधिकरणसत्ताबोधको द्रव्यं घटशब्दोऽत्रेति चेत्, तर्हि स्वाश्रितसत्तानुकूलक्रियाबोधाय "अस्ति" इति क्रियापदप्रयोगः शब्दार्थयोर्बाह्यसत्तास्वीकारेऽपि संगच्छत एव ।

घटद्रव्यं भावपदार्थान्तर्गतं स्वकीयमभावपदार्थत्वं व्यावर्तयति । एवं तावद् घटस्य बाह्यसत्ता "घटोऽस्ति" इत्यत्र गम्यत उच्चारितघटपदेन । अभावव्यावर्त्तकं भावरूपं घटद्रव्यम् । किञ्च, तद् वर्तमानकालिकसत्ताक्रियाश्रयमित्यर्थबोधाय तु शब्दार्थयोर्बाह्यसत्तास्वीकारेऽपि "अस्ति" इति क्रियापदप्रयोगस्याऽऽवश्यकता भवत्येव । सत्ता-

नुकूलव्यापारार्थकक्रियापदप्रयोगं विना केवलं 'घट' इत्युक्ते सत्तानुकूलव्यापाराश्रयत्वं घटपदस्य प्रयत्नसहस्रैरपि त्वया साधयितुं न शक्यते। अपि च **"क्रियान्वयित्वं कारकत्वम्"** इति **त्वन्मतेऽपि** "अस्ति" इत्युक्तक्रियापदाध्याहारं विना तत्प्रयोगं विना वा कथं घटपदस्य कारकत्वं स्यात् ? किञ्च, कारकत्वाभावे नामार्थत्वाभावे वा तत्र कथं प्रथमा स्यात् ? अतः शब्दार्थयोर्बाह्यसत्तास्वीकारोऽपि "घटोऽस्ति" इत्यत्र अस्ति-क्रियापदप्रयोगः शास्त्रीयत्वात् सुतरां जाघटीति।

एवमेव 'घटो नास्ति' इत्यत्रापि बाह्यघटस्यासत्त्वेऽपि बुद्धौ सतो घटस्य बाह्य-सत्तां वारयितुं 'घटो नास्ति' इति प्रयोक्तुं शक्यते। बौद्धसत्तास्वीकाराभावे बाह्यस्य घटस्याभावे पूर्वसिद्धेऽपि 'घटो नास्ति' इति प्रयोगोऽसंगत इत्यपि न वाच्यम्, तत्तद्देशा-धिकरणकतत्तत्कालिकघटकर्तृकसत्तायां संदिहानं भ्रमज्ञानं वा बोधयितुं शब्दार्थयोर्बाह्य-सत्तास्वीकारोऽपि 'घटो नास्ति" इति प्रयोक्तुं सुशक्यत्वाद् असन्निहितयोरपि बाह्य-सतोर्विषयोर्विषयताज्ञानं तादृशज्ञाने च यथार्थज्ञानसामग्र्यभावे तत्र भ्रमसंशयो भवत इति नियमः प्रमाणसहस्रेणाऽप्यपलपितुमशक्यः।

अन्यथा रज्जौ बाह्यसतोऽनुभूतस्य सन्निहितस्याऽपि सर्पस्य विषयताभानमेव न स्यात्। न च बुद्धौ सतः सन्निहितस्य बाह्यासन्निहितस्यापि सर्पस्य तज्ज्ञानम् इत्यपि न वाच्यम्, बुद्धौ सर्वेषां पदार्थानां सत्ता समाना भवति, बौद्धसत्तास्वीकारपक्षे तर्हि सर्प-स्यैव भानं कथं संगच्छेत ? सादृश्याद् इति चेत्, तदपि न, रज्जुसर्पयोर्बौद्धसत्ताकयोः सादृश्ये किम्मानम् ? तथा च बौद्धसता किं बाह्यसत्तासापेक्षा निरपेक्षा वा ? बाह्य-सत्ता निरपेक्षेति चेत्, तर्हि **बाह्यव्यवहारासिद्धिः**। गगनकुसुमस्यापि यथार्थतापत्तिः। बाह्यसत्तासापेक्षेति चेत् निग्रहस्थाने निपतितोऽसि। बाह्यसत्तयैव व्यवहारनिर्वाहे, कृतं बौद्धसत्तास्वीकारेण, **"बौद्धसत्ता अपास्ता"** इत्याकूतम्।



# प्रकरणनायकत्वविमर्शः

डॉ० राजदेवमिश्रः,
प्राचार्यः,
का० सु० साकेतस्नातकोत्तरमहाविद्यालयस्य
फैजाबाद

❀❀❀

लोकोत्तरवर्णनानिपुणकविकर्मभूतस्य काव्यस्य मुख्यतो भेदद्वयं भवति— १. दृश्यम्, २. श्रव्यं चेति। दृश्यकाव्यमेव रूपकनाट्यप्रेक्ष्याभिनेयाद्यनेकाभिधानैरप्यभिधीयते। अस्य (दृश्यकाव्यस्य) दश भेदा भवन्ति[१]—

१. नाटकम्,
२. प्रकरणम्,
३. भाणः,
४. प्रहसनम्,
५. डिमः,
६. व्यायोगः
७. समवकारः
८. वीथी
९. अङ्कः
१०. ईहामृगश्चेति।

यद्यप्यनुकारात्मकत्वेन समेषां नाट्यभेदानां नास्ति भेदः; परन्तु 'वस्तु नेता रसस्तेषां भेदकः' इत्यादिरीत्या तेषामन्योन्यं भेद इति वेद्यम्[२]। उक्तेष्वखिलेषु नाट्यभेदेषु नाटकप्रकरणनामकभेदावधिकं महत्त्वमावहतः। भेदद्वितयेऽस्मिन् सर्ववृत्तिपरिपूर्णत्वादिकं तत्प्राधान्ये मूलम्[३]। यतो हि प्रकरणे नेता, फलम्, वस्तु वा प्रकर्षण क्रियते कल्प्यतेऽत एव तत् प्रकरणेति पदेनोच्यते[४]। प्रस्तूयमाने निबन्धेऽस्मिन् प्रकरणनायकत्वविमर्शं विधातुं प्रयत्नो जातः।

प्रापणार्थक-'णीञ्'धातोर्ण्वुल्प्रत्यययोगान्नायकपदं निष्पद्यते। यः खलु नाट्य-

---

१. दशरूपकम्, प्र० प्र० कारिका–८; २. तत्रैव।

३. ज्ञेयं प्रकरण चैव तथा नाटकमेव च।
सर्ववृत्तिविनिष्पन्नं नानाबन्धसमाश्रयम्॥ (ना० शा० अध्याय १८ : कारिका ७)

४. 'प्रकर्षेण क्रियते कल्प्यते नेता फलं वस्तु वा समस्तव्यस्ततयाऽत्रेति प्रकरणम्''। (ना० द० द्वि० वि०)

स्येतिवृत्तं फलं च नयति व्याप्नोति, स नायकपदभाग् भवति[1]। नायकस्य कृतेऽन्यानि पदान्यपि यत्र तत्र प्रयुज्यमानानि दृश्यन्ते संस्कृतसाहित्ये। तेषु ( पदेषु ) नेतृनायकपदयोः प्रामुख्यम्। धनञ्जय-विश्वनाथप्रभृतय आचार्या नेतृनायकपदे पर्यायवाचित्वेन व्यवहरन्ति। धनञ्जयस्य नेता नायको विनयादिगुणसम्पन्नो भवतीत्यादिकथनं[2] तथा विश्वनाथस्य 'नेता नायको भवत्यादिवचनं'[3] इति चोभयपदयोः पर्यायवाचित्वं साधयतः। अत्रेदमवश्यमेवावधेयं यद् शृङ्गाररसवर्णने विभावत्वेन नायकपदं सामान्यमर्थमेवावबोधयति; परन्तु तदन्यस्थलेषु सामान्यतो मुख्यपात्रस्यावबोधं कारयति। वस्तुतः काव्ये नाट्ये वा पात्रशब्दः सामान्यमर्थं ज्ञापयति। नेतृनायकपदे क्वचित् सामान्यं क्वचिच्च विशेषमर्थं बोधयतोऽत एव भरतो नाट्यदर्पणकारश्च प्रधानपात्रस्य कृते क्रमशः प्रधाननायकपदं मुख्यनायकपदञ्चापि प्रयुञ्जाते लक्षयतश्च[4]। अलमतिविस्तरेण। निबन्धेऽस्मिन् नायकपदेन प्रधाननायक एवाभिप्रेतः। नाट्ये काव्ये वा नायक एव वस्तुरसादि सम्बद्धसमस्तव्यापारस्य मेरुदण्डत्वं वहति। काव्यस्यान्यानि पात्राणि नायकस्यैव साहाय्यं विधाय कृतार्थतां यान्ति। काव्ये नाट्ये वा नायकस्य प्राधान्यमङ्गीकुर्वन् विद्यानाथो यथार्थमेव कथयति—"अतो नायकस्यैव काव्ये प्राधान्यम्"[5]।

एतादृशमहत्त्वमापन्नस्य नायकस्य चत्वारो भेदा भवन्ति—१. धीरोदात्तः; २. धीरललितः; ३. धीरप्रशान्तः; ४. धीरोद्धतश्चेति। प्रकरणस्य नायकः को भवितुमर्हति? तथा च तस्य चतुर्षु भेदेषु कस्मिन् (भेदे) समावेशः कर्त्तुं शक्यते? प्रश्नोऽयं नाट्यशास्त्राचार्याणां विचारविषयतां गतोऽस्ति। अधो नाट्यशास्त्राचार्याणां मतमाश्रित्य समासतः प्रकरणनायकत्वविचारो विधीयते। अधस्तनतालिकायामाचार्यसम्मतप्रकरणनायकानामुल्लेखः क्रियते, तेन तन्नायकत्वविचारे सौकर्य्यं स्यात्—

| आचार्यनाम अथवा ग्रन्थनाम | तत्सम्मतप्रकरणनायकः |
| --- | --- |
| १. भरतः (अभिनवगुप्तः) | विप्रः, वणिक्, सचिवः, पुरोहितः, अमात्यः, सार्थवाहश्चेति[6]। |

---

१. 'समग्रगुणः कथाव्यापी नायकः'—कथाप्रबन्धस्तद्व्यापी। नयति व्याप्नोति इतिवृत्तं फलं चेति नायकः ( काव्यानुशासनम्—अ० ७ )।

२. दशरूपकम्;

३. साहित्यदर्पणः।

४. नाट्यशास्त्रम्, नाट्यदर्पणश्च;

५. काव्यानुशासनम्।

६. विप्रवणिक्सचिवानां पुरोहितामात्यसार्थवाहानाम्।
चरितं यन्नैकविधं ज्ञेयं तत्प्रकरणं नाम॥ (ना० शा० अध्यायः—१८)

| | |
|---|---|
| २. विष्णुधर्मोत्तरपुराणम् | ब्राह्मणो वणिग् वा[1] । |
| ३. धनञ्जयः (धनिकः) | अमात्यः, विप्रो वणिग्वा (धीरप्रशान्तः)[2] । |
| ४. सागरनन्दी | अमात्यो विप्रः, वणिग्वा[3] । |
| ५. हेमचन्द्रः | विप्रः, वणिक्, सचिवः, पुरोहितः, अमात्यः, सार्थवाहो वा[4] । |
| ६. रामचन्द्रगुणचन्द्रौ | वणिक्, विप्रः (उभौ धीरप्रशान्तौ) सचिवः (धीरोदात्तः) वा[5] । |
| ७. शारदातनयः | विप्रः, वणिक्, सचिवः (धीरप्रशान्ताः) वा[6] । |
| ८ शिङ्गभूपालः | धीरशान्तः[7] । |
| ९. विद्यानाथः | अर्थतः = विप्रः, वणिक्, सचिवः । (धीरशान्तः) वा[8] । |
| १०. विश्वनाथः | अर्थतः = द्विजः, वणिक्, सचिवः । विप्रः, अमात्यः, वणिक् चेति । (धीरप्रशान्तः)[9] । |
| ११. शुभङ्करः | अमात्यः, विप्रः, वणिक्[10] । |
| १२. नरसिंहकविः (अभिनवकालिदासः) | धीरशान्तः (द्विजादयः ?)[11] । |
| १३. श्रीकृष्णकविः | अमात्यः, विप्रः, वैश्यो वा (धीरशान्तः)[12] । |

१. 'ब्राह्मणो नायकस्तत्र वणिग्वा नृपसत्तम' विष्णुधर्मोत्तरपुराणम्, अध्यायः–१७ ।

२ अमात्यविप्रवणिजामेकं कुर्याच्च नायकम् ।। ३९ ।।
धीरप्रशान्तं सापायं.................... । (दशरूपकम्–तृ० प्र० )

३. 'अमात्यविप्रवणिक्चरितशरीरम्' नाटकलक्षणरत्नकोष', पृ० २६३, चौखम्भासंस्करणम् ।

४. काव्यानुशासनम् अध्याय –८ ।

५ 'प्रकरणं वणिक्विप्रसचिवस्वाम्यसङ्करात्' (ना० द० प्र० वि०)

६. वणिक्सचिवविप्राणामेकः स्यात्तत्र नायकः ।।
धीरशान्तश्च ···(भा० प्र० अधिकारः–८)

७. 'यत्रेतिवृत्तमुत्पाद्यं धीरशान्तश्च नायकः' (२१४, रसार्णवसुधाकरः तृ० वि०)

८. 'प्रकरणे उत्पाद्यमितिवृत्तम् धीरशान्तो नायकः'– (प्र० रु० नाटकप्रकरणम्)

९. शृङ्गारोऽङ्गी नायकस्तु विप्रोऽमात्योऽथवा वणिक् ।। (सा० द०, षष्ठः परिच्छेदः)

१०. अमात्यविप्रवणिजां चरितेनैव केवलम् ।
··· ············ कृतं प्रकरणं भवेत् ।। (सं० दामो० च० स्त०)

११. प्रोक्तं प्रकरणे वृत्तमुत्पाद्यं धीरशान्तकः । नेता········ ·· (न० य० वि० ) ।

१२. अथ प्रकरणेऽमात्यो विप्रो वा वैश्य एव वा । धीरशान्तो भवेन्नेता ·।। (मन्दारमरन्दचम्पूः)

अत्रेदं ध्येयं यदाचार्यभरतेन प्रकरणनायकरूपेण विप्रः, वणिक्, सचिवः, पुरोहितः, अमात्यः, सार्थवाहो वा स्वीक्रियते। यद्यपि भरतः, सागरनन्दी, शुभङ्करश्च स्वप्रकरणलक्षणे स्पष्टतो विप्रादीनां नायकत्वोल्लेखं न विदधति, तथाप्यर्थतस्तेषां प्रकरणनायकत्वं सिध्यति। भरतानन्तरं नास्ति कोऽप्येतादृश आचार्यो यो भरत-सम्मतान् सर्वान् विप्रादीन् प्रकरणनायकत्वेन मन्यते। केवलं हेमचन्द्र एकाक्येव भरता-भिप्रेतान् सर्वान् नायकान् स्वीकरोति। शिङ्गभूपालो विद्यानाथो नरसिंहकविश्च प्रकरणलक्षणप्रतिपादनप्रसङ्गे प्रकरणनायकत्वेन नायकप्रकारविशेषं धीरशान्तमेवो-ल्लिखन्ति, विप्रादीन् शब्दतो नोच्चारयन्ति; परन्तु विप्रवणिक्सचिवानां धीरशान्तत्वं ते [1]स्वीकुर्वन्त्यतोऽर्थतः सिध्यति यत्तेषां मते विप्रवणिक्सचिवाः प्रकरणनायकरूपेणा-भीष्टाः। भरतसम्मतं पुरोहितं सार्थवाहञ्च प्रकरणनायकत्वेन न कोऽपि स्वीकरोति। शुभङ्करकृतसङ्गीतदामोदरे विप्रामात्यादिभिः सह सार्थवाहस्योल्लेखो जातः[2]। विष्णु-धर्मोत्तरपुराणकृत् पुरोहितसार्थवाहाभ्यां साकं सचिवस्यापि तन्नायकत्वं जहाति। स विप्रपदस्थाने ब्राह्मणपदं प्रयुज्य वणिग्ब्राह्मणयोः प्रकरणनायकतामङ्गीकुरुते। हेमचन्द्रो रामचन्द्रः शारदातनयश्च विप्रवणिक्सचिवान् रूपकभेदप्रकरणस्य नायकतयाऽङ्गी-कुर्वन्ति। धनञ्जयः सागरनन्दी विश्वनाथः शुभङ्करश्च सचिवपदस्थानेऽमात्यपदं प्रयुज्य विप्रवणिगमात्यान् तद्रूपेणाभिमन्यन्ते। श्रीकृष्णकविर्वणिजः स्थाने वैश्यपदं सचिवस्थानेऽ-मात्यं कृत्वा विप्रवैश्यामात्यान् प्रकरणनायकरूपेण स्वीकुरुते।

भरतेन विप्रो वणिक्, सचिवः, पुरोहितः, अमात्यः, सार्थवाहश्च प्रकरणनाय-कत्वेनाभिप्रेता इति प्राक् प्रतिपादितम्। अत्र कतिपयप्रश्नाः प्रसङ्गोपेतत्वेनोपस्थिता भवन्ति। विप्रपुरोहितयोः, सचिवामात्ययोर्वणिक्सार्थवाहयोश्च मध्ये को भेदः? एषु पदयुगलेषु पुनरुक्तिदोषसम्बद्धा शङ्का परिलक्ष्यमाणा भवति। आशङ्कामिमां मनसि निधायाभिनवभारतीकारेणाभिनवगुप्तेन तत्समाधिर्विहितः। तन्मतानुसारेण सचिव-स्यार्थो मन्त्री, अमात्यस्य अधिकृतः, सार्थवाहस्य पण्यानामाहर्त्ता, वणिजश्च क्रयविक्रय-कर्त्ता चास्ति[3]। अधिकृतपदेन राज्याधिकारिणः पण्यानामाहर्तृपदेन च लोकप्रचलितस्य

---

१. ललितादिगुणोपेतो विप्रो वा सचिवो वणिक्।
धीरशान्तः..........॥ (रसार्णव०) धीरशान्तो द्विजादिकः, द्विजातिक इत्यादिग्रहणाद्वणिक्-सचिवौ विवक्षितौ॥ (प्र० रु० नाटकप्रकरणम्)

२. विप्रामात्यसार्थवाहवणिजां तत्तच्चरित्रान्वितम्।

३. सचिवो मन्त्री, अमात्योऽधिकृतः सार्थवाहस्तावत्पण्यानामाहर्त्ता, तद्देशक्रयविक्रयकृतो वणिजोऽन्य एव। (ना० शा० १८ अध्यायः, अभिनवभारती)

सौदागरपदस्य बोधो भवति, यः खलु क्रयविक्रययोग्यवस्तूनीतस्ततत आहरति। विप्र-पुरोहितपदयोः परिलक्ष्यमाणं पुनरुक्तिरूपं दोषमभिनवगुप्तो न परिजहार। अस्मन्मते विप्रेतिपदेन षट् कर्मणो (यजन-याजन-दान-प्रतिग्रहाध्ययनाध्यापनरूपषट्कर्मकर्त्तारः) ब्राह्मणाः, तथा पुरोहितपदेन पौरोहित्यवृत्तिकाश्च ब्राह्मणा अभिप्रेतास्तत्र। नाट्य-दर्पणकारेण नाट्यदर्पणे 'विप्राः षट्कर्माणः[1]' इत्युक्तमेव।

अत्रेदमवश्यमेवावधेयं यद् धनञ्जयदशरूपकस्य टीकाकृद् धनिको मन्त्रिणः (भरतप्रोक्तसचिवस्य) अमात्ये तथा सार्थवाहस्य वणिग्विशेषे परिगणनां करोति[2]। नाट्यदर्पणकारैः सचिवपदेन राज्यचिन्तकरूपोऽर्थो गृहीतो यस्मिन्नमात्यसेनापत्योरपि ग्रहणं कर्तुं शक्यते[3]।

नाट्यशास्त्राचार्यैर्न केवलं प्रकरणनायकरूपेणापेक्षितानां जनानां विचार एव कृतः; अपि तु तैस्तत्र नायकत्वेनानपेक्षितानां निषेधविधानमपि कृतम्। आचार्यभरतः स्वीयप्रकरणलक्षणे 'नोदात्तनायककृतं,' 'न दिव्यचरितं'. 'न राजसम्भोगम्' इत्यादि-पदत्रयं प्रयुङ्क्ते। तेन प्रतीयते यद् भरतमते प्रकरण उदात्तकोटिका जनाः, देवाः, राजा-दयश्च न नायकत्वेन वाञ्छिताः। आचार्याभिनवगुप्तस्तु न केवलं प्रकरणनायकरूपेण देवानां खण्डनं करोत्यपि तु स प्रकरणे देवचरितवर्णनमपि निराकरोति[4]। सन्दर्भेऽ-स्मिन् नाट्यदर्पणकारैरपि सम्यग् विचारितम्। तेषां मते प्रकरणस्य नायका व्युत्पाद्याः सामाजिकाश्च सर्वे मध्यमप्रकृतिका भवन्ति। अत एवोत्तमप्रकृतीनां कृते न तत्र स्थानम्। तैः खलु नाटके तु दिव्यपात्राणामङ्गरूपेण स्थितिः स्वीक्रियते; परन्तु प्रकरणे तु तदपि नेष्यते। तेषां मते दिव्यजनेषु सुखबाहुल्यं दुःखाल्पत्वं च भवति। प्रकरण-स्वभावमभिलक्ष्य तेषां चरितेषु किमपि परिवर्तनं क्रियेत चेत्, तेषां दिव्यत्वमेव हीयेत[5]।

उपर्युक्तप्रकारेण नाट्याचार्यप्रतिपादितानां प्रकरणापेक्षितानां नायकानामूहा-पोहश्चेत् क्रियेत, तर्हि नूनमेव वक्तुं शक्येत निष्कर्षतो यद् विप्रः, सचिवो, वणिक् च

---

१. नाट्यदर्पणः, द्वि० वि०।

२. मन्त्री अमात्य एव सार्थवाहो वणिग्विशेष एव (दशरूपकम्–तृ० प्र०)।

३. 'सचिवो राज्यचिन्तकः' (ना० द० द्वि० वि०)

४. नाट्यशास्त्रम्, १८ अध्यायः, अभिनवभारती, कारिका–४९।

५. प्रकरणे हि नायको व्युत्पाद्यश्च मध्यमप्रकृतिरेव। 'दिव्यानाश्रितम्' इति दिव्यैरनाश्रितम्। नाटके हि अङ्गत्वेन दिव्यो भवति। प्रकरणे तु तथाभावोऽपि नेष्टः, तस्य सुखबाहुल्येनाल्प-दुःखत्वात्। अपरथा दिव्यत्वमेव हीयेत। (ना० द० द्वि० वि०)।

प्रकरणनायकत्वेन बहुमतेन स्वीकृताः। कैश्चिदाचार्यैर्विप्रस्थाने द्विजस्य ब्राह्मणस्य वा तथा सचिवस्थानेऽमात्यस्य चेत् प्रयोगो विहितस्तत्र न कोऽपि विशेष इति ध्येयम्। पुरोहितसार्थवाहौ प्राय उपेक्षितौ।

सम्प्रति विचारणीयोऽयं प्रश्नो यत् प्रकरणस्य नायकानां धीरोदात्तादिषु चतुर्षु भेदेषु कस्मिन् भेदे परिगणना क्रियेत ? एष प्रश्नोऽपि नाट्यशास्त्राचार्याणां विचार-विषयतां गतोऽस्ति। आचार्यभरतो विष्णुधर्मोत्तरपुराणकारः, हेमचन्द्रः, सागरनन्दी, शुभङ्करश्च नेदं स्पष्टीकुर्वन्ति यत् तत्प्रतिपादिताः प्रकरणनायकाः पूर्वोक्तेषु भेदेषु कस्मिन् परिगणिता भवेयुरिति ? धनञ्जयः, शारदातनयः, विश्वनाथः, श्रीकृष्णकविश्च प्रकरणप्रतिपादितानां नायकानां धीरप्रशान्तत्वमभिलषन्ति। नाट्यदर्पणकारौ रामचन्द्रगुणचन्द्रौ तन्नायकानां धीरप्रशान्तत्वं धीरोदात्तत्वं च वाञ्छतः। शिङ्गभूपालो विद्यानाथो नरसिंहकविश्च प्रकरणनायकस्य धीरप्रशान्तस्वरूपमेव प्रतिपादयन्ति, न तु तदात्मनः कस्यचिदुल्लेखं विदधति।

विवेचनेनेदं सुगमतया सिध्यति यद् बहुसंख्याका आचार्याः प्रकरणनायकस्य धीरप्रशान्तत्वमेव स्वीकुर्वन्ति। केवलं रामचन्द्रगुणचन्द्रौ तन्नायकस्य केवलं धीर प्रशान्तत्वं खण्डयतस्तथा धीरोदात्तत्वं धीरप्रशान्तत्वञ्च मण्डयतः। शेषा भरतप्रभृतयस्त-द्विषये स्पष्टतो न किमपि कथयन्ति। द्वितीयतृतीयवर्गपतितानामाचार्याणामेतद्विषयकं मतं समासतो विवेच्यते।

भरतेन चतुर्णां नायकभेदानां वर्णनं नाट्यशास्त्र इत्थं कृतम्—

देवा धीरोद्धता ज्ञेयाः स्युर्धीरललिता नृपाः।
सेनापतिरमात्यश्च धीरोदात्तौ प्रकीर्तितौ॥
धीरप्रशान्ता विज्ञेया ब्राह्मणा वणिजस्तथा। (ना० १)

एतद्विधानानुसारेण भरतसम्मतप्रकरणनायका विप्रवणिक्पुरोहितसार्थवाहा धीरप्रशान्तनाम्नि भेदे पतन्ति, अमात्यश्च धीरोदात्तकोटिं गच्छति। भरतेन सचिवोऽमात्यश्च पृथग्रूपेणोल्लिखितौ। अभिनवगुप्तेन सचिवपदस्यार्थो मन्त्री, अमात्यपदस्य चार्थोऽधिकृत इति क्रियते। इत्थं सचिवोऽमात्ये न परिगणयितुं शक्यते। अस्यां दशायामयं प्रश्नः स्वभावतः उत्तिष्ठति यत् सचिवस्य गणना कस्मिन् भेदे क्रियेत ? सचिवोऽमात्यवद् धीरोदात्तरूपेण स्वीक्रियते चेत् तदा द्वितीयोऽयं प्रश्नः समापततीति यद् भरतकृतप्रकरणलक्षणगतस्य 'नोदात्तनायककृतम्' इति पदस्य कोऽर्थः। अनेन पदेन प्रकरणे धीरोदात्तनायकस्य निषेधोऽभीष्टश्चेत् कथं सचिवामात्ययोर्धीरोदात्तत्वं स्वीकर्तुं शक्येत ? मम मते लक्षणगतस्य 'नोदात्तनायक'पदस्य धीरोदात्तनिषेधमूलकोऽर्थो नास्ति। अतः

सचिवामात्ययोरुभयोरपि धीरोदात्तनामकभेदे परिगणनां विधाय प्रकरणस्य नायका उभयकोटिकाः ( धीरोदात्तधीरप्रशान्तकोटिकाः ) भवितुमर्हन्तीत्यर्थः कर्त्तव्यः। एतत् सर्वं मनसि निधाय रामचन्द्रप्रभृतयः प्रकरणस्य केवलं धीरप्रशान्तनायकत्वं खण्डयन्ति, तन्नायकस्य धीरोदात्तत्वधीरप्रशान्तत्वञ्चोभयं स्वीकुर्वन्ति—

"सचिवो राज्यचिन्तकः। अयं वणिग्विप्रयोर्मध्यपात्यपि धीरोदात्तधीर-प्रशान्तौ प्रकरणे नेतारौ भवत इति प्रतिपादनार्थं पृथगुपात्तः। यस्त्वमात्यं नेतारमभ्युपगम्य धीरप्रशान्तनायकमिति 'प्रकरणं' विशेषयति, स वृद्धसम्प्रदायो वन्ध्यः। यदाहुः—सेनापतिरमात्यश्च धीरोदात्तौ प्रकीर्तितौ[1]।"

विष्णुधर्मोत्तरपुराणकृतो मतानुसारेण देवा धीरोद्धताः, नृपा धीरललिताः, ऋषयो धीरप्रशान्ताः, विप्राश्च धीरोदात्ता भवन्ति। तस्य मते 'वणिक्' उदात्तकोटौ परिगणितः[2]। अतोऽस्य मतानुसारेण नायको विप्रः ( ब्राह्मणः ) चेत्, स धीरोदात्तः, वणिक् चेदुदात्तो भविष्यति।

हेमचन्द्रस्त्वक्षरशो भरतमनुकरोत्यतस्तन्मत विवेचनं विशेषतो नापेक्ष्यते।

सागरनन्दिनो मतेऽमात्यसेनापत्योर्धीरोदात्ते श्रोत्रियसार्थवाहयोश्च धीरप्रशान्ते परिगणना क्रियते। तेन स्पष्टतो विप्रस्य ( ब्राह्मणस्य ) वणिजश्च धीरप्रशान्ते परिगणनं न कृतम्। कोशग्रन्थानुसारेण श्रोत्रियपदेन यदि वेदादिपारङ्गता ब्राह्मणा गृह्येरन्, सार्थवाहपदेन सामान्यतो वणिजां च बोधः क्रियेत, तर्हि विप्रवणिजौ धीरप्रशान्तकोटौ परिगणितौ स्याताम्। अमात्यस्य धीरोदात्तप्रकारे गणनं तु निर्विवादमेव। इत्थं वक्तुं शक्येत यत् प्रकरणनायकस्य धीरोदात्तत्वं धीरप्रशान्तत्वञ्चोभयमपि सागरनन्दिनोऽभिप्रेतम्।

शुभङ्करेण प्रकरणनायकस्य प्रत्यक्षतोऽप्रत्यक्षतो वा कस्मिन्नपि प्रकारे स्थितिर्न सूचितेति शम्।

●

---

१. नाट्यदर्पणः, द्वि० वि०; २. विष्णुधर्मोत्तरपुराणम्।

# साहित्यशास्त्रे योगदृशा रसबोधविमर्शः

**श्रीशिवजी उपाध्यायः**

**प्राध्यापकः,**

**साहित्यविभागे**

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य,

वाराणसी

❀❀❀

काव्यसौन्दर्यबोधकत्वेन शब्दार्थयोः सहभावः समपेक्ष्यते। काव्यगतं सौन्दर्यं च रसगुणालङ्कारादिभिः कामनीयकजनकैरुपपद्यते। यद्यपि "सौन्दर्यमलङ्कारः" इति वामनकृतालङ्कारलक्षणमेव सौन्दर्यघटकमुक्तम्, परं चमत्कारातिशयव्यञ्जकत्वेन सौन्दर्य-पदं व्यापकमर्थमनुसम्बध्नाति। तादृशचमत्कारातिशयाभिव्यञ्जकं सौन्दयं शब्दार्थयोः सहभावरूपं साहित्यमनुसरति। काव्यशास्त्रमेव साहित्यशब्देन व्यपदिश्यते। प्राक्काले काव्यशास्त्रमिदं काव्यालङ्कार इति व्यवह्रियमाणमभूत्, तदानीं निखिलाचार्यप्रणीत-ग्रन्थानां "काव्यालङ्कारः" इत्येव 'नाम' प्रसिद्धिमापत्। पश्चात्कालक्रमेणालङ्कारशास्त्र-मिति नामकरणं समजायत। अत्र शासनात् शास्त्रमिति व्युत्पत्तेरनुपपत्त्या शंसनात् शास्त्रमिति व्युत्पत्तिः संगच्छते। शासनात् शास्त्रमिति तु वेदादिष्वेवोपयुज्यते। तत्र भामहाद्याचार्यैः "काव्यालङ्कार" इति स्वग्रन्थाभिधानरूपेण प्रयुक्तम्। अनन्तरं प्रताप-रुद्रीयटीकायां तदेवालङ्कारशास्त्रमभिहितम्। पश्चादेकादशशताब्द्यां भोजदेवेन सरस्वती-कण्ठाभरणे स्वग्रन्थे काव्यशास्त्रमिति नाम संज्ञितम्। ततश्चतुर्दशशताब्द्यां विश्वनाथः काव्यशास्त्रस्य कृते 'साहित्यम्' इति प्रायुङ्क्त। यद्यप्यलङ्कारसर्वस्वकारो रुय्यकोऽप्ये-कादशशताब्द्यां साहित्यमीमांसाख्ये स्वग्रन्थे साहित्यमित्याख्यातवांस्तथापि तदप्रसिद्धे-स्तत्प्रयोगश्रेयोभाजनता तस्य नाभ्युपेयते। "शब्दार्थौ सहितौ काव्यं गद्यं पद्यं च तद् द्विधा" इति भामहोक्तकाव्यलक्षणानुसारेण शब्दार्थयोः साहित्यं काव्यमिति साहित्यपदं प्रागेवोपलभ्यते। नवमशताब्द्यां राजशेखरेणापि काव्यमीमांसायां पञ्चमी साहित्यविद्या इति यायावरीयः' इत्युक्त्वा साहित्यं वेदाङ्गत्वेन विशेषितम्। अतश्च विश्वनाथ एवास्यापि प्रवर्तक इति नैतिह्यसिद्धं भवति। अथापि साहित्यं शास्त्रत्वेन दृढीकृत्योच्चैः पदमारोपितं तेनेति तदीयं तदर्थमवदानमुरीकर्तव्यम्।

अस्य साहित्यशास्त्रस्य कृते प्राचीनतरकाले 'क्रियाकल्पः' इति पदप्रयोगो वात्स्यायनकामसूत्रे, ललितविस्तराख्ये बौद्धग्रन्थे च समुपलभ्यते। तदर्थश्च तट्टीकाकृता काव्यकरणविधिः काव्यालङ्कारश्चेति विहितः। वाल्मीकिरामायणस्योत्तरकाण्डे लवकुशगीतश्रवणावसरे रामसभायां वैयाकरणनैगमादिभिः सह 'क्रियाकल्पविदः' काव्यविदश्चेति पदद्वयं प्राप्यते। वस्तुतस्तु काव्यबीजं वेद एवोपलभ्यते—"पश्य देवस्य काव्यं न ममार न जीर्यति" इति श्रुत्युक्तेः काव्यतत्त्वानां सर्वत्र वेदमन्त्रेषु बहुश उपलब्धेश्च शब्दार्थयोः सहभावरूपस्य साहित्यस्यानादित्वमेव प्रतितिष्ठति।

अथ किं नाम साहित्यमित्यपेक्षायां सहितयोः शब्दार्थयोर्भावः साहित्यमित्युच्यते। हितं सौहित्यं वा सम्पादयत्साहित्यं काव्यमिति व्यपदिश्यते। अनयोः शब्दार्थयोः सामञ्जस्येनाऽन्यूनत्वेनाऽनतिरिक्तत्वेन च शोभाशालित्वमुद्दिश्य मनोहारिणी कापि संस्थितिः साहित्यमित्युदीर्यते[१]। साहित्यं हि कदा प्रभृति वाङ्मयाधिकृतत्वेन काव्यजगति व्यपदेशमभजदिति तदीयमैतिह्यगतं तत्त्वं साहित्यपर्यालोचनप्रकरणे निरूपयिष्यते, सम्प्रति साहित्यान्तर्गतस्य रसस्य दिगुन्मीलनं क्रियते।

अथ कोऽयं रस इति विवेचनीयो विषयः। 'रसो वै सः', 'रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति' इति श्रुतिवचनात् श्रौतकालादेव रसः परमात्मस्वरूपतया वाङ्मयात्मत्वमभिप्रपेदे। ततः पश्चाद्—"विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः" इति भरतमुनिप्रणीतं रससूत्र काव्यजगति प्राधान्येन पदं न्यधत्त। तदेव सूत्र व्याख्यातॄणां नैकेषामाचार्याणां विविधविधप्रतिपादनशैलीभङ्गीविशेषेण विस्तरेण व्यापकतामवापत्। अधुनाऽपि कोऽयं रस इति प्रश्नः सहृदयानां मनीषिणां विवेचनाविषयतां प्रतिपद्यते। फलतः स्वातन्त्र्येण रसमेव विषयीकृत्य नैकमतसम्भृतविचारा ग्रन्थाश्च प्रादुरभवन्, प्रादुर्भवन्ति, प्रादुर्भविष्यन्ति च। अनेकास्तदीया व्याख्याः प्रस्तुताः। प्राचुर्येण पुराकालादद्यावधि कृतेऽपि बहुशो विचारे तद्गतं रहस्यं तत्त्वतः पूर्णतया समुन्मीलितं नाभूदिति परमात्मवत्तदीयं व्यापकत्वं सुतरामनुमातुं शक्यते। निगूढं रहस्यं हि कुतूहलजनकं भवति, तेन प्रवृत्तिः समुदेति, प्रवृत्त्या च फलनिष्पत्तिरिति मान्यः क्रमः।

सम्प्रति वैज्ञानिके युगे साहित्यातिरिक्तक्षेत्रान्तर्गतानां मानवानां कृते नास्ति रसो जिज्ञासाविषयीभूतः, तथापि तेषामुत्कण्ठाप्रयोजकस्त्वसौ वरीवर्त्येव। काव्यमधीत्य नाटकञ्चावलोक्य रसानुभूतौ मनागान्तर्यं न जायते। समेषां सा रसानुभूतिर्भवत्येव। अथ

---

१. साहित्यमनयोः शोभाशालितां प्रति काऽप्यसौ।

अन्यूनानतिरिक्तत्वमनोहारिण्यवस्थितिः ॥ (वक्रोक्तिजीवितम्—प्र० प०)

का सा रसानुभूतिः ? कथं च निष्पद्यते ? कोऽत्र हेतुः ? कः क्रमः ? इत्यादयोऽनेके प्रश्ना उद्भवन्ति। एकैकशो रसस्वरूपविवेचनपूर्वकं रसनिष्पत्तिप्रक्रिया मनोवैज्ञानिकदृशा विचार्यते—कोऽयं रस इत्येषा जिज्ञासा काव्यशास्त्रेतिहासवत् प्राक्तनी विद्यते। भरतमुनिप्रणीते नाट्यशास्त्रे षष्ठाध्याये रसविषयकः प्रश्नः समुभ्युदितः—"अत्राह—रस इति कः ? तत्रोत्तरितम्—"पदार्थ इत्युच्यते"। 'पदार्थः' इत्यस्य तात्पर्यं वस्तुविशेषे नास्ति, अपि तु काव्यार्थ एव संश्लिष्यति। इममेवार्थमभिनवगुप्तपादाचार्यः परिपुष्णाति। रसेन काव्यार्थभावनाया जायमानत्वाद् रसः काव्यार्थ एवेति मन्तव्यम्। स एव पदार्थव्यपदेशभाग् भवति। यथोक्तम्—"काव्यार्थान् भावयन्ति इति। तत्काव्यार्थो रसः", तस्माद् आस्वाद्यत्वात् पदार्थः काव्यार्थो वा रसः। अत्र नाट्यशास्त्रोक्तिरेव प्रमाणम्। यतश्च काव्यात् काव्यार्थस्यैवास्वादो जायते। काव्यार्थ एवास्वाद्यः, ततः स एव रसः[1]। भावत्वेन भावाश्चापि आङ्गिकवाचिकमानसिककृताभ्यासाभिनयद्वारा काव्यार्थभावनां जनयन्तोऽन्वर्थतां प्रतिपद्यते[2]।

आस्वादो रस अस्वाद्यो वेति जिज्ञासायां निष्कर्षतया रस आस्वाद एवेति स्वीकर्त्तव्यम्[3]। यतो हि रसस्यास्वाद्यत्वे निष्ठ्यनिष्ठत्वमनुभवविरुद्धं प्रसज्यते। सर्वानुभवसिद्धतया तस्य विषयित्वेन व्यक्तिनिष्ठत्वं समुचितम्। अत्र नास्ति कस्यापि विसंवादः। वस्तुतो रसः कस्यापि बाह्यविषयस्य गुणानां प्रत्यक्षात्मकं ज्ञानं नाङ्गीक्रियते, तथात्वे सत्येव तस्य विषयनिष्ठत्वं युज्यते। आपामरतिर्यगादिजीवानामिन्द्रियार्थसन्निकर्षजन्यज्ञानानुभवविषयीभूतो रसो नास्तीति कृत्वा तस्य विषयनिष्ठत्वं सर्वथा परास्तम्, केवलं केषाञ्चित् सहृदयानां तदास्वादो जायते। किञ्च, विषयनिष्ठोऽनुभवो देशकालपात्रव्यक्तिभेदात् सामान्यतया विभिन्नप्रकारकः, विशेषतश्च सुखदुःखमोहात्मको भवति। रसात्मकोऽनुभवश्च केवल आनन्दात्मको विशिष्य पुण्यशालिनामेव सञ्जायते—"पुण्यवन्तः प्रमिण्वन्ति योगिवद् रससन्ततिम्' इत्युक्तेः। यतः प्राक्तनेदानीन्तनोभयविधवासनावासितान्तःकरणानामेव सहृदयानां रसात्मकोऽनुभवः सम्भवति। उभयोरेकतरस्याभावे तदास्वादो नोपजायते। तस्मात्सहृदयानां हृदयेषु वासनात्मतया स्थितानां मनोभावानां स्थाय्यादिपदवाच्यानामनुभवात्मिको बोधो रस इत्युक्तं भवति।

---

१. आस्वादनात्मानुभवो रसः काव्यार्थ उच्यते ॥ (अभिनवभारती, पृ०–२७७ )

२. वागङ्गसत्त्वोपेतान् काव्यार्थान् भावयन्तीति भावाः। (ना॰ शा॰ अ॰ ७)

३. रस इतिः कः पदार्थ उच्यते, आस्वाद्यत्वात्। (ना॰ शा॰ अ॰ ६)

ननु नाट्यशास्त्रे रस आस्वाद्य इत्युक्तम् 'रस आस्वाद्यते' इति कर्मवाच्य-प्रयोगाद् आस्वादविषयत्वेन रसस्यास्वाद्यत्वं सिध्यति, तर्हि आस्वादो रस इति वचनं परस्परविरुद्ध प्रतिभातीति चेत्, मैवं वाच्यम्, यतो हि सहृदयानां सामाजिकानां मनोगताः स्थायिरूपेण विद्यमाना रत्यादिभावा वासनात्मकानु[1]भवविषयीभूताः रसत्व-मभ्युपगच्छन्ति, तस्माद् 'रस आस्वाद्यते' इत्याद्युक्तिरौपचारिकप्रयोग एव मन्तव्यः। उक्तञ्च साहित्यदर्पणकृता श्रीविश्वनाथेन—'रस आस्वाद्यते' इति प्रयोगस्तु ओदनं पचतीतिवद् औपचारिक एव। अतश्च रसो वा रसात्मकोऽनुभवो वा आस्वाद एव, न त्वास्वाद्यः।

भरतमुनिप्रणीतं नाट्यशास्त्रं हि रसविषयकः शास्त्रीयविवेचनायाः प्रथमो ग्रन्थ उपलभ्यते। तत्र तत्र रसानुभवः साक्षात्कारात्मकः स्वीकृतः। इन्द्रियसन्निकर्ष-जन्यज्ञानानुभवस्तदर्थं नोपयुज्यते। रत्यादयो भावा मनोगताः स्थायित्वेन तिष्ठन्ति, तेषां मानसिकः समुद्भवः 'उद्रेकः' इत्युच्यते। तेन अनुभवविषयतामुपगच्छन्ति। तेषा-मुद्रेको द्विविधः सम्भवति—एकतो दैनन्दिनव्यवहारे प्रत्यक्षमुपस्थितेषु विषयेषु, अपरतश्च काव्यवर्णने नाटकाभिनये वा तेषु साक्षात्कृतेषु सत्सु। काव्ये नाट्ये वा यदा तदुद्भेदो भवति, तदा ते साक्षान्मनसैवानुभवविषया भवन्ति। जाते हि तस्मिन् मानसिके प्रत्यक्षे सहृदयानां सामाजिकानां समुद्भिन्ना रत्यादिस्थायिनो भावा विगलितवेद्यान्तरस्पर्श-संश्लिष्टेन चेतसाऽऽस्वादनात्मकानुभवविषयतां प्रतिपद्यमाना रसत्वमभ्युपगच्छन्ति। अयमेव रसानुभवप्रकारः साहित्यशास्त्रपरम्परायां समादृतः।

निष्कर्षतयेदं प्रतीयते यत् सहृदयजनमनोभावानुभव एव रसः। काव्यवर्णनै-र्नाट्यदृश्यैश्च तेषां भावानामुद्रेको जायते। तदुद्रेकवशात्तेऽनुभवविषयतां भजन्ते। अयमेवानुभवो मनसाऽऽस्वादनमित्युच्यते[2]। अत एव रसो नास्ति विषयनिष्ठोऽपि तु विषयिनिष्ठ एव, तस्यास्वाद्यविषयकधर्माभावेन आस्वादनकर्तुः सहृदयसामाजिकस्य विषयिणो धर्मस्वरूपत्वात्[3]। स्वगतधर्मानुभवस्य च व्यक्तिनिष्ठतैवोचिता; न तु विषय-

---

१ यथोक्तम् धर्मदत्तेन—

सवासनानां सभ्यानां रसस्यानुभवो भवेत्।
निर्वासनास्तु रङ्गान्तः काष्ठकुड्याश्मसन्निभाः॥

२. भावाभिनयसंबद्धान् स्थायिभावांस्तथा बुधाः।
आस्वादयन्ति मनसा तस्मान्नाट्यरसाः स्मृताः॥ (ना० शा० अ०, ६।३३)

३. रसः स एव स्वाद्यत्वाद् रसिकस्यैव वर्तनात्।

निष्ठतोपपद्यते तस्येति। अत एव रसोऽयं रसास्वादनक्षमसहृदयानुभवप्रमाणकः, आत्मानन्दसमुद्भवः साक्षादास्वाद इत्युक्तः[१]।

धनञ्जयोक्त्या हि बाला यथा मृण्मयैर्हस्तिपश्वादिभिः क्रीडन्तोऽवास्तविकानपि तान् वास्तविकानिति मत्वा सोत्साहमानन्दमनुभवन्ति, तथैव काव्यनाट्यवर्णनागतैः पात्रैरवास्तविकैरपि समुद्भाविता भावा सामाजिकानामनुभवविषयतां गता आह्लादं जनयन्ति।

क्रीडतां मृन्मयैर्यद्वद् बालानां द्विरदादिभिः।
स्वोत्साहः स्वदते तद्वच्छ्रोतृणामर्जुनादिभिः ॥(दशरूपके, अ० ४।४१)

उत्साहादिभावानामनुभव एवात्र 'स्वदते' इति क्रियापदैर्नोक्तः। अनुभवोऽयमास्वादनात्मक एव। उक्तञ्च भट्टनायकेन—'काव्येन रसा भाव्यन्ते'। एतदुक्तेर्विश्लेषणं कुर्वताऽऽचार्याभिनवगुप्तपादेन प्रत्यपादि—'यत् काव्येन रसा भाव्यन्ते—इत्युच्यते, तत्र विभावादिजनितचर्वणात्मकास्वादरूपप्रत्ययगोचरतापादनमेव यदि भावनं तदभ्युपगम्यत एव'।

काव्यार्थस्यास्वादनात्मकोऽनुभवो रस इत्युक्तेस्तात्पर्यं यत् काव्यार्थ एव व्यञ्जनाव्यापारविषयीभूतो व्यज्यमान आस्वादनात्मकानुभवः सम्पद्यमानो रसत्वेन पर्यवस्यति[२]। एवं हि रसास्वादो नाम बौद्धिकप्रक्रियाजन्यज्ञानस्य तथा मानसिकप्रक्रियाजन्यानुभवस्य[३] च समवायात्मको बोद्धव्यः। अत एव स एव काव्याधिकारी यो हि विमलप्रतिभोच्छलत्स्वच्छविशदस्वान्तः सहृदयः। काव्यात्मकवाक्यश्रवणान्तरमेव वाक्यार्थबोधसमकालं समुद्भूतेन मानसिकबोधेन काव्यविषयाः साक्षात्क्रियमाणा स्वानुभवप्रत्यक्षीकारक्रियामुपगच्छन्ति। एष एव सहृदयसंवादः स्वबुद्धिगतविषयानुभवः", "काव्यार्थसम्भेदादात्मानन्दसमुद्भवः स्वादः" एव प्रोच्यते, तद्भाजश्च सहृदया भवन्तीति।

उपर्युक्तेन विवेचनेनेदं स्पष्टं प्रतीयते यद् रसानुभूतिः मानसप्रत्यक्षविषयात्मिकेति। अपि च मनोविकाराणां तत्तदवस्थायाः स्वात्मानुभवो वेति वक्तुं युज्यते। कश्चिदपि बाह्यो विषय इन्द्रियसन्निकर्षमुपगतो मनो नूनमाकर्षति। तत्परिणामश्च

१. स्वादः काव्यार्थसंभेदादात्मानन्दसमुद्भवः ॥ (अभिनवभारती, पृ० २७७)

२. 'आस्वादनात्मानुभवो रसः काव्यार्थ उच्यते' ॥

३. अनुभवेन च तद्विषय इति मन्तव्यम् ॥ (अ० भा०)

तत्तन्मनोविकाराणामनुभूतिः सञ्जायते[1]। एत एव मनोविकारा योगशास्त्रे चित्तवृत्ति-रूपेण निरूपिताः सन्ति। यतश्च तासां विकृतिरूपाणां चित्तवृत्तीनां निरोध एव योगः[2]। योगशास्त्रे च विविधानां वृत्तीनां सूक्ष्मातिसूक्ष्ममनुसन्धानं सन्दृश्यते। रस-निष्पत्तिप्रकारे योगे चोभयत्र चित्ते नामान्तःकरणात्मिकाबुद्धिरित्येव [3]मन्यते, न तु चितिशक्तिः स्वात्मा वेति। यतो हि योगे वा काव्ये वा याऽनुभूतिः, सा निश्चयात्मिकैव भवति। इयमेवानुभूतिरध्यवसाय इत्युच्यते। अर्थाद् बुद्धेश्चित्तस्य वा निश्चयात्मिका वृत्तिरेवाध्यवसायः। ज्ञानञ्च तद्गतो धर्मः, सैव ज्ञानात्मिका प्रक्रिया, तत्रैव परिणामो विकारो वा सम्भवति, न तु चितिशक्तौ। अभिनवगुप्तपादाचार्येण[4] रसचर्वणाऽपि कश्चन प्रत्ययप्रकारोऽभ्युपगतः। यत्र चित्ते रसानुभूतिर्जायते, तज्जडात्मकं नास्ति, तत्रास्ति खलु स्वपरसंवेदनक्षमत्वं नाम। अतो रसानुभूतिर्वा रसचर्वणा वा ज्ञानरूपैव भवति। अत एवासौ 'आनन्दमयसंविद्' इत्युच्यते। आनन्दरूपतयैव तज्ज्ञानग्रहणं सम्पद्यते, न तु स्वपरभेदरूपतया। ततो योगस्य रसानुभूतेराश्रयभूतचित्तवृत्तीनां तुलनात्मकमनु-सन्धानं च पर्याप्तमुपयुज्यते। अपि चोद्देश्यभूतफलप्राप्तिदृष्ट्यापि योगः काव्यं च कामपि तुल्यां कोटिमाटीकते। यतश्चोभयत्र दुःखस्यापनोदनमेव प्रधानप्रयोजनं भवति। भेदस्त्वयमेव यद्धि योगेऽनागतस्य दुःखस्य प्रशमनम्, काव्ये तु वर्तमानस्य तस्य अपनो-दनम् इति[5]। योगस्य प्रवृत्तेर्लक्ष्यम् "हेयं दुःखमनागतम्" इति। यतोऽतीतस्याति-वादितत्त्वाद् वर्तमानस्य च भोगारूढत्वादुभयमुपेक्ष्यम्। आगामिनो दुःखस्यैव प्रशमनाय योगिनां प्रवृत्तिः सञ्जायते, तदेवोद्देश्यं तेषाम्। तद्विपरीतं तु काव्यस्य प्रयोजनं सद्यः-

---

१. येषां काव्यानुशीलनवशाद् विशदीभूते मनोमुकुरे वर्णनीयतन्मयीभावयोग्यता ते स्वहृदय-संवादभाजः सहृदयाः। ( ध्वन्यालोकेऽभिनवगुप्तस्य प्रथमकारिकाप्रयुक्तसहृदयपदव्याख्या )।

२. योगश्चित्तवृत्तिनिरोधः ( योगदर्शनम्–१।२ )।

३. चित्तशब्देनान्तःकरणं बुद्धिमुपलक्षयति। न हि कूटस्थनित्या चितिशक्तिरपरिणामिनी ज्ञानधर्मा भवितुमर्हति, बुद्धिस्तु भवेदिति। ( वाचस्पतिमिश्रकृततत्त्ववैशारदी टीका, यो० सू०, १-१ )।

४. रसना च बोधरूपैव; किन्तु बोधान्तरेभ्यो लौकिकेभ्यो विलक्षणैव, उपायानां विभावादीनां लौकिकवैलक्षण्यात्। तेन विभावादिसंयोगाद् रसना यतो निष्पद्यते, ततस्तथाविधरसना-गोचरो लोकोत्तरोऽर्थो रस इति तात्पर्यंसूत्रस्य—(अभिनवभा० दी० ना० शा० पृ० २८५)।

५ दुःखमतीतमुपसंभोगेनातिपिहितं न हेयपक्षे वर्तते। वर्तमानं च स्वक्षणे भोगारूढमिति। (यो० सू० भा० २।१६)।

परनिर्वृत्तिरेव[1]। अनेन वर्तमानस्य दुःखस्यापनोदनं जायते। एवं हि योगस्य दुःखापनोदनं स्थायि, काव्यस्य च तदस्थायीति; परं दुःखापनोदनं द्वयोः समानमेव[2]।

नानाविधभवव्याधिनिपीडितानां कृते काव्यं हि
क्षणं विश्रान्तिसुखप्रदं प्रमोदास्पदं चास्तीति॥

चित्तवृत्तीनां योगदर्शने पञ्चभूमयो निरूपिताः—क्षिप्तम्, मूढम्, विक्षिप्तम्, एकाग्रम्, निरुद्धञ्च। तत्र क्रमेण तिस्रोऽवस्था दैनन्दिने जीवने यथावसरमनुभूयन्ते। जाग्रदवस्थायां चित्तं क्षिप्तं तिष्ठति। सुषुप्तौ गाढनिद्रावस्थायां च मूढं जायते। तुर्यावस्थायां च सन्निरुद्धं निवसति। सैषाऽवस्थाऽसम्प्रज्ञातसमाधौ समुद्भवति। एकाग्रावस्था च सम्प्रज्ञातसमाधिदशाया वृत्तिरुच्यते। सेयं दशा जाग्रदवस्थाया एव विशिष्टा स्थितिरस्ति। कस्मिंश्चिद् वृत्तिविशेषे तन्मयीभवनं साधकस्य कमपि बिन्दुमुद्दिश्य चित्तस्यैकाग्रीकरणं वा तत्सम्प्रज्ञातावस्थोच्यते[3]। सम्प्रज्ञातासम्प्रज्ञातावस्थयोः समाध्योरयमेव भेदः। तात्पर्यतश्चित्तस्याशेषवृत्तिनिरोधेऽसम्प्रज्ञातः, तथा सत्त्ववृत्तिमात्रसत्तात्मको हि सम्प्रज्ञातः समाधिः समुपजायते। सम्प्रज्ञातोऽयं[4] समाधिर्वितर्कं, विचारमानन्दमस्मिताञ्चानुगत्य तिष्ठति। अयमाशयः—स्थूले वस्तुनि चित्तैकाग्रतायां वितर्कानुगतः, विषयविशेषे तदेकाग्रतायां विचारानुगत आह्लादे तदेकाग्रतायामानन्दानुगतः, तथा बुद्धावात्मना सहैकात्मतासंविदवस्थायां चास्मितानुगतः सम्प्रज्ञातसमाधिः प्रोच्यते। सम्प्रज्ञातसमाधेरेवेदं प्रकारचतुष्टयम्[5]। काव्यजन्यरसानुभूतिरपि चित्तस्यास्यामेवैकाग्रतावस्थायां समुद्भूता सम्प्रज्ञातसमाधेर्दशाविशेषरूपा पर्यवतिष्ठते। यतो ह्यत्र चित्तस्यैकाग्रताया विषयो ह्लादविशेषो भवति, ततोऽयमानन्दानुगतसम्प्रज्ञातकोटिमवगाहते। आनन्दानुगतसम्प्रज्ञातसमाधिना काव्यजन्यरसस्याह्लादात्मकानुभूतौ जायमानां चित्तस्यैकाग्रतां विषयीकृत्य प्रतितिष्ठति। अस्मितानुगतश्चासौ ततोऽपि सूक्ष्मतरं ज्ञानं

---

१. सकलप्रयोजनमौलिभूतं समनन्तरमेव। ( का० प्र० प्र० )।

२. दुःखार्तानां श्रमार्तानां शोकार्त्तानां तपस्विनाम्।
विश्रान्तिजननं काले नाट्यमेतद् भविष्यति॥ (ना० शा० १।११४)।

३. सम्यक्प्रकर्षेण ज्ञायते यस्मिन्नसौ सम्प्रज्ञातः, तद्भिन्नः असम्प्रज्ञातः।

४. रजस्तमोमयी किल प्रमाणवृत्तिः सात्त्विकीं वृत्तिमुपादाय सम्प्रज्ञाते निरुद्धा, असम्प्रज्ञाते तु सर्वासामेव निरोध इति। (वा० मि० यो० सू० १–१, व्यासभाष्यटी )।

५. वितर्कविचारानन्दास्मितारूपानुगतात्सम्प्रज्ञातः। (यो० सू० १।१७)।

वैराग्यं चाधिकृत्य "अहं ब्रह्मास्मि" इति सत्यानुभूतौ स्वात्मना सह ज्ञानैकात्मताबोधे चारिचार्थ्यं व्रजति। वितर्कविचारानन्दास्मिताबोधोदयादेवायं समाधिः सम्प्रज्ञातनाम्ना व्यपदिश्यते।

आनन्दानुगतसम्प्रज्ञातसमाधिरेव चित्तस्य रसावस्थेति भणितिर्नात्युक्तिं भजति। योगभाष्ये सम्प्रज्ञातसमाध्यवस्थाया यो हि वर्णनप्रकारो दृश्यते, तस्य काव्यरसचर्वणावस्थानिरूपणे पर्याप्तं साम्यं परिलक्ष्यते। तत्रोक्तम्—सम्प्रज्ञातो हि नामैकाग्रचित्तसद्भूतमर्थं प्रकाशयन् क्लेशान् विनाशयन् कर्मबन्धनं शिथिलयंश्चेतो निरुद्धदशाभिमुखीकरोति[1]।

अत्र वाचस्पतिमिश्रमतानुसारं 'भूत'पदेन कस्मिन्नपि वस्तुनि समारोपितस्यार्थस्य निवृत्तिरित्युच्यते[2]। अन्यथात्वे तु निद्रावृत्तिरपि स्वाधारभूतचित्तस्यैकान्ततमोभाव एकाग्रतामुपगच्छति। अतोऽत्र सत्पदं शोभनार्थकतयोपपद्यते। अत्र सत्त्वगुणस्यैव नितान्तमाविर्भावो जायते। तमसः समुद्रेकस्तु नूनमशोभनतया क्लेशहेतुरुच्यते। तादृशस्य सत्त्वभावस्य प्रद्योतनं तत्त्वज्ञानेनानुभानेन वा जायते। उभयतश्च तज्ज्ञानमविद्याया उच्छेदं परोक्षतया करोति, न तु साक्षाद्रूपतया। अनेन ज्ञायते यच्चैतत् सत्त्वरूपत्वमस्य सम्प्रज्ञातावस्थात्मको विद्यते। नाट्यशास्त्रस्य विश्रुतटीकाकृता भट्टनायकेन चर्वणानिष्पत्त्या भोजकत्वव्यापारप्रक्रियानिरूपणप्रसङ्गे सरणिरेषैव समाश्रिता। अत्रेदमाकूतम्—विभावादिसाधारणीकरणानन्तरं सहृदयसामाजिकानामन्तःकरणे रजस्तमसी अभिभूय सत्वगुणस्योद्रेको भवति, तत्र बुद्धिः प्रकाशते। तदनुभवो ह्यानन्दात्मको जायते। सैव बुद्धिरानन्दमयसंविदित्युच्यते। तत्रैव चित्तस्यैकमात्रविश्रान्तैः रत्यादिभावेषु कस्यचिदेकतरस्य बोधाद् अन्यतरस्वादस्य चर्वणात्मकदशाविशेषस्य परिशीलने भागत्रयं कर्तुं शक्यते—सत्त्वोद्रेकः प्रकाशानन्दमयसंविद्, विश्रान्तिसतत्त्वमिति[3]।

पूर्वोक्ते सम्प्रज्ञातसमाधौ चितस्यैकाग्रताऽपि विभागत्रयेण विभक्ता। यथा—सद्भूतार्थप्रद्योतनम्। बन्धक्लेशक्षयो विरोधोन्मुखीभावश्च। उभयत्र सर्वथा साम्यमाकल-

---

१. यस्त्वेकाग्रे चित्ते सद्भूतमर्थं प्रद्योतयति। क्षिणोति च क्लेशान्, कर्मबन्धनानि श्लथयति, निरोधमभिमुखं करोति, स सम्प्रज्ञातो योग इत्याख्यायते। (यो० सू० १-१ भाष्यम्)।

२. भूतमिति समारोपितमर्थं निवर्तयति। निद्रावृत्तिरपि स्वावलम्बे तमसि भूते एकाग्रा इत्यत उक्तम्। सदिति शोभनं नितान्ताविर्भूतसत्त्वं, तमस्समुद्रेकस्तु अशोभनस्तस्य क्लेशहेतुत्वादिति। (वाचस्पतिः, ७३।१–४)।

३. तत्त्वोद्रेकप्रकाशानन्दमयसंविद्विश्रान्तिसतत्त्वेन भोगेन भुज्यते (भट्टनायकः, का०प्र० च०उ०)।

नीयम्। भट्टनायकमताभिमतरसानुभूतिप्रक्रियायां सत्त्वोद्रेक एव सद्भूतार्थप्रद्योतनम्। प्रकाशानन्दसंविदेव क्लेशक्षयः। विश्रान्तिसतत्त्वमिति निरोधोन्मुखीभावः।

अपि च सम्प्रज्ञातसमाधौ यद्धि कर्मबन्धश्लथत्वमुक्तम्, तदत्र रसानुभूतौ अभिनवगुप्तपादाचार्योपपादितं विभावादीनां साधारणीकरणमेव प्रतीयते[1]। कर्मबन्धन-श्लथत्वं यद्यपि योगशास्त्रे पूर्वार्जितकर्मसंस्कारशैथिल्यमभिप्रेतम्। परमत्र साधारणी-करणदशायां स्वावस्थापरस्य वा हिताहितप्रेक्षणेन कृतकर्मद्वारा परस्पररागद्वेषवशात् शत्रुमित्रभावरूपबन्धनश्लथत्वमवगन्तव्यम्। तादृशस्य बन्धनस्यैवात्र रसानुभूति-वेलायां परिहारान् मनसि निर्विघ्नं गलितवैधान्तरत्वमुदेति। यद्यपि नैते भावा सर्वथा समाप्तिमुपयान्ति; तथापि तत्समकालं शैथिल्यमनुव्रजन्त्येव। एवमिदं सम्यक् पर्यवगन्तुं शक्यते यत्काव्यजन्यरसानुभूतिप्रक्रियाधारो हि चित्तस्यानन्दानुगतसम्प्रज्ञात-समाधिरवसीयते। सेयमवस्था तदेकाग्रतायां सम्पद्यते। तत्रैव भेदानुकूलं तदीयं तारत-म्यमवसातुं शक्यम्। यत्र च वितर्कानुगतं किमपि स्थूलं वस्तुरूपमाधारीकृत्य चित्तस्यै-काग्रता जायते, आहोस्विद् विचारानुगतं कमपि विषयमाधृत्य सोपपद्यते, तत्रानन्दा-नुगतं वस्तु वा विषयं वोपेक्ष्य ततोऽपि सूक्ष्मतरां रागात्मिकामनुभूतिमाश्रित्य तदुप-पादनं तदुभयसाधारण्येन सम्पादयितुं शक्यते। आचार्याभिनवगुप्तेनापीयमेव संलक्ष्य सा किल रसास्वाददशा चिद्विशिष्टरत्याद्यनुभूतिरभिहिता। पण्डितराजजगन्नाथो न च सैव रत्याद्यवच्छिन्ना चिदुक्ता। रत्यादयो न वस्तुरूपाः; नापि बाह्यविषयाणां संस्कार-संवलिता भावरूपास्ते सन्ति, यत्राह्लादजनिका चित्तैकाग्रता प्रतितिष्ठति। प्रक्रियाया-मस्यामभिनवगुप्तमतेन स्वात्मपरामर्शः, पण्डितराजगन्नाथमतेन च चिदावरणभङ्गश्च सञ्जायते। अत एवेयं रसदशाऽऽनन्दानुगतसम्प्रज्ञातसमाधिनाम्ना व्यपदेष्टुं शक्या। अनेनैव हेतुना नाट्यशास्त्रोक्तादास्वाद्यत्वादित्युक्त्या रस आस्वादविषयत्वेन विषयनिष्ठ एवोपयुज्यते—इति मन्वाना तत्त्वानभिज्ञतां प्रदर्शयन्ति, तस्य विषयनिष्ठत्वे सति विचारात्मकतया पर्यवसन्ने तस्मिन्नानन्दात्मकत्वं परिहीयते। एतद्विपरीतं तु तस्यानुभूतेरानन्दात्मकत्वेन सहृदयजनमनः जायमानत्वात् चेतनाधर्मरूपत्वाच्च विषयि-निष्ठत्वमेव संगच्छते। अत आस्वदनात्मकानुभूतिरास्वादविषयाभावादानन्दानुगत-सम्प्रज्ञातसमाधिकोटिमाटीकमाना सती सम्प्रतिष्ठते।

---

१. "ममैवैते शत्रोरेवैते तटस्थस्यैवैते न ममैवैते न शत्रोरेवैते न तटस्थस्यैवैते इति सम्बन्ध-विशेषस्वीकारपरिहारनियमानध्यवसायात् साधारण्येन प्रतीतैरभिव्यक्तः" (का० प्र० च० पृ० ९२)।

अथ चित्तस्यैकाग्रतावस्थां निरुद्धावस्थां वा सम्प्राप्तुं योगशास्त्रे तत्प्रसादन-विधानमुपदिष्टम्। प्रसादितं चित्तमेव सत्त्वशीलं सदेकाग्रं पश्चान्निरुद्धं भवितुमर्हति। तच्च प्रसादनं रजस्तमोऽभिभवपूर्वकं सम्पद्यते[1]। यतस्तदनन्तरमेव सत्त्वोद्रेकः संजायते। एतदर्थं योगशास्त्रे जागतिका विषया चतुर्धा विभज्य भावनाविशेषणपरि-शीलिताः सन्ति[2]। जगदिदं हि सुखदुःखपुण्यपापसमवायात्मकं विद्यते। अत्र कश्चिद् विषयः सुखात्मकः, कश्चिद् दुःखात्मकः, कश्चित् पुण्यप्रदः, कश्चित् पापमयश्चास्ति। इमानेव चतुर्धा विभक्तान् विषयान् परिशील्य चतुर्धारूपया भावनया विहितया सत्या चित्तं प्रसादितं सत्यशीलनिष्ठं च भवति। तत्र दुःखिनं प्रति करुणाभावना, पापिनं प्रति चोपेक्षाभावना विहिता। एतादृशभावनाविधानेन शुक्लधर्मोत्पत्त्या चित्तप्रसादन-मेकाग्रत्वं च सहजं सम्प्राप्यते। इयमेव चित्तस्य स्थितिशीलता प्रोक्ता। अनया रसानु-भूतिसिद्धान्तः समीकृतो वर्तते[3]।

भरतोक्तरसानुभूतिप्रक्रियापरिकलनं हि योगदर्शनप्रकरणमिदं नूनमनुसरति। पूर्वोक्तानुसारेण बाह्यविषयैरिन्द्रियसन्निकर्षे जाते नानाप्रतिक्रियापरीतं चित्तमभि-द्रवति। तादृशं चित्तं सदेवैकविधं नोपज्ञायते, तत्रापि विभिन्नविषयानुगतं वैविध्यं भवति। तद्वर्गीकरणं बाह्यालम्बनमुद्दिश्य सम्भवति। चतुर्धा विभक्तेषु बाह्यविषयेषु सुखदुःखपुण्यपापास्पदत्वभेदमूलकत्वेन प्रोक्तम्। मैत्री, करुणा, मुदिता, उपेक्षा चेति भावनाश्चित्तप्रतिकृतिप्रकारभूताः प्रतिपादिताः। अनेन विवेचनात्मकविचारेण बाह्य-विषयाविष्टचित्तविकाराणां प्रकारचतुष्टयं परिकल्पनीयं भवति—विकासः, विस्तरः, क्षोभः, विक्षेपश्च। एते मनोविकारा एवोच्यन्ते। एषामेकैकशो विवेचनं रसानुभूति-प्रक्रियोद्देश्यकं प्रस्तूयते—

---

१. 'प्रख्यारूपं हि चित्तसत्त्वं रजस्तमोभ्यां संसृष्टम् ऐश्वर्यं विषयप्रियं भवति। तदेव तमसाऽनुविद्धम् अधर्माज्ञानविराग्यानैश्वर्योपगं भवति। तदेव प्रक्षीणमोहावरणं सर्वतः प्रद्योतमान-मनुविद्धरजोमात्रया धर्मज्ञानवैराग्यैश्वर्योपगं भवति, तदेव रजोलेशमलापेतं स्वरूपप्रतिष्ठं सत्त्वपुरुषान्यथाख्यातिपात्रं धर्ममयध्यानोपगं भवति, तत् परं प्रसंख्यानमित्याचक्षते ध्यायिनः' (यो० सू० १-२ भाष्यम्)।

२. 'मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम्' (पा० यो० सू० १-३३)।

३. यत्किञ्चिल्लोके शुचिमेध्यमुज्ज्वलं दर्शनीयं वा तच्छृङ्गारेणोपनीयते। (ना० शा० व० अ० ३०१-२)।

विकासः—अयं चित्तविकृतेरवस्थाविशेषः। चित्तप्रसादनेऽयं पुण्यात्मकविषयमधिकृत्येन्द्रियसन्निकर्षात्स्वयमेवोपजायते। विकासमापद्यमाने चेतसि सत्त्वगुणः समुदेति। अस्यानुभूतौ शृङ्गाररसो हास्यरसो वाऽनुभवविषयतां प्रतिपद्यते। नाट्यशास्त्रेऽपि शुचिमेध्यमुज्ज्वलं सर्वं शृङ्गारेणोपमीक्रियते। अनेन सुस्पष्टं प्रतीयते यद्धि शृङ्गारस्यानुभूतिरूपप्रसादनभावनास्पदत्वं विषयाणां शुचिमेध्योज्ज्वलपुण्यशालित्वं च तदर्थं कियदुपयुज्यते। कामुकत्वप्रदर्शनमात्रं न शृङ्गारोपजीवकं भवति; प्रत्युत सर्वविधशुचितोपजीवकत्वमेव तस्य शास्त्रसम्मतम्।

विस्तारः–चित्तविस्तरो नाम तत्प्रतिक्रियानुरूपमुच्यते। बाह्यविषयैरिन्द्रियसन्निकर्षे सति चित्तस्य सुखात्मको विस्तरो जायते। एष विस्तरोऽपि तद्विकारस्वरूपनिरूपणात्मको भवति। अत्रापि सत्त्वगुणसमुदयो विस्तरेण सर्वाण्यङ्गानि व्याप्नोति, तत्परिणामतश्च प्रत्यङ्गं क्रियाशीलत्वमभिजायते। तदनुभवश्च मैत्रीभावनोदयादुद्भवति। वीररसेऽद्भुतरसे चैतदनुभूतिः सुतरां सञ्जायते। वीररसस्थायिनो ह्युत्साहस्य सर्वत्र वपुषि सञ्चारेणाभिव्यापनं तद्विस्तृतिद्योतकं मन्यते। वस्तुतस्तु मनसि मैत्रीभावनोद्भावनमेव चित्तविस्तरणलक्षणं भवति। नाट्यशास्त्रे वीररस उत्तमप्रकृतिकोऽसंमोहाध्यवसायनयविनयपराक्रमादिक्रियोद्भवः प्रतिपादितः[1]। एतदपेक्षया किञ्चिदप्राधान्येनाद्भुतो रसोऽपि चित्तविस्तरणक्रियोद्भूतः सन् विस्मयस्थाय्यात्मकश्चित्तमभिव्याप्नोति।

क्षोभः—दुःखेन चित्तक्षोभो जन्यते। दुःखास्पदवस्तुविषयसन्निकर्षवशाच्चेतसि तत्प्रतिक्रियात्मकः क्षोभ उत्पद्यते। तत्परिणामतश्च कारुण्यमुद्भवति। सत्यामस्यामवस्थायां क्षोभप्राबल्ये सत्त्वरजस्तमोगुणानां मिथः सङ्घर्षः प्रोद्भवति। तद्धेतुकं क्रियान्तरं रोदनविलापप्रलापमूर्च्छादिकं समुत्पद्यते। तच्च चित्तस्य क्षोभानन्तरं शान्तस्वरूपमुपेयुषः स्वाभाविकी क्रियोच्यते। येन चित्तं स्वास्थ्यमुपैति। प्राधान्येन रौद्ररसेऽप्राधान्येन च करुणे रसे क्षुब्धे चिते कारुण्यमनुभूयते[2]।

विक्षेपः–उपेक्षाभावनां चित्तस्य विक्षिप्तावस्था जनयति। जुगुप्सारूपेण भयरूपेण चास्य प्रतिक्रिया भवति। तत्परिणामश्च बीभत्सो भयानकश्च रसोऽनुभूयते। उपेक्षाभावनोद्भूतश्चित्तविक्षेपश्च पापमयबाह्यविषयसन्निकर्षेण तत्प्रतिक्रियास्वरूप आख्यायते। रसगतं तारतम्यं च विषयानुसारमवगन्तुं शक्यम्।

१. अथ वीरो नाम उत्तमप्रकृतिरुत्साहात्मकः स चासंमोहाध्यवसायनयविनयबलपराक्रमशक्तिप्रतापप्रभावादिभिर्विभावैरुत्पद्यते (ना० शा० भा०–१ पृ० ३२४)।

२. शोके क्षोभे च हृदयं प्रलापैरेव धार्यते॥ (उत्तररामच० ३।२९)।

अनया पर्यालोचनया साधयितुमिदं शक्यते यद् विकासविस्तरक्षोभविक्षेपा एव चित्तस्य मूलभूता विकाराः प्रोक्ताः। तदनुभवश्च मुदितामैत्रीकरुणोपेक्षात्मकभावना-व्यापारेण सञ्जायते। अत एव नाट्यशास्त्रे शृङ्गारवीरबीभत्सरौद्ररसाश्चत्वार एव प्राधान्येन परिकलिताः[१] सन्ति। हास्यकरुणाद्भुतभयानकाश्च तेभ्य एवोद्भूता परिगण्यन्ते। इत्थं योगशास्त्रप्रक्रियानुसारेण साहित्यशास्त्रे रसबोधविमर्शः सम्पद्यत इति शम्।



---

१. तेषामुत्पत्तिहेतवश्चत्वारो रसाः। तद्यथा—शृङ्गारो रौद्रो वीरो बीभत्स इति। अत्र—

शृङ्गाराद्धि भवेद्धास्यो रौद्राच्च करुणो रसः।
वीराच्चैवाद्भुतोत्पत्तिर्बीभत्साच्च भयानकः॥ (ना० शा० ६।२९)।

# कठोपनिषद्गतस्य 'जाग्रत'-इति पाठस्याशुद्धिः

डॉ० रामशङ्करो भट्टाचार्यः,

वाराणसीस्थः

❋❋❋

कठानां मन्त्रोपनिषदि पठ्यते—**"उत्तिष्ठत जाग्रत प्राप्य वरान् निबोधत"** (१।३।१४) इति। अस्मद्दृष्टेषु सर्वेषु संस्करणेष्वयमेव पाठो दृश्यते, पाठ्यते चायं पाठोऽध्यापकैः सर्वत्र।

अस्मन्मते **जाग्रतेति पाठो भ्रष्टः, 'जागृत'-इति पाठेनैवात्र भवितव्यम्।**

जागृधातोरादादिकस्य लोटि मध्यमपुरुषबहुवचनस्य रूपमिदमिति निश्चप्रचम् (उपमेयम् उत्तिष्ठतेति पदम्)। तच्च रूपं व्याकरणप्रक्रियानुसारेण 'जागृत'-इत्येव भवति, न पुनः 'जाग्रत' इति।

उपनिषदि जाग्रतेतिच्छान्दसं रूपमेव प्रयुक्तमित्येवंरूपेण समाधानं नात्र कर्तुं युज्यत इत्यास्माकीना दृष्टिः। यदि जाग्रतेति पाठ एव श्रौतोऽभविष्यत्, तर्हि पदस्यास्यालौकिकत्वम् (लौकिकशब्दभिन्नत्वम्) अधिकृत्यावश्यमेव किमपि भाष्यकारः शङ्कराचार्योऽकथयिष्यत्। यतो भाष्यकारस्य नेदृशं किमपि कथनं दृश्यते, अतो गम्यते—**शङ्कराचार्येण जागृतेत्येव पाठो दृष्टः, न जाग्रतेति पाठः।**

उपनिषत्पाठिभिरिदं विज्ञेयं यद् यत्रैवोपनिषत्सु भाष्यकारो लौकिकशब्दविलक्षणं कमपि शब्दं पश्यति, तत्रैव स तच्छब्दस्वरूपपरिज्ञानार्थं कमपि निर्देशमवश्यं विदधाति। सोऽयं निर्देशः क्वचिल्लिङ्गवचनपुरुषव्यत्ययादिप्रदर्शनेन क्रियते[1], क्वचिच्च

---

1. दृश्यताम्—शुक्रमित्यादीनि वचांसि पुंलिङ्गत्वेन परिणेयानि (ईशोप० ८ भा०); परः परमिति लिङ्गव्यत्ययेन····(छान्दोग्यो० ३।१३।७ भा०); मा प्रधाक्षीः पुरुषव्यत्ययेन वा····(छा० ४।१।२ भा०); रातिः, रातेः षष्ठ्यर्थे प्रथमा (बृहदा० ३।९।२८ भा०); अशनायेति विसर्गलोपेन····(छा० ६।८।३ भा०); विमोक्ष्ये विमोक्ष्यते पुरुषव्यत्ययेन (छा० ६।१४।२ भा०); आयै इत्येतद् वर्णव्यत्ययेन (छा० ७।९।१ भा०); नाडीष्विति सप्तमी तृतीयया परिणम्यते (छा० ८।६।३ भा०)।

'छान्दसोऽयं शब्दः' इत्येवंरूपेण कथनेन[1]। क्वचिच्चालौकिकशब्देन सह लौकिकशब्दस्यापि प्रयोगं कृत्वा[2] उपनिषत्प्रयुक्तशब्दस्य लोकभिन्नत्वं विज्ञाप्यते।

---

१. इषितमिति इट्प्रयोगस्तु च्छान्दसः ( केन० १।१ भा० ); मनसी दैर्घ्यं छान्दसम् ( कठ० १।३।१३ भा० ); छान्दसः सौर्यायणीति ( प्रश्न० १।१ भा० ); शिक्षैव शीक्षा दैर्घ्यं छान्दसम् ( तै० उप० १।२।१ भा० ) अचीरमचिरं छान्दसो दीर्घः ( तै० उप० १।४।२ भा० ); नान्दनमिति दैर्घ्यं छान्दसम् ( ऐत० उप० १।३ भा० ); प्राज्वाली दैर्घ्यं छान्दसम् ( छान्दोग्य० ६।७।६ भा० ); आण्डमिति दैर्घ्यं छान्दसम् ( छान्दोग्य० ३।१९।१ भा० ); दैर्घ्यं छान्दसं समीयातेति प्रमादपाठो वा ( छान्दोग्यो० १।१२।३ भा० ); उदन्येति च्छान्दसम् ( छान्दोग्यो० ६।८।५ ); आभजस्व आभजयस्व, णिचोऽश्रवणं छान्दसम् ( बृहदा० १।३।१८ भा० )।

२. दृश्यताम्—प्रथमः प्रथमाः ( केनो० ४।२ भा० ); विदाञ्चकार विदाञ्चक्रुः ( केनो० ४।२ भा० ), अन्तरात्मन् अन्तरात्मानम् ( कठो० २।१।१ भा० ) मनुष्येभिः = मनुष्यैः ( २।१।८ भा० ), पथः = पन्थानम् ( कठो० १।३।१४ भा० ); विचेष्टति = विचेष्टते ( कठो० २।३।१० भा० ); अधूमकः = अधूमकम् ( कठो० २।१।१३ भा० ); तत = तात ( कठो० १।१।४ भा० ); इत्था = इत्थम् ( कठो० १।२।२५ भा० ); प्रतिष्ठति = प्रतितिष्ठति ( प्रश्नो० ३।१ भा० ); उत्क्रमते = उत्क्रामति ( प्रश्नो० ३।१ भा० ); मनोकृतेन = मनःकृतेन ( प्रश्नो० ३।३ भा० ); परिव्यथाः = परिव्यथयतु ( प्रश्नो० ६।६ भा० ); श्रीः श्रियः ( २।१३ भा० ); मातरिश्व = मातरिश्वन् ( २।११ भा० ); तिष्ठते = तिष्ठति ( मुण्डको० २।१।९ भा० ); गृह्णते = गृह्णाति (मुण्डको० १।१।७ भा०); अदेश्यम् = अदृश्यम् ( मुण्डको० १।१।६ भा० ); योषितायाम् = योषिति ( मुण्डको० २।१।५ भा० ); जयते = जयति ( मुण्डको० ३।१।६ भा० ); प्रविलीयन्ते = प्रविलीयन्ति ( मुण्डको० ३।२।२ भा० ); जुह्वते = जुह्वति ( मुण्डको० ३।२।१० भा० ); पश्यते = पश्यति ( मुण्डको० ३।१।८ भा० ); व्योमन् = व्योम्नि ( तैतिरीयोप० २।१।१ भा० ); आनन्दयाति = आनन्दयति ( तैतिरीयो० २।७।१ भा० ); मानुषीः = मानुष्यः ( तैतिरीयो० ३।१०।२ भा० ); प्रपद्यै = प्रपद्येय ( ऐतरेयो० १।३।११ भा० ); सृजै = सृजे ( ऐतरेयो० १।३।१ भा० ); आयसीः = आयस्यः ( ऐतरेयो० २।१।५ भा० ); सर्वा = सर्वाणि ( छान्दोग्यो० ३।१२।६ भा० ); प्रापति = प्राप्नोति ( छान्दोग्यो० ४।९।३भा० ) वाचालम्बनम् = वागालम्बनं ( छान्दोग्यो० ६।१।४ भा० ); वीणायै वाद्यमानायै = वीणाया वाद्यमानायाः (बृहदा० २।४।९ भा०); पृथिव्यै = पृथिव्याः (बृहदारण्यको० २।५।१ भा०);

यदि प्रस्तुते कठवाक्ये 'जाग्रत' इति शब्दमद्रक्ष्यद् भाष्यकारः, तर्हि स जाग्रत-पदव्याख्याने 'जाग्रत जागृत' इति पदस्य प्रयोगमकरिष्यत्; अथवा 'जाग्रतेति च्छान्दसः शब्दः, जाग्रतेति रभावश्छान्दसः' इत्येवंविधं किमपि वाक्यमकथयिष्यत्। यत एतादृशं किमपि कथनं नोपलभ्यते, अतो गम्यते भाष्यकृता जाग्रतेति शब्दो न दृष्टः कठोप-निषन्मन्त्रे।

इदमपि विज्ञेयं यज्जागृधातोर्बहूनि रूपाणि संहितासु ब्राह्मणेषूपनिषत्सु चोप-लभ्यन्ते। एषु न क्वापि जाग्रतेति रूपं दृष्टम्।

कथमयमशुद्धः पाठः समजनीति जायते विचारणा। उच्चारणप्रयत्नसादृश्य मेवात्र हेतुरिति प्रतीयते। प्रथमोपात्तस्य 'उत्तिष्ठत' इति शब्दस्यान्तिमभागस्योच्चारणे 'अत' इति ध्वनिः श्रूयते शब्दान्ते। अस्योच्चारणस्य प्रभावः सन्निहिते शब्दे ( जागृतेति शब्दे ) अपि पतितः, येन 'ऋत'ध्वनिः ( जागृतशब्दस्य ) 'अत'ध्वनिरूपेण विपरिणतः। ततश्च 'जाग्रत' इत्येवंरूपेण सन्निहितशब्दस्योच्चारणं जातम्; अध्येतॄणां चानवधान-वशादुच्चारणमिदं प्रसिद्धिं गतम्।



---

अनारम्भणम् = अनालम्बनम् ( बृहदा० ३।१।६। भा० ); शकराणि = शकलानि ( बृहदा० ३।९।२७।२ भा० ); अक्षन् = अक्षणि ( ४।२।२ भा० ); शारीरम् = शरीरम् ( बृहदा० ४।३।११ भा० ); अतिच्छन्दा = अतिच्छन्दम् ( बृहदा० ४।३।२१ भा० )।

# शरीरलक्षणविचारः

डा० एन्० आर्० श्रीकृष्णताताचार्यः

प्राध्यापकः, मीमांसाविभागे

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

वाराणसी

❀❀❀

तत्र भवद्भिर्गौतममहर्षिभिः "प्रमाणप्रमेय[1]" इत्यादिसूत्रेण 'षोडशपदार्थतत्त्वज्ञानान्निःश्रेयसाधिगमः' इत्यभाणि। तेषु प्रमेयपदार्थान्तर्गतस्य शरीरस्य बन्धहेतुत्वेन हेयत्वाद् मुमुक्षूणाञ्च तत्स्वरूपज्ञानस्यावश्यकत्वाच्छरीरस्य किं लक्षणम्? किं वा तस्य स्वरूपमिति विषयमधिकृत्यास्मिन् निबन्धे प्रस्तूयते।

तत्र शरीरलक्षणविषये प्रकृतिद्रव्यविषये च नैयायिकानामन्येषाञ्च शास्त्रकाराणां भूयान् मतिभेदो वर्तते।

**आदौ प्राचीनतार्किकमतरीत्या शरीरस्वरूपवर्णनम्**—"पार्थिवं गुणान्तरोपलब्धेः[2]", "श्रुतिप्रामाण्याच्च" इति द्वाभ्यां सूत्राभ्यां मानुषशरीरस्य पार्थिवत्त्वमभ्यधायि न्यायसूत्रकारैः। न्यायमञ्जर्यां जयन्तभट्टाचार्या अपि—

> निःश्रेयसोपयोगो हि यः शरीरस्य दर्शितः।
> नानेकप्रकृतत्वे हि न स तस्य विशिष्यते॥
> प्रतिपन्नस्वरूपस्य चिन्त्याकारोपयोगिता।
> कार्यः कार्यार्थिनाप्यादौ यत्नस्तद्रूपनिर्णये[3]॥

इति द्वाभ्यां श्लोकाभ्यां तथैव समसूचयन्।

अयमत्र भावः—शरीरे सामान्यतो गन्धादि पञ्चभूतगुणानामुपलम्भे सत्यपि नात्र पञ्चभूतप्रकृतिकत्वम्; किन्तु पृथिव्या एव प्रकृतित्वम्। इतरेषान्तु भूतानां निमित्तकारणत्वमात्रमिष्यते। यथा च कुम्भादौ सलिलव्यतिरेकेण निर्मातुमशक्यत्वेऽपि

---

१. न्यायसूत्रम्, १।१।१;     २. तत्रैव ३।१।

३. न्यायमञ्जरी, पृ० ४३, उत्तरभागः, १३४, चौखाम्बा, वाराणसी।

तत्र सलिलादीनां निमित्तकारणत्वमात्रम्, समवायिकारणत्वन्तु कपालादिरूपतदवयवस्यैवेति प्रत्यक्षप्रमाणबलादिष्यते, तथैव प्रकृतेऽपि भूतान्तराणां निमित्तत्वमात्रम्। अत एवास्मदादिशरीरे भूतान्तरसंसर्गनिबन्धनः क्लेदोष्मव्यूहावकाशम्प्रत्यय उपपद्यते। अस्मिंश्च विषये भगवती श्रुतिरपि साहाय्यमाचरति। यथा कृष्णयजुर्वेदे तैत्तिरीयब्राह्मणे—'सूर्यं चक्षुर्गमयतात्। वातं प्राणमन्ववसृजतात्। दिशश्श्रोत्रम्। अन्तरिक्षमसुम्। **पृथिवीं शरीरम्'**[1] इति श्रूयते।

अत्र चैभिर्मन्त्रैरचक्षुरादिपदार्थानां सूर्यादिषु लयकथनाद् यत्र लयस्तत एव तेषामुत्पत्तिरिति नियमाच्छरीरस्य पृथिवीमात्रप्रकृतिकत्वं स्पष्टमित्याशयः।

इत्थमत्र प्राचीननैयायिकैः शरीरस्वरूपमुपवर्णितम्।

**प्राभाकराणां सम्मतिप्रदर्शनम्—**

प्रकरणपञ्चिकायां सत्वालोकप्रकरणे शालिकनाथाचार्या अपि निरुक्तरीत्यैव "देहो नाम पार्थिवो द्रव्यविशेषः। ननु पार्थिवत्वे तस्य भूतान्तरगुणानुपलम्भ आपद्येत। नेति ब्रूमः, भूतान्तरसहितस्य भूतान्तरस्य न कार्यारम्भकतेति वदामः। न पुनर्मिथोऽपि भूतानि न संयुज्यन्त इत्याचक्ष्महे। अतस्संयुक्तभूतान्तरगुणोपलम्भो नानुपपन्नः[2]" इत्यादिग्रन्थेन शरीरस्य पार्थिवत्वमेव प्रत्यपादयन्। अतश्च नैयायिकपक्षे एव प्राभाकरमीमांसकानामपि तात्पर्यमित्यनेन ग्रन्थसन्दर्भेण प्रतीयते।

**भाट्टमीमांसकमतोपन्यासः—**

भाट्टमीमांसकैरपि नवमे तृतीये—"संसर्गिषु चार्थस्यास्थितपरिमाणत्वात्" इति सूत्रोपक्रमकाधिकरणे—(१.३.१०) "सूर्यं चक्षुर्गमयताम्" इत्यादिमन्त्रानुदाहृत्य चक्षुश्शब्दस्य तेजोवचनत्वेऽपि संसर्गिद्रव्येष्वेकत्वादिसंख्या व्यवहारस्यौपाधिकतया प्रकृते च चक्षुराद्यधिष्ठानापेक्षया चक्षुष एकत्वादिव्यवहारे तदेकस्मिन्नेव पशौ चक्षुषोऽधिष्ठानद्वित्वदर्शनाद् मन्त्रस्थं चक्षुःपदमसङ्गतमेव स्यात्, तत्रैकवचनतया तस्य प्रयोगदर्शनात्। अतोऽत्र पशूपाधिकमेवैकवचनमिति वक्तव्यम्। एवं सति विकृतियागे पशुभेदे सति तदनुरोधेन द्विवचनबहुवचनान्ततया यथासन्दर्भमेतेषां मन्त्राणामूहः कर्तव्य इति पूर्वपक्षं कृत्वा—सूर्यं चक्षुर्गमयतादित्यादिमन्त्रेषु चक्षुरादिपदार्थानां सूर्यादिप्रकृतिकत्वस्यैवाऽभिधानान्नात्र पश्वाद्युपाधिप्रयुक्त एकत्वादिव्यवहारः। मन्त्रस्थैकवचनान्तचक्षुःपदस्याधिष्ठानातिरिक्ततेजोविशेषवाचकत्वेऽप्यनेकप्रदीपप्रभावद् बहु-पशुनिष्ठचाक्षुष-

---

१. तै० ब्रा०, तृ० ६।६।

२. प्र० प०, पृ० ३२०, काशीहिन्दूविश्वविद्यालयप्रकाशिते, १९६१।

तेजसामप्येकीकारसंभवेन निर्वाहोपपत्तेर्न विकृतियागे पशुभेदेन द्विवचनबहुवचनाद्यन्ततया मन्त्राणामूहः। चक्षुःपदस्य लोके गोलकपरत्वेन, व्यवहारत्वौपचारिक इति राद्धान्तितम्।

अत्र च सूत्रस्थसंसर्गिशब्देन ये संयुक्ता एकीभवन्ति, न घटादिवत् संयुक्ताः, अपि तु पृथगवतिष्ठन्ते, त एव विवक्षिताः। यथा—आज्यतैलजलतेजःप्रभृतय इति। अनेन शरीरस्यैकैकभूतप्रकृतिकत्वमेव भाट्टमीमांसकैरप्यङ्गीकृतमिति स्पष्टम्।

**वेदान्तिनां मताभिप्रायवर्णनम्**—

वेदान्तिनस्तु जगतः समष्टिव्यष्टिभावेन द्वेधा सृष्टिमभ्युपगच्छन्ति। तेषामग्रमाशयः—"सदेव सौम्येदमग्र आसीत्, एकमेवाद्वितीयम्[1]" इति श्रुत्या प्राक्सृष्टेरेकमेवासीद् ब्रह्म। तदेव निर्विशेषं ब्रह्मेत्यद्वैतिनः। सूक्ष्मचेतनाचेतनविशिष्टं ब्रह्म एकमेवासीत्—इति विशिष्टाद्वैतिनः। कामं यथा तथा वा भवतु। ततः सामान्यतः समष्टिरूपेण ब्रह्माण्डसृष्टिः। तदनु[2]—"हन्ताहमिमास्तिस्रो देवताः अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि, तासां त्रिवृत्तं त्रिवृत्तमेकैकं करवाणि" इति श्रुत्या खल्वेकैकस्यापि पदार्थस्य त्रिवृत्करणं भवति। तदनु पञ्चीकरणमिति रीत्या पदार्थसृष्टिरङ्गीक्रियते।

एवञ्चैतत् सिद्धं यत् पञ्चीकरणानन्तरमेव तत्तत्पदार्थोत्पत्तेः श्रुतौ प्रतिपादनात् पञ्चापि भूतानि प्रकृतिभूतानि, तथा सर्वेष्वपि भूतेषु पञ्चानामपि भूतानां भागास्सन्तीति।

इदं पार्थिवम्, इदं जलीयमित्याद्येकैकभूतमात्रप्रकृतिकव्यवहारस्तु तत्तद्भूतभागविशेषाधिक्येन संगच्छते। अतश्च शरीरं पञ्चभूतप्रकृतिकमेव, न त्वेकभूतमात्रप्रकृतिकमिति तेषां भावः।

**जरन्नैयायिकमतरीत्या शरीरलक्षणविचारः**—'चेष्टेन्द्रियार्थाश्रयः शरीरम्[3]' इति सूत्रेण गौतममहर्षिभिः शरीरलक्षणमभिहितम्। तत्र 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसंबध्यते' इति न्यायेन चेष्टाश्रयत्वम्, इन्द्रियाश्रयत्वम्, अर्थाश्रयत्वञ्चेति त्रेधा प्रत्येकं शरीरस्य लक्षणमेवात्र विवक्षितम्। अत्र च चेष्टापदेन न क्रियामात्रमभिप्रेतम्, तथा सति वृक्षादीनामपि सामान्यतः "वृक्षः कम्पते" इति व्यवहारानुरोधेन क्रियाश्रयत्वात् तत्रातिव्याप्तिस्स्यात्। अतोऽत्र हिताहितप्राप्तिपरिहारयोग्यव्यापार एव चेष्टापदेन वक्तव्यः, तादृशव्यापाराश्रयत्वस्य च वृक्षादावसत्त्वान्नातिव्याप्तिः। यद्यपि रथादौ हिताहितप्राप्तिपरिहारयोग्यव्यापाराश्रयत्वमपि विद्यते, रथेन स्थलविशेषगमनादेः पुरुषस्य हितप्राप्तिसाधकत्वात्। तथापि तत्र प्रेरकपुरुषसापेक्षतयैव रथगमनादि-

१. छा० उ० सद्विद्या० ६,१; २. तत्रैव–६,२; ३. न्यायसूत्रम्–१।१।११।

व्यापारस्य पुरुषहितप्राप्तिसाधकत्वम्। प्रकृते चाऽऽत्मप्रयत्नातिरिक्तप्रेरकनिरपेक्षहिताहितोपादानपरित्यागोपाधिकचेष्टायैव लक्षणे प्रविष्टतया तादृशचेष्टाश्रयत्वस्य च तत्रासत्त्वान्नातिव्याप्तिः।

ईदृशार्थ एव चेष्टापदस्य तात्पर्यमिति वात्स्यायनमहर्षयोऽपि न्यायसूत्रभाष्ये—कथं चेष्टाश्रयः? ईप्सितं जिहासितं वाऽर्थमधिकृत्येप्सा जिहासाप्रयुक्तस्य तदुपायानुष्ठानलक्षणा समीहा चेष्टा, सा यत्र वर्तते तच्छरीरम्[1] इत्यादिग्रन्थेन समसूचयन्।

न च पाषाणान्तर्गतमण्डूकादिशरीरेषु चेष्टाश्रयत्वादर्शनादव्याप्तिरिति वाच्यम्, निबिडपाशसंयतशरीरवत् तदानीं चेष्टाया अदर्शनेऽपि चेष्टास्वरूपयोग्यतायास्तत्राऽपि सत्त्वान्नाव्याप्तिरित्याशयः।

मुमुक्षुशरीरमेवोक्तशरीरलक्षणलक्ष्यमिति केचित् समादधिरे। तथा सति मुमुक्षूणामपि नियतस्य शरीरस्याऽभावात् कर्मविपाकवशात् तेषामपि कदाचिन्मण्डूकशरीरस्य सम्भवेन तत्राव्याप्तिस्तदवस्थैव स्यात्। अतोऽत्र पूर्वोक्त एव परिहारः श्रेयान्।

ननु भवत्वेवम्, चेष्टाश्रयत्वं शरीरलक्षणम्। इन्द्रियाश्रयत्वं तु कथम्? भौतिकानि हीन्द्रियाणि घ्राण-नयन-स्पर्शन-रसनानि स्वावयवाश्रितान्येव, न तु शरीराश्रितानि।

श्रोत्रमनसी तु नित्यद्रव्यत्वादनाश्रिते एवेति कथमिन्द्रियाश्रयत्वं शरीरस्येति, चेदुच्यते, नात्राधाराधेयभाव आश्रयशब्दार्थः; किन्तु तदनुग्राह्यत्वात् तदाश्रितानीन्द्रियाणीत्युच्यन्ते।

अत एव न्यायभाष्येऽपि "यस्यानुग्रहेणानुगृहीतान्युपघाते चोपहतानि स्वविषयेषु साध्वसाधुषु वर्तन्ते। स एषामाश्रयः, तच्छशरीम्[1]" इति प्रतिपादितम्।

**न्यायवार्त्तिकग्रन्थकर्तुराशयवर्णनम्—**

न्यायवार्त्तिकेऽप्युक्तरीत्यैव शरीरस्य लक्षणमुपवर्णितम्; परन्तु तत्र चेष्टापदेन क्रियामात्रस्यैव लाभात् कथं हिताहितप्राप्तिपरिहारयोग्यक्रियाविशेषलाभ इत्याक्षेपमुद्भाव्य यथा—ब्राह्मणान् भोजयेत्युक्तेऽशेषविप्रभोजनस्याशक्यत्वात् तत्र प्रकरणानुरोधेन सन्निहितब्राह्मणभोजनमात्रे तात्पर्यमवसीयते, तथैव प्रकृतेऽपि सामान्यं विशेषे पर्यवस्यतीति न्यायेन चेष्टाशब्दस्य चेष्टाविशेषवाचकत्वमिति विशेषतः समाधानमन्वग्रहीषुः।

---

१. न्यायभाष्ये, पृ० ४०५, मि० विद्यापीठे, १९६७ तमे वर्षे प्रकाशिते।

**नवीनतार्किकमतोपन्यासः—**

नव्यन्यायस्थापकाः पूज्यगङ्गेशोपाध्याया विश्वनाथन्यायपञ्चाननभट्टाचार्याश्च 'चेष्टेन्द्रियार्थाश्रयः शरीरम्' इति सूत्रोक्तरीत्यैव त्रितयस्य शरीरलक्षणत्वमभ्युपगच्छन्ति; परन्तु न्यायसूत्रभाष्यकारप्रभृतिभिः प्राचीनैर्वृक्षादीनां मनुष्यादिवत् प्राणसंसर्गवत्वे मानाभावान्न तेषां शरीरत्वमिति तत्र तत्र भणितम् ।

गङ्गेशोपाध्यायस्तु—

नर्मदातीरसंजाताः सरलार्जुनपादगाः ।
नर्मदातोयसंस्पर्शात्ते यान्ति परमां गतिम् ॥
गुरुं तुंकृत्य हुंकृत्य विप्रं निर्जित्य वादतः ।
श्मशाने जायते वृक्षः कङ्कगृध्रोपसेवितः ॥

इत्यादि वचनेन वृक्षाद्यवच्छेदेन कृतसत्कर्मणा पुण्यलोकवासोपयोगिदिव्यशरीरप्राप्तेः करचरणाद्यवयवविशिष्टशरीरावच्छेदेन कृतगुरुधिक्कारादिनिषिद्धकर्मणा कङ्कगृध्रोपसेवितश्मशानवृत्तितरुसंबन्धप्राप्तेश्च महर्षिव्यासेन विष्णुपुराणे प्रतिपादितत्वाद् वृक्षादीनामपि प्राणवत्वमभ्युपगम्य शरीरत्वमुपपादयन्ति । तत्रापि 'वृक्षश्चेष्टते' इति व्यवहारसत्त्वाच्चेष्टाश्रयत्वरूपं शरीरलक्षणमपि संगच्छत इत्याशयः ।

**मतद्वयासाधारणयुक्तिप्रदर्शनम्—**

अत्रेदमवधेयम् । **प्राचीनतार्किकाणां** भाष्यकारादीनां पक्षे नर्मदातीर इत्यादिवचनस्यार्थवादतया केवलं प्रशंसामात्रपरत्वम् । तथा 'गुरुं हुंकृत्य' इत्यादिवाक्यानामपि निन्दामात्रपरत्वमिति नास्य वचनस्य स्वार्थे तात्पर्यमितिरीत्या प्राचीनैर्वृक्षादीनां शरीरत्वं नाङ्गीकृतम् ।

**नवीनास्तु** चेतनसृष्टिप्रकरणेऽस्य वचनस्य श्रवणात् स्वार्थेऽपि तात्पर्यं विद्यत इति वृक्षादीनामपि शरीरत्वमिति वदन्ति । तथा चोक्तं मुक्तावलीग्रन्थे[1]—

"शरीरं योनिजमयोनिजञ्चेति द्विविधम्, अयोनिजं स्वेदजोद्भिज्जादिकम् । स्वेदजाः कृमिदंशाद्याः, उद्भिज्जास्तरुगुलमाद्याः" इति ।

**विशिष्टाद्वैतिमतेन शरीरलक्षणविचारः—**

विशिष्टाद्वैतसंप्रदायप्रवर्तकाः श्रीभगवद्रामानुजाचार्या उक्तेषु नैयायिकाद्यभि-

---

१. मुक्तावली, पृ० २९७, मयिलापूर, मद्रास, बालमनोरमा प्रेस, १९२३ ।

मतेषु चेष्टाश्रयत्वादिलक्षणेष्वव्याप्त्यादिदोषमभिधाय—"अतो यस्य चेतनस्य यद् द्रव्यं सर्वात्मना स्वार्थे नियन्तुं धारयितुं च शक्यं तच्छेषतैकस्वरूपं च तत् तस्य शरीरमिति शरीरलक्षणमास्थेमम्[१]" इति ग्रन्थेन श्रीभाष्ये नूतनया शैल्या शरीरलक्षणमन्वग्रहीषुः। तेषामयम्भावः—वाजसनेयके काण्वशाखायां माध्यन्दिनशाखायाञ्चान्तर्यामिब्राह्मणे श्रुतौ –"यः पृथिव्यां तिष्ठन् यस्य पृथिवी शरीरम्[२]" इत्यारभ्य पृथिव्यादिसमस्तमचिद्वस्तु "यो विज्ञाने तिष्ठन् यस्य विज्ञानं शरीरम्", "य आत्मनि तिष्ठन् यस्यात्मा शरीरम्" इति चेतनं च पृथक् पृथक् निर्दिश्य तस्य तस्य परमात्मशरीरत्वमभिधीयते।

एवमिन्द्रयाश्रयत्वादेरपि न शरीरलक्षणत्वं संभवति। तत्राश्रयशब्दस्यानुग्राहकत्वरूपार्थाङ्गीकारेऽपि स्वेच्छाकृतेष्वीश्वरविग्रहेषु अहल्यादीनां कर्मनिमित्तशिलाकाष्ठादिशरीरेषु च ज्ञानप्रवृत्तिजननपटुतरेन्द्रियाश्रयत्वस्य वा चेष्टाविरहेण चेष्टाश्रयत्वस्य वा सुखदुःखादिरूपाऽर्थाश्रयत्वस्य वाऽसत्त्वादव्याप्तिस्तदवस्थैव स्यात्।

यद्यपि नैयायिकैरशरीर्येवेश्वरोऽङ्गीकृत इति न कश्चिद्दोषः। एवं पृथिव्याद्यचेतनानामपि शरीरपदवाच्यत्वानभ्युपगमादुपदर्शितस्थलेष्वलक्ष्यत्वेनाव्याप्त्यादिदोषपरिहारस्तन्मते युज्यते, तथापि 'यस्य पृथिवी शरीरम्' इत्याद्युपदर्शितश्रुत्या पृथिव्यादौ शरीरत्वमवश्यमेष्टव्यम्, अन्यथा श्रुतेरप्रामाण्यं स्यात्। तथा ईश्वरस्य स्वेच्छाकृतविग्रहसत्त्वे बहुश्रुतिसंवाददर्शनात्। "अशरीरं शरीरेषु[३]" इत्यादिश्रुत्याऽस्मदादिवत् कर्मनिमित्तशरीराभावस्यैवेश्वरे बोधनाच्च "भूयसां स्याद् बलीयस्त्वम्[४]" इति पूर्वमीमांसकोक्तन्यायेनेश्वरस्यापि स्वेच्छाकल्पितशरीरवत्वमपरिहार्यम्। तथा च तादृशस्थल इन्द्रियाश्रयत्वादेः शरीरलक्षणत्वेऽव्याप्तिदोषो दुरुद्धर एव स्यादिति भगवद्रामानुजाचार्याणां निगूढाभिसन्धिः।

**रामानुजाचार्यमतेन दोषपरिहारकथनम्—**

'यस्य चेतनस्य' इत्यादिशरीरलक्षणे च न नैयायिकपक्षोक्तदूषणानामवसरः। तथा हि—पृथिव्याद्यचेतनस्य चेतनस्य च सर्वस्यापि परमात्मैकशेषत्वात् परमात्मैकनियाम्यत्वाच्च श्रुतिप्रतिपादितपरमात्मशरीरत्वमुपपद्यते। तथा चेच्छाकृतस्येश्वरशरीरस्याकर्मनिमित्ततयेन्द्रियाश्रयत्वसुखदुःखाद्यर्थाश्रयत्वयोरभावेऽपीश्वरेण नियाम्यत्वम् ईश्वरशेषत्वञ्चास्त्येवेति न तत्र प्रकृतलक्षणस्याव्याप्तिः। "जघन्यगुणवृत्तस्था अधो

१. श्रीभाष्ये, द्वितीय संपुटे २१७ तमे पुटे (२.१-३) न विलक्षणत्वाधिकरणे।
२. कठोपनिषदि–१-१-२१; ३. पू० मी० १२-२-७; ४. ब्र० सू० २-१-६।

गच्छन्ति तामसाः[१]" इति गीतावचनेन शिलादिशरीरिणोऽपि जीवा विद्यन्त इति लभ्यते। अतश्चाहल्यादीनां पाषाणमयं तच्छरीरं तया नियाम्यमेवेति न तत्राव्याप्तिः। यद्यप्यत्र प्राचीननैयायिकानां पक्षे नायं दोषः प्रसज्यते, तन्मते पाषाणादीनां शरीरत्वानभ्युपगमेनालक्ष्यत्वात्, तथापि बहुस्मृतावहल्यादीनां कर्मनिमित्तपाषाणादिशरीरश्रवणान्नात्र तेषामलक्ष्यत्वेन परिहारो युज्यत इति भगवद्रामानुजाचार्याणामाशयः। इत्थञ्च, यथैव नव्यनैयायिकैः "नर्मदातीरसंजाताः" इत्यादि विष्णुपुराणवचनबलाद्वृक्षादीनामपि शरीरत्वमिष्यते, तथैव "यस्य पृथिवी शरीरम्" इत्यादिश्रुतिप्रमाणबलात् समस्तचेतनाचेतनयोरपि ब्रह्मशरीरत्वमभ्युपगन्तव्यमिति रामानुजाचार्याः। तत्र च "यस्य चेतनस्य यद् द्रव्यं सर्वात्मना स्वार्थे नियन्तुं शक्यम्" इत्येवं रीत्या शरीरलक्षणत्वाभ्युपगमे न कश्चिद्दोष इति सारम्।

**लक्षणे प्रविष्टयत्नानां प्रयोजनकथनम्—**

(१) अत्र यस्य चेतनस्य यद् द्रव्यं सर्वात्मना स्वार्थे नियन्तुं शक्यं तत् तस्य शरीरम्, (२) यस्य चेतनस्य यद् द्रव्यं सर्वात्मना स्वार्थे धारयितुं शक्यं तत् तस्य शरीरम्, (३) यस्य चेतनस्य यद् द्रव्यं शेषतैकस्वरूपम्, तत् तस्य शरीरमिति त्रिविधं शरीरलक्षणं भाष्यकाराभिप्रेतमिति श्रुतिप्रकाशिकायां सुदर्शनसूरयो न्यरूपयन्।

आकाशादिप्रदेशगमनादिष्वशक्यार्थेषु शरीरस्य नियमनासम्भवात् तद्व्यावृत्त्यर्थं स्वार्थे इत्युक्तम्। 'स्वार्थे' इत्यस्य स्वविषये इत्यर्थः, "अर्थः स्याद् विषये मोक्षे" इत्यभिधानात्। स्वशब्दश्च शरीरपरः। एवं च तत्तच्छरीरं संपाद्यकार्ये इत्येतादृशार्थस्य स्वार्थशब्देन सिद्धेः प्रकृते चाकाशादि प्रदेशगमनादेर्मनुष्यशरीरसम्पाद्यत्वाभावेन न तमादायाऽव्याप्तिप्रसङ्गः। रुग्णशरीरस्य चेतननियाम्यत्वाभावेन तत्राव्याप्तिः, अतो नियन्तुं शक्यमिति। तेनाग्न्यादौ स्वाभाविकस्यौष्ण्यादेर्मण्यादिना यथा प्रतिबन्धः, तथा रुग्णशरीरे शक्ते रोगेण प्रतिबन्ध एव, न तु शक्त्यभाव इति तत्रापि नियमनशक्तियोग्यत्वरूपं शक्यत्वमस्त्येवेति न कश्चिद्दोषः। एवं लक्षणान्तरेऽपि व्यावृत्तिरुक्तरीत्याऽवसेया। तथा चैतत्सिद्धं यद् भगवद्रामानुजाचार्याणां मते "यस्य चेतनस्य यद् द्रव्यं सर्वात्मना स्वार्थे नियन्तुं शक्यम्, तत् तस्य शरीरम्" इत्येकविधस्यैव शरीरलक्षणस्य चेतनाचेतन साधारणत्वं सिध्यतीति।

अत्र च न्यायसिद्धाञ्जनादिग्रन्थेषु नैयायिकोक्तशरीरलक्षणदूषणविषये

---

१. भगवद्गीता १४।१८।

श्रीभाष्योक्तलक्षणपरिष्कारविषये च बहु पराक्रमन्ते श्रीभगवद्रामानुजाचार्यानन्तर-कालिकाः श्रीवेदान्तदेशिकप्रभृतय इति तादृशं मार्गं पिष्टपेषणभिया परित्यज्य केवलं तत्तन्मतरीत्या शरीरस्य किं लक्षणं कीदृश्यश्च तत्रासाधारणयुक्तयस्तैस्तैः प्रदर्श्यन्ते, न्यायनय उद्भावितदोषाणां विशिष्टाद्वैतिनये परिहारोऽस्ति न वेति च विमर्शार्थमेवायं निबन्धोऽस्माभिर्न्यबन्धि ।



# दार्शनिकदृष्ट्या ऋग्वेदस्य महत्त्वम्

डॉ० ओङ्कारनाथतिवारी

अध्यक्षः,

साहित्यविभागस्य,

व्रजभूषणसंस्कृतमहाविद्यालये, खरखुरा, गया,

( बिहार )

❀ ❀ ❀

यद्यपि निखिलभारतीयवाङ्मयपितामहादस्मादृग्वेदात् तदुत्तरकालीनं सर्वविधमपि साहित्यं तत एव मूलमवाप्य विकाशमभजत्। न हि ऋग्वेदात् कोऽपि भिन्न आधारग्रन्थस्तदानीमवस्थित इति देशान्तरीयसाहित्यसम्पर्कात् पूर्ववर्तिनि काले वर्तमानानां सर्वेषां साहित्यानामृग्वेद एवोद्गमकेन्द्रमिति न विवादास्पदम्। दार्शनिकदृष्ट्या ऋग्वेदस्य महत्त्वे विचार्यमाणे विशुद्धदार्शनिकसिद्धान्तानामृग्वेदेन साकं यावान् यादृशो वा संसर्गः, स एवेदानीमस्माभिर्निरूपणीयतामर्हति।

तत्रादौ दार्शनिकपदार्थो विवेचनीयः। अयं हि दार्शनिकशब्दो यद्यपि नानार्थः—दर्शनाय हितः, दर्शनं प्रयोजनं यस्य, दर्शनस्यायं वेति तस्मिंस्तस्मिन् विग्रहे ठक्प्रत्ययेन निष्पद्यमानः सञ्जायते, तथापि प्रकृतस्य दार्शनिकशब्दस्य दर्शनं प्रयोजनं यस्येत्येव विग्रहः साधीयान्। तथा च दर्शनप्रयोजको यः सिद्धान्तः, स एव दार्शनिकः सिद्धान्त इति मन्तव्यम्। दर्शनं च विधीयमानं कस्यचिन्महत्त्वपूर्णस्य पदार्थस्यैव प्रतियोगिमुद्रया कुक्षौ गच्छत् सार्थकतां यातुमर्हति। न हि स्वाभाविकेन पथा लोचनगोचरीभवतां यथातथा वर्तमानानां पदार्थानां दर्शनं दर्शनम्; प्रत्युत अतीन्द्रियाणां दिव्यदृष्टिमात्रसमधिगम्यानां सत्यानामपि सत्यभूतस्य निखिलदृश्यमान् जगदाधारभूतस्य तत्त्वस्य दर्शनमेव विधेयं दर्शनं गन्तव्यम्। अस्यैव परम-चरमतत्त्वस्य दर्शनहेतवे आर्ष उद्घोषः—"आत्मा वा अरे द्रष्टव्यः, श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति।" ( बृ० उ०, द्वि० अ०, च० ब्रा०, पं० कण्डिका )।

एतस्यैव च दर्शनस्य महर्षयः पुरा भिन्नां भिन्नां प्रार्थनामनुष्ठितवन्तः। अयमेव सच्छब्देन, ज्योतिश्शब्देन, अमृतशब्देन च वेदादौ व्यवह्रियते। न चास्य दर्शनं प्रकृतिकिंकरीभूतेन मनसा सुलभम्। इदमेव बीजं येन प्रतिप्रत्यूषं महर्षयः —

यज्जाग्रतो दूरमुदैति दैवन्त-
दु सुप्तस्य तथैवैति ।
दूरङ्गमञ्ज्योतिषाञ्ज्योतिरेकन्त-
न्मे मनः शिवसङ्कल्पमस्तु ॥ ५ ॥
यत्प्रज्ञानमुत चेतो धृतिश्च
यज्ज्योतिरन्तरमृतम्प्रजासु ॥
यस्मान्नऽऋते किञ्चन कर्म्म
क्रियते तन्मे मनः शिवसङ्कल्पमस्तु ॥ ६ ॥
यस्मिन्नृचस्साम यजूंषि यस्मिँ
प्रतिष्ठिता रथनाभाविवारा ॥
यस्मिँश्चित्तसर्वमोतं प्रजा-
नान्तन्मे मनः शिवसङ्कल्पमस्तु ॥

इत्यादिभिर्मन्त्रैर्मनसः संशोधनाय दिव्यीकरणाय वा भृशं प्रायतन्त ।

तत्रान्तःशौचसम्पत्तये कर्मणामनुष्ठानं नान्तरीयकम् । न हि दुर्दमायाः प्रकृतेः सहसा नियन्त्रणं सुशकम् । अयमेवार्थ ऋग्वेदस्य प्रथमो मन्त्रः सूक्ष्मेक्षिकया प्रेक्षमाणस्य प्रतिभानवतो विदुषो बुद्धौ समुन्मिषति । इदमेव कारणं येन वैश्वामित्रो मधुच्छन्दा नाम ऋषिः प्रथमं पुरोहितमग्निं स्तोतुमुपक्रमते । वैदिकेनाध्ययनेनेदं सम्यगवगतं भवति यत् सर्वे देवा एकस्यैव कस्यचिद् महामायस्य सर्वशक्तेः सर्वज्ञस्य परमेश्वरस्य लीला-विलासः । अत एव—

'एकं सद्विप्रा बहुधा वदन्ति' इति आर्षी मान्यता सङ्गच्छते । अनया मान्यतयेद-मत्र प्रतिपिपादयिषितं प्रतिभाति यद् 'वेदपाठी भवेद्विप्रः' इति न्यायेन वेदपाठप्रयोजके यज्ञादौ वेदपाठिनः सन्तः विप्रा एकं परमात्मानं बहुधा ( बहुना प्रकारेण ) वदन्ति । तदीयोत्कर्षप्रकाशनद्वारा तं प्रसादयन्ति । अयञ्च मन्त्रः अग्निं स्तोतुमृषिणा माध्यमत्वेन परिकल्पितः । स पुरोहितमग्निं स्तौति । अग्निश्च परमात्मन एव सुबोध आकारः । अत एव—

अनुपाख्यवपुः सोऽयं व्यवहारप्रसिद्धये ।
आत्मानं व्यभजत् स्थूलैः त्रिधा वाय्वग्निभानुभिः ॥

इति बृहदारण्यकवार्त्तिके सुरेश्वराचार्यवचनं सङ्गच्छते । एवं सर्वे देवाः परमात्मनोऽङ्गानि । देवाश्चात्र मन्त्रे विशेषणत्वेनोपस्थापितस्य पुरोहितपदस्य स्वारस्यं गणयता द्विविधा इति कल्पनीयम् । पुरोहितास्तिरोहिताश्च । शब्दान्तरेण

व्यक्ता अव्यक्ताश्च। एतेनेदं निर्गतं यद् देवानां सामान्यं विशिष्टं च रूपं निश्चप्रचम्। अव्यक्तरूपेण तिरोहितरूपेण वा देवा व्यापकाः, पुरोहितरूपेण प्रादेशिकाः। इदञ्च यावद् देवानां परमेश्वराङ्गत्वं नाङ्गीक्रियते, तावन्नोपपन्नं भवितुं सम्भवि। यस्मात् परमात्मैवैकः, सर्वव्यापको देवः सर्वमभिव्याप्यवर्तितुमर्हति। इदमेव बीजं येन पूर्वोक्तम्—'एकं सद्विप्रा बहुधा वदन्ति' इति वचनं सङ्गतिं लभते।

ऋग्वेदीयप्रथममन्त्रस्य दर्शनानुसारिण्यां व्याख्यायामयमर्थ एकान्तं स्फुटतां प्रतिपत्स्यत इति तदीयं व्याख्यानं समुचितं निश्चीयते—

अग्निमीळे पुरोहितम्
यज्ञस्य देवमृत्विजम्।
होतारं रत्नधातमम्॥ इति।

अस्य मन्त्रस्य गद्यवपुषोऽयं परिणामो यद् अहं वैश्वामित्रो मधुच्छन्दा नाम ऋषिः पुरोहितं यज्ञस्य देवं होतारम् ऋत्विजं रत्नधातमम् अग्निम् ईडे स्तौमि। अत्र अग्नि-रिति परमात्मनो व्यक्तवपुरग्निर्गृह्यते। परमात्मनो नामस्मरणाच्च मङ्गलाचरणमप्य-नुष्ठितं भवति। यद्यग्निशब्देनेश्वरस्याग्निरूपेणाभिव्यक्तिमापन्नस्य ग्रहणं न क्रियेत; किन्तु यज्ञजगति प्रसिद्धस्याग्नेर्ग्रहणं क्रियेत, तदा यज्ञजगति प्रसिद्धानां त्रयाणामपि गार्हपत्या-हवनीयदक्षिणाग्निनामस्मरणं कर्तव्यं स्यात्। तथा च अग्निमित्येकवचनं न सङ्गच्छेत। अतोऽग्निरूपेणाभिव्यक्तस्य परमात्मनो ग्रहणं युक्तं प्रतिभाति। तस्य चैकत्वेनैकवचनमपि साधु सङ्गतं भवति। अत एव पुरोहितमिति विशेषणमपि सार्थकतां लभते। पुरोहित-मर्थाद् व्यक्तं व्यक्तमग्निं स्तुवत ऋषेरयमभिप्रायो लक्ष्यते यत् स तिरोहितमप्यग्निं तुष्टुषति। न हि लौकिकस्याग्नेरव्यक्तं रूपं कुत्रापि स्तूयते। तेनेदं स्पष्टं भवति यद् ईश्वरात्मनोऽग्नेरत्र ग्रहणं विवक्षितमस्ति। अयमेव चाग्निरूपः परमात्मा यज्ञस्य देवोऽपि—'यज्ञो वै विष्णुः' इत्युक्तेः। यज्ञशब्देन यदि विष्णुरूपोऽर्थो गृह्यते, तदापि परमात्मा यज्ञस्य विष्णुरूपस्यात्मनो देवः (प्रकाशकः), परमात्मनः स्वयंप्रकाशरूपत्वात्। अयमेव च परमात्मा होता ऋत्विक्। यजमानस्य भगवद्रूपत्वात्—

सूर्यो जलं मही वह्निर्वायुराकाशमेव च।
दीक्षितो ब्राह्मणः सोम इत्येतास्तनवः स्मृताः[1]॥ इति।

अयमेव च परमात्मा रत्नधातमः—सर्वश्रेष्ठो ब्रह्माण्डकुक्षिगतो यावद् रत्न-रक्षकः। रत्नञ्च नाम स पदार्थो यः स्वसम्बद्धे वर्गे सर्वश्रेष्ठो भवति। अत एव 'जातौ

१. विष्णुपुराणे।

जातौ यदुत्कृष्टं तद्रत्नमिति कथ्यते' इत्यभियुक्तोक्तिः संगच्छते। भगवतश्च तादृशतत्तज्जातीयोत्कृष्टत्वेन गृह्यमाणस्य जगतो जीवस्य वा गीतायां भगवद्विभूतिवपुषा परिगण्यमानस्य रक्षकत्वं प्रसिद्धमेव। अत एव—

यद् यद् विभूतिमत् सत्त्वं श्रीमदूर्जितमेव वा।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवम्॥

इति (१०,४१) गीतावचनं सङ्गतिं प्रपद्यते। तथा चायं मन्त्रः सम्यग् विचार्य्यमाणोऽग्निवपुषः परमेश्वरस्य स्तवन एव पर्यवस्यति। इत्थं 'एकं सद्विप्रा बहुधा वदन्ति' इत्यार्षी मान्यता संगच्छते।

कस्यचित् क्षुद्रकायस्य निबन्धस्य महाकायस्य ग्रन्थस्य पौरुषेयस्यापौरुषेयस्य वा प्रतिपाद्यगोचरीभूतं तात्पर्य्यं निर्णेतुं महर्षिभिः मनीषिभिश्च षड्लिङ्गानि निर्णीतानि। तानि च—

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये॥

'तत्तु समन्वयात्' इति ब्रह्मसूत्रमधिकृत्य शङ्कराचार्येण कृतस्य भाष्यस्य भाष्यार्थदीपिकाटीकायां वचनमिदं दृश्यते। एभिः षड्भिर्लिङ्गैः कस्यचिद् ग्रन्थस्य तात्पर्यं निर्धारितं भवति। तेषु प्रथमं लिङ्गमुपक्रमोपसंहारयोरैक्यम्। एकार्थविषयकबोधजनकत्वमुपक्रमोपसंहारौ च प्रकरणनिरूप्यस्य वस्तुनः आद्यन्तयोर्निरूपणमुपक्रमोपसंहाराविति तदर्थः। अभ्यासो नाम प्रकरणनिरूप्यस्य वस्तुनः प्रमाणान्तराविषयताऽपूर्वता। एवं प्रकरणनिरूप्यस्य वस्तुनो ज्ञानप्रयोजनं फलम्। स्तुतिनिन्दाफलकं वचनमर्थवादः। प्रकरणनिरूप्यस्य वस्तुनो दृष्टान्तैर्निरूपणमुपपत्तिरिति तात्पर्य्यनिर्णायकानां षण्णां स्वरूपपरिचयः।

दार्शनिकः स एव ग्रन्थो मन्तव्यो यो दर्शनाय हितो भवेत्। अत्र दर्शनं यत् स्वाभाविकं चक्षुरिन्द्रियसाध्यं तन्न जिघृक्षितम्, तथाविधस्य दर्शनस्य चक्षुरिन्द्रियं स्वरूपतः साधनमर्थात् शिक्षितोऽपि चक्षुरिन्द्रियं लब्ध्वा तत् स्वाभाविकं घटपदादिरूपसाक्षात्कारात्मकं दर्शनमर्जयेति। तदर्थमन्तःकरणस्य परिमार्जनं नापेक्ष्यते; किन्त्विन्द्रियागम्यस्य शमदमादिसाधनसंस्कृतानन्तःकरणैकगम्यस्याणोरणीयसो महतो महीयसः विश्वाधारभूतस्य तत्त्वस्य विश्वात्मनः परमात्मनो दर्शनमिह दर्शनपदेन ग्रहीतुमिष्टम्। तस्मै तथाविधाय द्रष्टव्यदर्शनाय हितः साधको ग्रन्थविशेषो व्यक्तिविशेषो वा दार्शनिकः, इति दार्शनिकपदतात्पर्य्यम्। इदं तात्पर्यं पुरस्कृत्य ऋग्वेदमधीयामहे चेत्,

तमपि दार्शनिकं कथयितुं बाढं पारयामहे। ऋग्वेदो हीतरेषां यजुर्वेदादीनां शिष्टानां वेदानामाधारभूतो वेदः। इदञ्च वैदिकं साहित्यमिति नेह प्राच्याः प्रतीच्या वा विद्वांसो विसंवादिनः। एवं स्थिते भारतीयानां विदुषां दृष्टिकोणेन द्विशाखो यो धर्मः, गौणो धर्म इति व्यपदिश्यमानस्तस्य समग्रस्य धर्मस्य प्रतिपादकं प्रकाशकं वा साहित्यं धार्मिक-साहित्यमिति मन्ये नैव विसंगतं वचः। तत्र संहिताब्राह्मणारण्यकोपनिषदिति भाग-चतुष्टयविस्तृतस्य वेदराशेः संहिताभागेन गौणधर्मप्रतिपादनं प्राधान्यमासादयेति। अत एव वेदानां कर्मकाण्डप्रतिपादकाः संहिताभागाः अपरा विद्या इति व्यपदेशं लभन्ते। अस्य नेदं तात्पर्यं यत् संहिताभागे विश्वात्मनः परमात्मनः स्वरूपप्रदर्शनस्य प्रयासात्य-न्ताभावः; किन्तु प्राधान्येन तददर्शनसाधनतया प्रकाशदानस्यार्षः संकल्पो नैव लक्ष्यते। बीजरूपेण तु परमात्मनो माहात्म्यं सार्थकीकरणसामर्थ्यं तत्र तत्र निर्दिश्यमानं दार्शनिकानां दृष्टिमावर्जयत्येव। न हि 'एकं सद्विप्रा बहुधा वदन्ति' इति ऋग्वेदीयो मन्त्रांशः सर्वेषां देवतान्तराणामुपास्यत्वं प्रकाशयन्नपि परमात्मनः सकलोपादेयशिरो-मणित्वार्थमौदासीन्यं कलयति। तत् संहिताभाग एव उप्तस्य दर्शनबीजस्य व्यासात्मना तत्तद्वेदीयोपनिषद्भागे प्रतिपादनं महर्षिभिः समनुष्ठीयत इत्यवश्यमङ्गीकर्तव्यम्।

आर्षः सङ्कल्पः संहिताभागप्रतिपाद्यतया कर्मकाण्डमेव किमुपादत्त इत्यपि न रहस्यरिक्तम्। न ह्यशुद्धान्तःकरणस्यात्मदर्शनौपयिके श्रवणादावधिकारः। कर्मादीना—मनुष्ठानमहिम्ना यदाऽन्तःकरणं सूक्ष्मदर्शनयोग्यतां लभते, तदैवापातरमणीयानां संसार-दृष्ट्यासुन्दराणां पदार्थानामान्तरिकसौन्दर्यच्छादकं पटलमनावृत्तं भवति। तदैव च यजमान इदमनुभवति यत्—

सत्यं मनोरमा रामाः सत्यं रम्या विभूतयः।
किन्तु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवितम्॥

( ध्वन्या० तृ० उ )

तदेव च कर्माऽनुष्ठानात् प्राप्तव्यं स्वर्गादिकं तुच्छं मन्तुं प्रारभते। इदमेवाभि-प्रेत्य विद्यावाचस्पतिना मधुसूदन-ओझामहोदयेन ब्रह्मविद्याया यज्ञविद्याऽतिशायित्वं प्रतिपादितम्। न हि यज्ञविद्यया मोक्षलाभः। न वा मोक्षादधिकं किमपि सुखं भवितुं घटते। अत एव यज्ञविद्याया मोक्षविद्यासाधनत्वं मुमुक्षूणां कृते प्रथममनुष्ठेयत्वञ्च। यद्यपि वेदे ते ते यज्ञास्तत्फलमुद्दिश्य तत्र तत्र निरूपिता इति ते कथं मोक्षविद्यायां साधनतां गच्छेयुः। यो यज्ञो येनोत्पत्तिवाक्येन निरूपितः, यच्च फलं यस्य यज्ञस्य यत्र निर्दिष्टं तदेव तस्य फलम्। तस्यैव फलस्य च स यज्ञसाधनम्। यथा—'अग्निष्टोमेन

स्वर्गकामो यजेत' इति वाक्यं यं यागं विधत्ते, तस्याग्निष्टोमयागस्य स्वर्ग एव फलं भवितुमर्हति। यागश्च स स्वर्गस्यैव साधनं भवितुं शक्नोतीति कोऽपि यागो यज्ञो वा ब्रह्मज्ञानात्मनो मोक्षस्य द्वारतां लब्धुं नेष्टे। तथा सति यज्ञविद्या ब्रह्मविद्यायाः साधनमिति कथनं नोपपद्यते, तथापि—

"तमेतं वेदाऽनुवचनेन ब्राह्मणा
विविदिषन्ति यज्ञेन दानेन तपसाऽनासक्तेन"।

इति श्रुत्या सामान्यतः सर्वेषां यज्ञानां ब्रह्मविविदिषायां विनियोगो व्यवस्थापितः। तेन—'एकस्य तूभयत्वे संयोगपृथक्त्वमिति'।

यथा महर्षिजैमिनिन्यायं वाक्यभेदेन यज्ञा तत्तत्फलसाधनपुरस्सरं ब्रह्मज्ञान साधनतामपि यातुं सुखं घटन्ते। एतावांस्तु विशेषो यद् यज्ञा विशिष्टं फलमुद्दिश्य विधीयमानाऽनुष्ठातुर्बुद्धेः सङ्कीर्णतां द्योतयन्ति, यदा तु पुनरिमे सामान्यं फलं विश्वकल्याणमन्तर्यामिणः परमात्मनः प्रसन्नतां वा मनसिकृत्य समनुष्ठीयन्ते, तदा पुनः सत्त्वशुद्धिसम्पादनद्वारा ब्रह्मज्ञानाङ्गभूयमनुभवन्ति। अत एव नैष्कर्म्यसिद्धौ सुरेश्वराचार्येणेदमुक्तं यत्—

"प्रत्यक् प्रवणतां बुद्धेः कर्माण्यापाद्य शुद्धितः।
कृतार्थान्यस्तमायान्ति प्रावृडन्ते घना इव॥" इति।

अत एव च वैदिकसाहित्यस्य धार्मिकसाहित्यात्मना बहुश्रुतैर्विधीयमाना ख्यातिरपि सङ्गतिं लभते। यद्यपि वेदानां कर्मकाण्डात्मके काण्डे कर्मणां सफलं प्रतिपादनम् इति नेदं कर्मकाण्डम् आत्मनो दर्शनहिताय सक्षममिति भवेत् कस्यचिद् विकल्पः, तथापि नायं क्षोदक्षमः। अन्यथा—

"सर्वे वेदा यत्पदमामनन्ति
तपांसि सर्वाणि च यद्वदन्ति।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति
तत्ते पदं संग्रहेण ब्रवीमि॥"

इति कठोपनिषदि ( १.१५ ) ब्रह्मविद्यानिरूपणप्रसङ्गे नचिकेतसं प्रति यमराजेन सर्वेषां वेदानां तत्पदप्रतिपादकत्वं नाम परमात्मस्वरूपप्रकाशकत्वमभिधीयमानं व्याकुप्येत।

अत्र—'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' इति ब्रह्मसूत्रमधिकृत्य आचार्य्यशिरोमणिना भगवता शङ्करेण प्रणीतेऽस्य भाष्ये यथाप्रसङ्गं समुद्धृतस्य 'सर्वे वेदा यत्पदमामनन्ति' इति मन्त्रस्य 'सर्वे वेदाः' इति प्रतीकमादाय रत्नप्रभाटीकायामुक्तम्—

कश्चिद् वेदभागः साक्षाद्ब्रह्माख्यं पदं ब्रूते, कश्चित्तु ज्ञानार्थकर्मद्वारेति मत्वा 'सर्वे वेदाः' इत्युक्तम् इति। अत एव च स्मृतिरपि यज्ञादीनां कर्मणां तथाविधकर्मप्रतिपादकानां वेदानाञ्च परम्पराया परमात्मस्वरूपप्रतिपादकत्वं व्याचष्टे। तथाहि—

कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः।
कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते ॥ इति।
"ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः"। इति च।

एवं स्थिते, ऋग्वेदस्य संहिताभागो यस्य तत्कर्मप्रतिपादनमर्थः, सोऽपि परम्परया (अन्तःकरणशुद्धिमाध्यमेन) परमात्मावगतिप्रयोजकतया दार्शनिक इति व्युपदेष्टुं शक्यते। यद्यपि ऋग्वेदस्य कतिचिदेव सूक्तानि दार्शनिककलेवरात्मना प्रख्यातिं गतानि विदुषां दृष्टिकोणमनुकूलयन्ति; तथापि तानि साक्षात् ब्रह्मस्वरूपप्रतिपादिकानि। सूक्तान्तराणि तु कर्मस्वरूपनिर्वाहपूर्वकमनुष्ठातुरन्तःकरणशोधकानि सन्ति, सत्स्वरूपबोधकानि भवन्तीति मन्तव्यम्। अत एव 'सर्वे वेदा यत्पदमामनन्ति' इति पूर्वोक्तं वाचः सङ्गच्छते।

इयता सन्दर्भेण काण्डत्रयात्मकस्य समग्रस्यापि वेदस्य दार्शनिकत्वं चेद् व्यवस्थापितं भवति, तदा तेषु तेषां सर्वेषामाधारभूतस्य ऋग्वेदस्य संहिताब्राह्मणेति तत्तदविभागसमुच्चयात्मकस्य दार्शनिकत्वे किमु वक्तव्यम्? एवं स्थितेऽपि विद्वांस ऋग्वेदस्य कतीनाञ्चन सूक्तानामेव यद् दार्शनिकमुद्रयोपादानाय सहमतास्तत्र बीजेन केनचित् भवितव्यमेव। कस्यचिद् भवेदाक्षेपस्तन्निराक्रियायै समाधानमेतद् उचितं प्रतीयते यद् यथा कश्चिद् जिज्ञासुस्तत्त्वज्ञमेवमिदं बुभुत्सते यत्—

सर्वत्रगं वेदवचोभिरुच्यते
ब्रह्मोपलादौ तु कथं न लक्ष्यते।
अस्मच्छरीरेषु यथैतदञ्जसा
सर्वज्ञ मे ब्रूहि विबोधवृद्धये[1] ॥ इति।

बुभुत्सायामिव जिज्ञासोः स्पष्टमेवाऽयमाशयो निर्गच्छति यद् व्यापकस्य ब्रह्मण आञ्जस्येन यथाधिमानवशरीरं प्रतिभासः, न तथोपलादाविति तत् कुतः? इमां जिज्ञासां निराचिकिर्षवे गुरवे स्वदमानं समाधानं त्विदमिह विज्ञेयमिति—

सामान्यतः सर्वगताऽपि भानुभा
यद्वद् विशेषेण विभाति दर्पणे।
ब्रह्मापि सर्वत्र गतं मतो स्फुटं
तद्वद् विभातीत्यनुभूयते बुधैः[2] ॥ इति।

---

१. विचारदीपके, स्वामीब्रह्मानन्दः; २. विचारदीपके, ब्रह्मानन्दसरस्वती।

इदमत्र तात्पर्यम्—यथा ब्रह्मणः सर्वत्रव्यापकत्वेऽपि बुद्धावेव तस्य स्फुटः प्रतिभासः, यथा वा सौरस्याऽऽलोकस्य सर्वगतत्वेऽपिऽध्यादर्शं साधीयानाभासः, तथैव दार्शनिकत्वस्य सकलर्ग्वेदव्यापकत्वेऽपि नासदीयपुरुषहिरण्यगर्भादिसूक्तेषु स्फुटमवभासाद् विदुषां तेषु सूक्तेष्वेव दार्शनिकत्वव्यपदेश इति मन्ये नैव तर्कनिस्वं वचः।

एवं दार्शनिकदृष्ट्याऽनुसंधीयमानोऽयमृग्वेदो भूमण्डले वर्तमानानां समेषां दर्शनानामादिमं स्तोत्र इति निश्चेतुमुत्साहं प्रददाति सः। ऋग्वेदो हि सकलभूमण्डलीयसाहित्यज्येष्ठः, सकलभूमण्डलीयसाहित्यश्रेष्ठश्च। अयमेव हेतुः येनेदमभिधातुं सोत्साहं वयं प्रभवामो यद् ऋग्वेदोत्तरकालवर्तिनां सर्वविधानां धार्मिकाणां दार्शनिकानां सिद्धान्तानाम्नायं न भवेद् ऋग्वेदो यदि मूलं तदा ते सर्वे सिद्धान्ता आकस्मिकाः प्रभवेयुः। आकस्मिकत्वं च सिद्धान्तानामुपादेयत्वं विघटयति। तस्मात् तेषामृग्वेदमूलकत्वमकामेनाप्यभ्युपगन्तव्यम्। तत्र धार्मिका आचारा यदि दर्शनं भित्तिमुद्रया नाश्रयेयुः, तदा तेषामन्धत्वं प्रसज्ज्येत आचाररूपतोपलब्धये तर्कशास्त्रानुमोदितो यः पन्थाः, तेन विचार एव कारणतां याति। विचार एव विकाशभावमापन्न आचाररूपतां धत्ते। तद्यथा—

"ज्ञानजन्या भवेदिच्छा
इच्छाजन्या भवेत् कृतिः।
व्यापारः कृतिजन्यस्स्यात्॥" इति।

व्यापार एव ह्याचारः। अयं च व्यापारो मानसव्यापाररूपकृतिजन्यः। परिष्कृतो मानसो व्यापार एव दर्शनम्। परिष्कारो नाम जन्मजन्मान्तरार्जितविषयसंस्कारपटलाच्छन्नस्य मनस्तलस्य ज्ञानप्रतिबन्धकसंस्कारपटलनिराकरणेन मनसो निर्मलीकरणम्। एतन्निर्मलीकरण एव यज्ञयागादीनां सर्वेषां धर्माणां समुपयोगः; 'धर्मेण पापमपनुदति' इति श्रुतेः।

त एव धर्मा ऋग्वेदस्य प्रतिमन्त्रं प्रतिपाद्यमानाः कथं न मूलात्मना दर्शनं गृह्णीयुः। इत्थं सर्वोऽपि संहिताभागः सामान्यतो दार्शनिकेन महिम्ना संवलितः। कानिचित् सूक्तानि बद्धपरिकराणि व्यापकान् विश्वजनीनान् दार्शनिकान् सिद्धान्तान् प्रकाशयितुमीशत इति। दार्शनिकदृष्ट्या ऋग्वेदस्य महत्त्वं यद् यादृशं च स्थिरीभवति, तस्य सर्वस्य विस्फोरणाय विशदीकरणाय च नास्माकमल्पश्रुतानां योगसंस्काररिक्तानां प्रज्ञा प्रभवति पदेनवोक्त्वा विरामग्रहणं साधीयो मन्य इति शम्।



# न्यायवैशेषिकदर्शनयोः संख्याविमर्शः

श्रीसर्वेश्वरराजहंसः

शिक्षकः, न्यायवैशेषिकविभागे

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

वाराणसी

❀ ❀ ❀

एकः, द्वौ, त्रय इत्यादयो व्यवहारा लोके यदाश्रयेण प्रवर्तन्ते, सा संख्या। दर्शनशास्त्रेषु संख्याशब्द एतदभिप्रायेणैवाभ्युपगतः। अत्रेदं जिज्ञास्यमस्ति यत् संख्या-पदार्थः पदार्थस्य कतमे वर्गे सन्निवेशयितुं शक्य इति। अस्मिन् विषये प्राचीनन्याय-वैशेषिकदर्शनयोः संख्याप्रतिपादनपराणां ग्रन्थभागानां पर्यालोचनेनेदं प्रथीयते यत् संख्या सर्वेषां द्रव्याणां सामान्यगुण इति; किन्तु कतिपयैर्नव्यनैयायिकैर्वैशेषिकदर्शन-विद्भिश्च संख्याया गुणत्वमस्वीकृत्य पदार्थान्तरत्वमङ्गीकृतम्। एतदुभयविधविचाराणां संक्षेपेणेत्थं समुल्लेखः कर्तुं शक्यते—प्राचीननैयायिकविदामयमभिप्रायो यत् संख्याया द्रव्याणां सामान्यगुणत्वमेव समुचितम्। यतो हि तस्याः पदार्थान्तरत्वाभ्युपगमे पदार्थानां न्यायवैशेषिकदर्शनयोरभ्युपगतः सप्तधा विभागो भज्येत। तथाहि—एकत्वमारभ्य परार्धपर्यन्ता अनन्ताः संख्या यदि पदार्थान्तररूपा मन्येरन्, तदा केवलं संख्यापदार्थस्यै-वानन्त्यं दुर्निवारम्। अतः संख्यायाः क्लृप्तेषु पदार्थेष्वेवान्तर्भावौचित्येन गुणेष्वेव सन्निवेशो न्याय्यः।

न च संख्याया गुणेष्वेव कुतः सन्निवेशः, द्रव्यकर्मादिषु तत्समावेशः कुतो न स्यादिति वाच्यम्, तस्या द्रव्यत्वे घटादौ, अन्त्यावयविनि गगनादौ, नित्यद्रव्ये चावृत्तित्वप्रसङ्गात्। कर्मण्यपि तदन्तर्भावो नोचितः, विभुद्रव्येषु तस्यासत्त्वप्रसङ्गात्। सामान्येऽपि नान्तर्भावः, एकत्वसंख्याया एकव्यक्तिमात्रवृत्तितया सामान्यरूपत्वस्या-सम्भवात्। द्वित्वादीनामपि सामान्यरूपत्वं दुर्वचम्, अपेक्षाबुद्धिजन्यतया नित्ये सामान्ये तदन्तर्भावासम्भवात्। समवायेऽपि नान्तर्भावः, विशिष्टबुद्धिविशेषनियामकसंसर्गत्वा-भावादनित्यत्वाच्च। अभावेऽपि नान्तर्भावो युक्तः, भावत्वेन प्रतीयमानत्वात्। अतः पारिशेष्यात् संख्याया गुणत्वमेव युक्तम्।

उक्तमतं विरुन्धानानां रघुनाथशिरोमणिप्रभृतिनव्यनैयायिकानामिदं मतमस्ति यत् संख्यायाः गुणत्वं नाङ्गीकर्त्तुं शक्यते, यतो हि संख्याया गुणत्वे निगुर्णत्वस्य गुण-लक्षणत्वानुपपत्तिः। गुणे संख्यात्मकस्य गुणस्य सत्त्वेन निर्गुणत्वस्य तत्र दुर्घटतया गुणे निर्गुणत्वलक्षणस्यासम्भवापत्तेः। गुणे संख्यात्मको गुणो न भवतीति वक्तुं न शक्यते, यतो हि सप्तरूपाणि, षड्रसाः, द्वौ गन्धौ, त्रयः स्पर्शाः, चतुर्विंशतिर्गुणा इत्यादि-प्रत्ययानुरोधेन गुणेऽपि संख्याया आवश्यकत्वात्। गुणेषु संख्याप्रतीतिः भ्रमरूपेति वक्तुं न शक्यते, गुणे संख्याप्रतीतेर्बाधकाभावात्। यत्र यत्प्रतीतिर्न बाध्यते, तत्र तत्प्रतीते-र्भ्रमत्वे मानाभावात्। न च द्रव्यगतसंख्यैव स्वसमवायिसमवायसम्बन्धेन द्रव्यगतगुणे प्रतीयत इति युक्तम्, द्रव्येषु एकत्वादिप्रतीतितो रूपादिषु एकत्वादिप्रतीतेर्वैलक्षण्यस्या-प्रामाणिकतया द्रव्य एकत्वादिप्रतीतिः समवायेन गुण एकत्वादिप्रतीतिश्च स्वसमवायि-समवायेन भवतीति भेदस्य कर्त्तुमशक्यत्वात्।

नव्यनैयायिकैरुत्थापितानां सर्वेषामाक्षेपाणां समाधानतया प्राचीनैरिदं वक्तुं शक्यते यत् संख्यापदार्थो द्विविधः—गुणरूपः, अगुणरूपश्चेति। तत्र गुणरूपा संख्या द्रव्यमात्रेऽवतिष्ठते, अगुणरूपा च संख्या बुद्धिविशेषविषयत्वरूपा। सा च स्वरूपसम्बन्धेन गुणादौ तिष्ठति। गुणलक्षणे च निरुक्ते निर्गुणत्वप्रतियोगिता गुणे समवायेन विवक्षिता। गुणानां च समवायेन गुणशून्यतया न तत्र निर्गुणत्वघटितस्य गुणलक्षणस्याव्याप्तिः। तत्र संख्याव्यवहारश्च बुद्धिविशेषविषयत्वात्मकगुणानात्मकसंख्योपपद्यते। तथा च न तत्र कोऽपि दोषः।

नव्यनैयायिकैरुक्तमतमालोचयद्भिरिदमुच्यते यद् द्रव्ये गुणादौ च संख्याप्रत्यय-व्यवहारयोः समानाकारतया द्रव्ये गुणादौ च तयोर्विभिन्नसंख्याविषयत्वोपगमो नोचितः। अतः संख्याया गुणभिन्नत्वमेवोचितम्। गुणभिन्नयैव द्रव्ये गुणादौ च संख्यायाः प्रत्यय-व्यवहाराः सम्पद्यन्त इति।

आचार्यविश्वनाथभट्टाचार्येण कारिकावल्यां सामान्यगुणेषु संख्यायाः प्रथम-मुल्लेखः कृतः। यथा—

संख्यादिपरत्वान्तो द्रवः सांसिद्धिकस्तथा।
गुरुत्ववेगौ सामान्यगुणा एते प्रकीर्तिताः[1]॥

अनया कारिकया यद्यपि सामान्यगुणत्वरूपं संख्यायाः परिमाणादिगुणान्तर-साधर्म्यमेवोक्तम्, तथापि तत्साधर्म्यद्वारेणैव संख्याया लक्षणमपि सूचितं भवति। तच्च

---

१. कारिकावली–(कारिका—९१-९२)।

लक्षणं सामान्यगुणत्वव्याप्यद्रव्यत्वव्यापकतावच्छेदकजातिव्यापकगुणत्वसाक्षाद्व्याप्य-जातिमत्त्वम् ।

तथाहि—सामान्यगुणत्वव्याप्यं संख्यात्वम्, तद्व्याप्यमेकत्वादिकम्, तच्च द्रव्यत्वव्यापकतावच्छेदकम्, द्रव्यमात्र एकत्वादिसंख्याया विद्यमानत्वात् । तद्व्यापिका-गुणत्वसाक्षाद्व्याप्या जातिः संख्यात्वम्, तस्य सर्वसंख्यासु विद्यमानत्वाल्लक्षणसमन्वयः । न च पृथक्त्वस्यापि तादृशजातितया पृथक्त्वेऽतिव्याप्तिरिति वाच्यम्, पृथक्त्वान्यत्व-निवेशेन तद्वारणात् । अथवा द्वितीये व्याप्ये तादृशजात्यन्तरापेक्षयाऽल्पतरलोकप्रसिद्धता-वच्छेदकान्यत्वं निवेश्यम् । तथा चैकपृथक्त्वस्यैकत्वापेक्षया लोकेऽल्पतरं प्रसिद्धतया तदवच्छेदकान्यत्वस्यैकपृथक्त्वेऽभावेनोक्तदोषाभावात् । एकत्व च न कस्यचित् तादृश-व्याप्यान्तरस्यापेक्षयाऽल्पतरं लोके प्रसिद्धम् । एवञ्च, तादृशप्रसिद्धतावच्छेदकान्यत्वस्यै-कत्वत्वे सत्त्वेन संख्यायामुक्तलक्षणसमन्वये न किञ्चिद् बाधकम् । लोकेऽधिकतरेदृश-प्रसिद्ध्यनुरोधेनैव सामान्यगुणेषु संख्यायाः प्राथम्येनोल्लेखः ।

आचार्यशङ्करमिश्रेण संख्याया लक्षणं विभिन्नैः प्रकारैः प्रतिपादितम् । यथा—"[1]गणितव्यवहारासाधारणकारणत्वं संख्यात्वम् । एकमात्रवृत्तित्वे सति पृथक्त्वान्या-नेकवृत्तिवृत्तिगुणत्वव्याप्यजातिमत्त्वं वा । व्यासज्यवृत्तिवृत्तित्वे सत्यव्यासज्यवृत्तिवृत्ति-पृथक्त्वान्यगुणत्वव्याप्यजातिमत्त्वं वा" इति ।

श्रीमदुदयनाचार्येण संख्यालक्षणं प्रकारान्तरेण निर्दिष्टम् । यथा—"पृथक्त्वा-समवेतसर्वान्योन्याभावसमानाधिकरणैकद्रव्यसमवेतसमवेतवती संख्या" । अयमाशयः—पृथक्त्वासमवेतं सर्वान्योन्याभावसमानाधिकरणे समवेतम् एकद्रव्ये च समवेतं यद् तद्वती संख्या । तथा च यादृशं संख्यात्वं तद्वत्त्वस्य संख्यायां सत्त्वात् लक्षणसमन्वयः ।

महर्षिकणादेन वैशेषिकदर्शनेऽनेकेषु[2] सूत्रेषु संख्यायाः साधर्म्यमभिहितम्, येन संख्यायाः स्वरूपं विस्पष्टतां याति; किन्तु सूत्रेषु तेषु तेषु संख्याशब्दमप्रयुज्यैकत्व-शब्दस्यैव प्रयोगः प्राप्यते, येन कैश्चिद् विद्वद्भिः संख्याया एकत्वात्मना तावदेकविधत्व-भेदमुपगम्य द्वित्वत्रित्वादीनामेकत्वान्यसंख्यात्व निराकृतम् । तन्नये द्वाभ्यामेकत्वाभ्यां द्वित्वस्य, त्रिभिश्चैकत्वैस्त्रित्वस्य प्रतीतिव्यवहारौ समर्थ्येते ।

वैशेषिकसूत्रोत्तरवर्त्तिषु वैशेषिकदर्शनग्रन्थेषु प्राचीनतमो महनीयो ग्रन्थः प्रशस्त-पादाचार्यस्य "पदार्थधर्मसंग्रहः" समुपलभ्यते । ग्रन्थेऽस्मिन् संख्याया लक्षणं स्वातन्त्र्येण

---

१. लक्षणावली, (संख्यालक्षणम्); २. कणादसूत्रम्–७।२।१-८ ।

**सर्वप्रथमं निर्दिष्टम्।** यथा—"[1]एकादिव्यवहारहेतुः संख्या" इति। अर्थात् "अयमेकः, इमौ द्वौ, इमे त्रयः" इत्यादयो व्यवहारा यमर्थमुपजीव्य प्रवर्तन्ते, सोऽर्थः संख्येति। परमिदं लक्षणं यथाश्रुतं न संगच्छते, व्यवहारं प्रति व्यवहर्त्तव्यज्ञानस्य कारणतया, एकादिव्यवहारहेतावेकत्वादिज्ञाने कार्यमात्रं प्रति कालस्य कारणतया च तादृशव्यवहारहेतौ काले चातिव्याप्तिः। अत एकादिव्यवहारस्य विषयविधया कारणतावच्छेदकीभूतो गुणः संख्येत्येवं गुणपदं सन्निवेश्योक्तलक्षणं परिष्कार्यम्।

तथा च—'एकः' 'द्वौ' इत्यादिशब्दप्रयोगात्मकव्यवहारं प्रति विषयविधया हेतुतावच्छेदकीभूतगुणत्वलक्षणस्य तात्पर्येण दोषाभावत्।

"एकादिव्यवहारहेतुः संख्या" इतीदं लक्षणं व्याचक्षाणेन श्रीधराचार्येणेत्थमुक्तम्—"[2]व्यवहृतिर्व्यवहारो ज्ञेयज्ञानं व्यवह्रियतेऽनेनेति व्युत्पत्त्या व्यवहारशब्दः, तथा चैकादिव्यवहारः 'एकम्' 'द्वे' त्रीणीत्यादिप्रत्ययो विशेषणकृतः प्रत्ययत्वाद् दण्डीति प्रत्ययवत्। एवं शब्दमपि पक्षीकृत्य विशिष्टशब्दत्वादिति हेतुरवगन्तव्यः"। एतद् व्याख्यानुसारेण तावदेकादिव्यवहारो यद्येकादिप्रत्ययः, तदा तत्पक्षकमनुमानम् एकत्वादिसद्भावे प्रमाणम्। विनिगमनाविरहेणोभयोरनयोः पक्षयोरभ्युपगतिर्युक्ता।

आचार्यकेशवमिश्रेण संख्याया लक्षणमित्थं प्रतिपादितम्—"संख्या एकत्वादिव्यवहारहेतुः सामान्यगुणः[3]" इति। एतस्मिँल्लक्षणेऽन्यलक्षणापेक्षाया सामान्यपदस्याधिक्यमस्ति। एतेन संख्यायाः साधर्म्यं सूचितं भवति। गुणपदं चैकत्वादिव्यवहारस्य हेतुभूतं कालम् एकत्वादिज्ञानञ्च व्यावर्तयति।

श्रीमता गङ्गाधरसूरिणा निजे कणादसिद्धान्तचन्द्रिकाग्रन्थे संख्यालक्षणे कारणपदस्य स्थाने निमित्तपदस्य प्रयोगः कृतः। तेन संख्याया एकत्वादिव्यवहारं प्रति निमित्तकारणत्वं सूचितं भवति। किरणावलीकारेण व्यवह्रियतेऽनेनेति व्युत्पत्त्या व्यवहारशब्दस्य शब्दपरत्वमेव स्वीकृतम्। व्योमशिवाचार्यस्यापि तत्रैव स्वारस्यम्।

शिवादित्येन संख्याया लक्षणद्वयं प्रतिपादितम्—१. "संख्यात्वसामान्यवती संख्या"; २. "गणनासाधारणकारणं संख्या[4]" इति। अनयोः प्रथमं लक्षणं संख्यात्वजातिमवलम्बते। तत्सिद्धौ नान्यत् किमपि लक्षणे विमर्शयोग्यम्। द्वितीयलक्षणे किञ्चिद् विमर्शनीयमस्ति। तथाहि—तत्रासाधारणपदस्यानिवेशे कार्यमात्रस्य कारणतया गणना-

---

१. प्रशस्तपादभाष्यम् (संख्यानिरूपणम्);
२. न्यायकन्दली (संख्याप्रकरणम्)।
३. तर्कभाषा—(गुणनिरूपणम्);
४. सप्तपदार्थी—(संख्यालक्षणम्)।

त्मकस्यापि कार्यस्य कारण ईश्वरज्ञानादावतिव्याप्तिः। असाधारणपदप्रयोगे च गणनात्वावच्छिन्नकार्यतानिरूपितकारणताया लाभेन न तद्दोषावसरः, कार्यत्वरूपसामान्यधर्मत्वस्येव, ईश्वरज्ञानादीनां जन्यतावच्छेदकत्वाभ्युपगमात्। उक्तलक्षणेऽसाधारणपदस्य व्यावृत्तिं विमृशता यतीन्द्रमाधवेनेदमुक्तम्—"यत्सामान्ये सत्येव यत्सामान्यं जायते, असति च न जायते, तत् तस्यासाधारणकारणम्। यथा तन्तवः पटस्यासाधारणकारणम्। गणनां प्रत्यसाधारणकारणं संख्या"[1] इति।

तर्कसंग्रहव्याख्याकारेण (वाक्यवृत्तिकारेण) [2]अन्नम्भट्टीयसंख्यालक्षणमित्थं प्रतिपादितम्—"एकत्वादिव्यवहारजनकतावच्छेदकमुख्यविशेष्यतावत्त्वमर्थः[3]", "एकत्वादिव्यवहारः" अत्रैकत्वमित्याकारको व्यवहारस्तज्जनकताऽऽधेयतासम्बन्धेन, इदं प्रकारकैकत्वविशेष्यकज्ञाननिष्ठा तदवच्छेदकमुख्यविशेष्यताश्रयत्वमेकत्वेऽस्तीति लक्षणसमन्वयः।

**संख्याया भेदाः—**

प्रायः सर्वेषु दार्शनिकसम्प्रदायेष्वेकत्वादिरूपायाः संख्याया अनेके प्रकारा अभ्युपगताः सन्ति; किन्तु वैशेषिकदर्शने संख्याया गुणत्वस्य स्वीकारेण गुणादेः संख्याश्रयत्वस्यासम्भवतया गुणादौ व्यवह्रियमाणस्यैकत्वादेः संख्याभिन्नत्वमेवाभ्युपेयम्। अतः सर्वेषामेकत्वादीनां गुणात्मकसंख्यारूपत्वं विप्रतिपद्यमानतां भजते।

एकत्वादेर्गुणात्मकसंख्यामात्ररूपत्वे गुणात्मकत्वेऽपि तस्य गुणादिवृत्तित्वसमर्थनेऽपि संख्याप्रभेदविषये विद्वत्सु मतसामञ्जस्यं नास्ति।

प्रशस्तपादाचार्येण संख्याया मुख्यतया प्रकारद्वयं निर्दिष्टम्—१. एकद्रव्यवृत्तिसंख्या, २. अनेकद्रव्यवृत्तिसंख्या[4]। तत्रैकद्रव्यवृत्तिः केवलमेकत्वसंख्या, सा चाऽऽश्रयभेदेन भिन्ना, एकत्वत्वजात्याऽनुगमयितुमर्हा च। अनेकवृत्तिसंख्या द्वित्वमारभ्य परार्धपर्यन्ता।

वैशेषिकसूत्रोपस्कारे शङ्करमिश्रेण कन्दलीग्रन्थे श्रीधरेण च बहुत्वसंख्या त्रित्वादितो भिन्ना स्वीकृता। तयोरयमाशयो यद् यदासन्निहितेष्वनेकद्रव्येषु त्रित्वादिकं त्रित्वत्वादिरूपेण न गृह्यते, तदा बहुत्वस्य बहुत्वत्वेन ग्रहणं भवति। इदं ग्रहणं बहुत्वत्वेन यदि त्रित्वादिविषयकमेव, तदा बहुत्वसंख्याया न स्वतन्त्रसंख्यात्वम्। यदि च बहुत्वत्वेन त्रित्वादिभिन्नस्य ग्रहणम्, तदा बहुत्वं स्वतन्त्रा संख्या। श्रीमदुदयनाचार्यो

---

१. मितभाषिणी—(संख्याप्रकरणम्); २. "एकत्वादिव्यवहारहेतुः संख्या" (तर्कसंग्रहः)।
३. वाक्यवृत्तिः—(संख्यालक्षणम्); ४. प्रशस्तपादभाष्यम्—(संख्यानिरूपणम्)।

बहुत्वत्वेन त्रित्वादेरेव ग्रहणमङ्गीकुरुते। तन्मते बहुत्वस्य त्रित्वादिभिन्नस्वतन्त्रसंख्या-रूपत्वपक्षः समीचीनो न प्रतिभाति, बहुत्वत्वेन त्रित्वादेरेव प्रतीत्युपगमपक्षे लाघवात्।

शिवादित्येन संख्यायास्त्रयो भेदा निर्धारिताः—एकत्वम्[1], द्वित्वम्, बहुत्वञ्चेति। तेष्वाद्ययोरेकैकजातिमत्त्वम्, तृतीयञ्च त्रित्वमारभ्य परार्धपर्यन्तं विभिन्नजातीयम्। संस्कृतव्याकरणेऽपि[2] बहुवचनविभक्त्या त्रित्वादिपरार्धपर्यन्तैव संख्या यथायोग्यं बोध्यते। आचार्यविश्वनाथपञ्चाननभट्टाचार्यस्यायमभिप्रायो यत् त्रित्वादावेव यदा कस्यचिद् दोष-वशात् त्रित्वत्वादिग्रहणं न भवति, तदा तत्र बहुत्वत्वजातिर्गृह्यते। बहुशब्दोत्तरं प्रयुज्य-मानाभ्यां तरतमप्रत्ययाभ्यां बहुत्वस्यापकर्ष उत्कर्षश्च बोध्येते। एष बोधो बहुत्वस्य त्रित्वादिरूपत्व एव संगच्छते। स्वतन्त्रसंख्यात्वे तु बहुत्वस्य एकविधतया तत्रोक्त-प्रत्ययाभ्यां न्यूनाधिक्ययोर्बोधनस्याशक्यत्वात्।

न्यायशास्त्रस्य नव्यग्रन्थेषु व्यासज्यवृत्त्यव्यासज्यवृत्तिभेदेव संख्याया द्वैविध्य-मुक्तम्। तत्र व्यासज्यवृत्तित्वम्—एकत्वतत्समनियतधर्मानवच्छिन्नानुयोगिताकपर्याप्ति-प्रतियोगित्वम्। तच्च द्वित्वादौ वर्तत एव। अव्यासज्यवृत्तित्वं तु—एकत्वावच्छिन्नानु-योगिताकपर्याप्तिप्रतियोगित्वम्। तच्चैकत्वसंख्यायां विद्यते। प्रायः सर्वैर्नव्यनैयायिकैरे-कत्वादिपरार्धपर्यन्ता एव संख्याः स्वीकृताः। तर्कसङ्ग्रहस्यानेकैष्टीकाकारैः संख्याया अष्टादशप्रकाराः प्रतिपादिताः। तदनुसारेण—एकत्वदशत्वादय एव स्वतन्त्रसंख्या। अवान्तरसंख्यानां तन्मते स्वातन्त्र्यं नास्ति।

ब्रह्माण्डपुराणे संख्याया अष्टादशभेदा इत्थमुक्ताः—

एकं दशं शतञ्चैव सहस्रमयुतं तथा
लक्षञ्च नियुतञ्चैव कोटिमर्बुदमेव च।
वृन्दं खर्वो निखर्वश्च शङ्खः पद्मश्च सागरः
अन्त्यं मध्यं परार्धञ्च दशवृद्ध्या यथाक्रमम्[3]॥

परन्त्वेकत्वदशत्वादीनां स्वतन्त्रसंख्यात्वोपगमे युक्तेरभावान्मतमिदं मनीषिजनमनो-रञ्जनाय न प्रभवति।

**एकत्वसंख्या—**

एकत्वसंख्या द्विविधा—नित्याऽनित्या चेति। नित्यद्रव्येषु विद्यमाना तावदे-कत्वसंख्या नित्या। अनित्यद्रव्येषु विद्यमाना त्वेकत्वसंख्याऽनित्या। उभयविधाऽप्ये-कत्वसंख्या खल्वेकद्रव्यमात्रनिष्ठतया 'एकद्रव्या संख्या' इति शब्देनाप्युच्यते। इयं हि

१. सप्तपदार्थी—(संख्याविभागप्रकरणम्, ); २. पदार्थचन्द्रिका; ३. ब्रह्माण्डपुराणम्।

सर्वासां संख्यानामुत्पादिका, यथा—द्वाभ्यां कपालाभ्यामुत्पद्यमाने घट एकत्वस्योत्पत्तिः कपालगताभ्यामेकत्वाभ्यां जायते ।

कैश्चिद् एकत्वस्य रूपादिभिन्नत्वं नोपगम्यते । तन्मते तद् द्रव्यगतरूपादिरेवैकत्वत्वेन गृह्यते, परमिदं मतं वैशेषिकदर्शनस्य मूलभूतसूत्रविरोधादेव वैशेषिकमतत्वेन स्वीकर्त्तुमशक्यम् । तथाहि तत् सूत्रम्—"रूपरसगन्धस्पर्शव्यतिरेकादर्थान्तरमेकत्वम्"[1] । अयमाशयः—एकत्वप्रतीते रूपादिप्रतीतितो विलक्षणत्वेनानुभवात्, एकत्वं रूपादितो भिन्नम् । किञ्च, रूपादिशून्ये कालादावप्येकत्वस्य प्रयीयमानतया तस्य रूपादिव्यतिरिक्तत्वमावश्यकम् ।

एकत्वं द्रव्य इव गुणकर्मादावपि भासते । परं गुणकर्मादीनां निर्गुणत्वस्य[2] स्वीकारेण तत्रैकत्वसंख्या गुणात्मिका न स्वीकर्त्तुं शक्यते । यतो हि—नित्यैकत्वसंख्याया नित्यद्रव्यमात्रवृत्तितया रूपादौ तदभ्युपगमोऽसम्भवः । जन्यरूपादावप्यनित्यैकत्वसंख्या नाभ्युपगन्तुं शक्या । अवयवगतसंख्या रूपादेरसमवायिकारणादेवावयविनि संख्यारूपादेरुत्पद्यमानतया रूपादेरनवयवितया तत्र तदुत्पत्तेरसम्भवात् । अतो रूपादावेकत्वप्रतीतेर्भ्रमत्वमेवोचितम् । द्रव्ये गुणादौ चैकत्वप्रतीतीनां समानाकारतया गुणादौ तत्प्रतीतेर्भ्रमत्वाभ्युपगमे द्रव्येऽपि तत्प्रतीतेर्भ्रमत्वस्वीकारसम्भवेन, एकत्वस्य लोप एव स्यादिति तु न शङ्कनीयम्, एकत्वस्य क्वाप्यसत्त्वे तत्प्रतीतेर्भ्रमत्वस्यायौक्तिकत्वात् । एकत्र भ्रमस्य अन्यत्र प्रमायाः सत्त्व एव सम्भवात् । अत एवोक्तं महर्षिकणादेन—'**एकत्वाभावात् भक्तिस्तु न विद्यते**[3]" इति । अयमाशयः—यदि द्रव्येऽपि भावात्मकमेकत्वं न भविष्यति, तदाऽद्रव्येषु तस्य भाक्तः प्रत्ययो न सेद्धुमर्हति, भाक्तप्रत्ययस्य मुख्यप्रत्ययपूर्वकत्वनियमात् । अत एकत्वसंख्याया भावत्व-गुणत्व-द्रव्याश्रितत्वानामभ्युपगम एव न्याय्यः । प्रशस्तपादाचार्यदिशा जलादिपरमाणुषु रूपादीनां नित्यत्वमिव, एषु नित्येषु द्रव्यान्तरेषु च विद्यमानस्य एकत्वस्यापि नित्यत्वं भवति । फलतया पृथिव्यादिचतुर्द्रव्यपरमाणुषु, आकाशादिषु चतुर्षु विभुद्रव्येषु मनसि च नित्याया एकत्वसंख्याया अस्तित्वं प्रामाणिकम् । अनित्येषु द्रव्येषु च विद्यमाना तावदेकत्वसंख्याऽनित्यैव । सा हि स्वाश्रयद्रव्यस्याऽवयवगतैकत्वतो जायते, स्वाश्रयनाशान्नश्यति च ।

---

१. वैशेषिकसूत्रम्–७।२।१ ।

२. वैशेषिकसूत्रम्—७।२।४, ( निःसंख्यात्वात् कर्मगुणानां सर्वैकत्वं न विद्यते ) ।

३. वैशेषिकसूत्रम्—७।२।६ ।

**अपेक्षाबुद्धिः—**

अनेकेष्वेकत्वप्रकारिका या बुद्धिः, साऽपेक्षाबुद्धिः। एतदेवोक्तं विश्वनाथपञ्चाननभट्टाचार्येण—"अनेकैकत्वबुद्धिर्या सापेक्षाबुद्धिरिष्यते[1]" इति।

एषा बुद्धिर्द्रव्यगताभ्यामेकत्वाभ्यां द्रव्ययोर्द्वित्वोत्पादनार्थमपेक्षणीयतयाऽपेक्षाबुद्धिरित्युच्यते। एषा बुद्धिर्द्वित्वादीनां निमित्तकारणं भवति। असमवायिकारणं च तेषां तत्समानाधिकरणमेकत्वमेव।

सर्वदर्शनसङ्ग्रहेऽपेक्षाबुद्धिः प्रकारान्तरेण निरूपिता। यथा—"अपेक्षाबुद्धिर्नाम विनाशकविनाशप्रतियोगिनी बुद्धिरिति बोद्धव्यम्[2]"।

अयम्भावः—विनाशको यो विनाशस्तस्य प्रतियोगिभूता या बुद्धिः, साऽपेक्षाबुद्धिः। अपेक्षाबुद्धिनाशस्य द्वित्वादिनाशकतयाऽपेक्षाबुद्धेर्विनाशकप्रतियोगित्वमुपपद्यते।

अपेक्षाबुद्धिर्मुख्यतया द्विविधा—नित्याऽनित्या चेति। ईश्वरीयाऽपेक्षाबुद्धिर्नित्या। सा हि परमाणुषु द्वित्वोत्पादिका। तदुत्पाद्यस्य द्वित्वस्य नाशश्च तत्कारणीभूतस्य क्षणात्मककालस्य नाशाज्जायते। तज्जनकापेक्षाबुद्धेस्तदाश्रयपरमाणूनां च नित्यतया प्रकारान्तरेण तन्नाशासम्भवात्। अस्मादृशानां साधारणमानवानां योगिनां चापेक्षाबुद्धिरनित्या। सा ह्येकत्वज्ञानरूपनिमित्तम्, अनेकद्रव्यसन्निधानं चापेक्ष्य समुत्पद्यते, तन्नाशश्च द्वित्वप्रत्यक्षात् सञ्जायते।

द्विविधाप्यपेक्षाबुद्धिः स्वविषयभूतयोर्द्रव्ययोर्द्वित्वजन्मनि निमित्तभावं बिभर्ति। द्वित्वस्य लौकिकप्रत्यक्षानुरोधेन प्राचीननैयायिकैस्तस्याः क्षणत्रयावस्थायित्वं चतुर्थक्षणोत्पत्तिकध्वंसप्रतियोगित्वपर्यवसायि मन्यते। यत्र धारावाहिन्या अपेक्षाबुद्धेर्द्वित्वसंख्यायाः सन्तानो जायते, तत्रापेक्षाबुद्धेस्त्रिक्षणावस्थायित्वोपगमो निरर्थकः। प्रथमद्वित्वोत्पादिकायाः प्रथमापेक्षाबुद्धेस्तृतीयक्षणे नाशेऽपि तत्क्षणे, उत्पन्नाया द्वितीयापेक्षाबुद्धेर्बलेन प्रथमोत्पन्नद्वित्वप्रत्यक्षस्य सम्भवात्। एवमेवाग्रिमाणामपेक्षाबुद्धीनां द्वित्वानां च विषये बोद्धव्यमिति।

**अनेकत्वसंख्या—**

अनेकत्वसंख्या नाम—एकत्वभिन्ना संख्या। सा च द्वित्वादिकमारभ्य परार्धपर्यन्ता। श्रीमदुदयनाचार्येण किरणावलीग्रन्थे द्वित्वस्य विश्लेषणं विस्तरेण कृतम्। द्वित्वस्येव त्रित्वादेर्विषयेऽनुगतिः कार्या। "द्वित्वादिका" इति शब्दस्य द्वित्वमादिरस्या

---

१. कारिकावली, १०९ तमः श्लोकः।

२. सर्वदर्शनसङ्ग्रहः—औलूक्यदर्शने निवृत्तिक्रमनिरूपणम्।

इति विग्रहं वर्णयता किरणावलीकृता परार्धसंख्यानिरूपणसन्दर्भे परार्धमन्तो यस्या इत्येवं परार्धशब्दस्य व्युत्पत्तिः कृता। तथा चानित्यसंख्यासु सर्वतो लघीयसी संख्या द्वित्वम्, सर्वतो महती च संख्या परार्धमिति बोध्यम्।

**द्वित्वादिसंख्यानामुत्पत्तिः—**

द्वित्वादीनां सर्वासां जन्यसंख्यानामुत्पत्तिरपेक्षाबुद्धितो जायत इत्युक्तम्। अत्रायं प्रश्नो यद् एकविधयैवाऽपेक्षाबुद्ध्या द्वित्वत्रित्वादीनां नानाविधसंख्यानामुत्पत्तिः कथमवकल्पते। इयमपि जिज्ञासा सहजैका जायते यत् त्रित्वस्योत्पत्तिरेकत्वत्रयमवगाहिन्या "अयमेकः, अयमेकः, अयमेकः" इत्यपेक्षाबुद्धेर्जायते। अथवा द्वयोरेकत्वद्वयविषयिण्या अपेक्षाबुद्धेर्द्वित्वोत्पत्तेरनन्तरं द्वयोर्द्वित्वम्, तृतीये चैकत्वमवगाहमानायाः "इमौ द्वौ, अयमेकः" इति बुद्धेरेव जायते। त्रित्वोत्पत्तिसम्बद्धयोः पक्षयोरनयोः कैश्चित् कोविदैः प्रथमः पक्षः स्वीक्रियते। अन्यैश्च विपश्चिद्भिर्द्वितीयं पक्षमुपगम्य पूर्वपूर्वसंख्याया अप्युत्तरोत्तरसंख्याकारणत्वं मन्यते; किन्तु द्वितीयपक्षेऽपेक्षाबुद्धेराकारस्य भिन्नतया तस्यास्तस्या अनुगतं लक्षणं दुर्वचम्।

प्रथमपक्षस्य सामीचीन्योपगमेऽपेक्षाबुद्धितो द्वित्वोत्पत्तेः प्रक्रियाशास्त्रेषु सप्तक्षणसाध्यतया वर्णिता। तथाहि—प्रथमक्षण उत्पत्स्यमानस्य द्वित्वस्याऽऽश्रयीभविष्यद्भ्यां समानजातीयाभ्यामसमानजातीयाभ्यां वा द्रव्याभ्यां चक्षुःसंयोगात्मकश्चक्षुसन्निकर्षो जायते। तत्क्षण एव च तद्गताभ्यामेकत्वाभ्याम् एकत्वत्वेन च सह चक्षुःसंयुक्तसमवाय–चक्षुःसंयुक्तसमवेतसमवायरूपौ चक्षुःसन्निकर्षौ सम्पद्येते। द्वितीयक्षणे द्वयोर्द्रव्ययोस्तद्गतयोरेकत्वयोरेकत्वत्वस्य च प्रत्यक्षं जायते। तृतीयक्षणे 'अयमेकः, अयमेकः' इत्याकारिका समूहालम्बनरूपाऽपेक्षाबुद्धिर्जायते। चतुर्थक्षणे द्वित्वस्योत्पत्तिः, द्वितीयक्षणे जातस्य ज्ञानस्य नाशश्च भवति। पञ्चमक्षणे द्वित्वद्वित्वत्वयोर्निर्विकल्पकं प्रत्यक्षं जायते, षष्ठक्षणे द्वित्वस्य सविकल्पकप्रत्यक्षम्, तृतीयक्षणे जाताया अपेक्षाबुद्धेर्नाशश्च भवति। सप्तमक्षणे सन्निकृष्टद्रव्ययोर्द्वित्वस्य प्रत्यक्षं द्वित्वनाशश्च जायते। तदेवं सप्तसु क्षणेषु द्रव्ययोर्द्वित्वज्ञानस्योत्पत्तिः सम्मता। चतुर्थक्षण उत्पद्यमानं द्वित्वं प्रति तदव्यवहितपूर्वक्षण उत्पन्नापेक्षाबुद्धिर्निमित्तकारणम्। द्रव्यद्वयञ्च समवायिकारणम्। द्रव्यद्वयगतमेकत्वद्वयञ्चासमवायिकारणं भवति।

**द्वित्वज्ञाननाशः—**

षष्ठक्षणेऽपेक्षाबुद्धिनाशे सति सप्तमक्षणे द्वित्वस्य विनाशो भवतीत्युक्तम्। द्वित्वज्ञानस्य नाशः कदा कथं जायत इति प्रतिपादनमावश्यकम्। तदर्थमुक्तायां सप्तक्षण-

परम्परायामपरमपि क्षणद्वयम् अष्टमं नवमं च सन्निवेश्यम्। तथा चाष्टमे क्षणे सप्तमक्षणोत्पन्नाद् "इमे द्वे द्रव्ये" इत्याकारकज्ञानात् तत्समानाकारः संस्कारः, षष्ठक्षण उत्पन्नस्य द्वित्वज्ञानस्य च नाशो जायते। नवमक्षणेऽष्टमक्षणोत्पन्नात् संस्कारात् "इमे द्वे द्रव्ये" इत्याकारकज्ञानस्य नाशो जायते। इत्थं द्रव्ययोर्द्वित्वप्रत्यक्षानुगुणायाः प्रक्रियायाः प्रारम्भक्षणादारभ्य नवमक्षणे द्वित्वविशिष्टद्रव्यज्ञाननाशात् पूर्तिर्भवति। तदेवं चतुर्थक्षणे द्वित्वोत्पत्तिमारभ्य सप्तमे क्षणे द्वित्वस्य नाशं द्वित्वविशिष्टद्रव्यप्रत्यक्षं च यावद्द्वित्वसम्बद्धानि चत्वारि मुख्यकार्याणि सम्पद्यन्ते। उक्तप्रक्रियायामुत्पत्तिमन्तः पदार्था यथाक्रमेण परान् पदार्थान् जनयन्ति, तथैव परपदार्थानां विनाशमप्युद्भावयन्ति। यथा—अपेक्षाबुद्धित एकत्वत्वसामान्यज्ञानस्य नाशः, द्वित्वत्वसामान्यज्ञानतोऽपेक्षाबुद्धेर्नाशः। द्वित्वसविकल्पकप्रत्यक्षतो द्वित्वसामान्यज्ञानस्य नाशः, अपेक्षाबुद्धेर्नाशाद् द्वित्वस्य नाशः। द्रव्ययोर्द्वित्वप्रत्यक्षाद् द्वित्वसविकल्पकप्रत्यक्षस्य नाशः। द्वित्वप्रत्यक्षोत्पन्नसंस्काराद् द्रव्ययोर्द्वित्वप्रत्यक्षस्य नाशः स्थितिविशेषे द्वित्वनाशोऽपेक्षाबुद्धिनाशतोऽनुत्पद्य द्वित्वाश्रयभूतस्य द्रव्यस्य नाशात्, कदाचिच्चापेक्षाबुद्धेर्द्वित्वाश्रयभूतद्रव्यस्य च नाशाभ्यां जायते। आश्रयनाशादपि द्वित्वनाशो भवति—यदा द्वित्वाश्रयद्रव्यस्य नाशप्रयोजककर्मणस्तदवयव उत्पत्तिकाल एव एकत्वसामान्यज्ञानं जायते, तदाऽऽश्रयनाशाद् द्वित्वनाशो भवतीत्यलमतिविस्तरेण।



# त्वादिभावप्रत्ययार्थविचारः

डॉ० नरेन्द्रनाथपाण्डेयः

प्राध्यापकः, वेदान्तविभागे

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

वाराणसी

❀❀❀

'तस्य भावस्त्वतलौ' (पा० सू० ५।१।११९) इति पाणिनिसूत्रेण भावार्थे त्वतल्-प्रत्ययौ विहितौ। एतस्य च भावशब्दस्य[1] संशयजनकत्वात् तन्निर्णयार्थं वार्त्तिकं प्रवृत्तम्—'सिद्धं तु यस्य गुणस्य भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलौ' इति। यद्यत्र वैशेषिकादितन्त्रप्रसिद्धस्य द्रव्यस्य द्रव्यशब्देन ग्रहणं स्यात्, तदा रूपत्वमित्यत्र त्वप्रत्ययानुत्पत्तिस्तस्य गुणवाचकत्वात्। अतो भावशब्देन लिङ्गसंख्यादिविशेष्यभूतः सत्त्वभावापन्नोऽर्थ उच्यते[2]। तदुक्तं हरिणा वाक्यपदीये ( भूयोद्रव्यसमु० का० ३ )—

> वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते।
> द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः॥ इति।

अत्र 'भेद्यत्वेन विवक्षितः' इति द्रव्यलक्षणम्। अस्यार्थः—सामान्यादिभिर्व्यावर्तक-धर्मैर्विशेष्यत्वेन वक्तुमभिप्रेतं द्रव्यम्। विवक्षितग्रहणेन चेदं लक्षणं न वस्तुभूतस्य बहि-स्थस्य द्रव्यस्य; किन्तु शब्दार्थस्येति गम्यते। शब्दार्थश्चात्र बौद्धोऽसद्रूपो विकल्पगोचरः। अतो बौद्धस्यासद्रूपस्य विकल्पगोचरस्य द्रव्यस्य लक्षणमिदमिति गम्यते। तथा च जात्यादेरपि विशेष्यत्वेन विवक्षायां भवति द्रव्यत्वम्। बौद्धपदार्थाङ्गीकाराच्च गुणस्य भावाद्—विद्यमानत्वादित्यत्र बुद्धावित्यादिरिति व्याख्यातं नागेशभट्टैः।

गुणशब्देन चात्र यावान् कश्चित् पराश्रयो भेदको जात्यादिरर्थः, स सर्व इह गृह्यत इति कैय्यटः, न तु नैयायिकादिसम्मतगुणस्य ग्रहणम्, अन्यथा घटत्वमित्यत्र त्वप्रत्ययानुत्पत्तिः। तत्र घटत्वजातिसद्भावाद् घटशब्दो वात्रकतया प्रवर्तते।

---

१. भावशब्दोऽयमस्त्यभिप्रायवाची। यथा—'अयम्भावः' इति द्रव्यमात्रेऽपि 'विचित्रा भाव-शक्तयः'। अस्ति शृङ्गारादिस्थायिसञ्चारिषु स्थायीभावः सञ्चारीभावः। धात्वर्थवचनः प्रवृत्तिनिमित्तवाची च। ( उद्द्योतः ५।१।११९ )।

२. प्रदीपः ( पा० सू० ५।१।११९ )।

गुणलक्षणं चोक्तं हरिणा—

संसर्गिभेदकं यद्यत् सव्यापारं प्रतीयते।
गुणत्वं परतन्त्रत्वात् तस्य शास्त्रे उदाहृतम्[1]॥

संसर्गिभेदकं सव्यापारं च यद् वस्तु, तस्य गुणत्वं परतन्त्रत्वाच्छास्त्र उदाहृतम् इति।

संसर्गोऽस्यास्तीति संसर्गि, स्वाधारेण संसृष्टम्, रूपसम्भेदेन स्वरूपाभेदेन वर्तमानम्, न तु सम्बन्धसामान्येन। आधारसंसर्गित्वादेव गुणः स्वाधारमाश्रयान्तराद् व्यावर्तयति। भेदकम् = स्वाधारस्य द्रव्यान्तराद् व्यवच्छेदकम्; सव्यापारम् = व्यावर्तकत्वरूपवर्तमानकालिकव्यापारवत्। एवं कैय्यटोक्तलक्षणमेव समर्थितं भवति।

तथा चायं निष्कर्षः—यथा शुक्लादिगुणः 'शुक्लोऽयं न नीलः' इत्यादौ स्वाधारमाश्रयान्तराद् व्यावर्तयति, तथैव 'गौरयं नाश्वो न गर्दभः' इत्याधारान्तरावच्छेदकत्वाद् गोत्वमपि गुणो भवति। अनेन च लक्षणेनेदं सिद्धं भवति—जातिगुणद्रव्यलक्षणार्थाभिधायिभ्यो गवादिशब्देभ्यो भावप्रत्यया भवन्ति। शब्दस्वरूपगुणसामान्यादिषु वाच्येष्विति। स्पष्टं चेदं यद्वा सर्वे भावाः स्वेन भावेन भवन्ति, स तेषां भावस्तदभिधाने इति वार्त्तिकव्याख्यानावसरे[2]। एतस्य च वार्त्तिकस्यायमर्थः— सर्वे शब्दाः स्वेन वाच्येन करणेन यस्मात् प्रवृत्तिनिमित्ताद् भवन्ति। वाच्यार्थबोधनाय प्रयोगं प्राप्नुवन्ति स प्रवृत्तिनिमित्तरूपोऽर्थस्तेषां शब्दानां भावः। अतस्तदभिधानेऽर्थाच्छब्दपरेभ्यः प्रत्ययः। अर्थंप्रत्यायनाय शब्दप्रयोगाद् भवति शब्दस्य करणत्वम्। एतद् भाष्यवार्त्तिकद्वयव्याख्यानेन चेदं सिद्धं भवति यज्जाति-गुण-द्रव्य-लक्षणार्थाभिधायिभ्यो गवादिशब्देभ्यः शब्दपरेभ्यश्च तेभ्यः शब्दस्वरूपगुणसामान्यादिषु वाच्येषु भवति भावप्रत्ययः। यदृच्छाशब्देभ्यो विहितभावप्रत्ययार्थविचारावसरे भवति द्वितीयपक्षस्याऽऽवश्यकता। अतस्तन्मूलं भाष्यवचनमुक्तम्।

इदानीं[3] 'चतुष्टयी शब्दानां प्रवृत्तिः—जातिशब्दाः, गुणशब्दाः, क्रियाशब्दाः, यदृच्छाशब्दा इति भाष्यानुसारेण चतुर्विधशब्देभ्यो विहितभावप्रत्ययानामर्थाः 'यस्य गुणस्य भावात्' इति लक्षणमनुसृत्य विविच्यन्ते।

---

१. वाक्यपदीयगुणसमुद्देशे, का० १।

२. म० भा० ५।४।११९।

३. ॠलृक् ( पा० सू० २ ) इत्यत्र भाष्यम्।

जातिशब्दा जातिप्रवृत्तिनिमित्तकाः शब्दा गोघटादयः[1]। गुणमात्रवृत्तयश्च शुक्लादयः। एभ्यो गवादिसमवायिनि सामान्ये भावप्रत्ययः। रूपादिशब्देभ्यश्च गुणवाचिभ्यः सामान्ये भावप्रत्ययः। अत्र सामान्यं गवादीन् द्रव्यान्तरेभ्यो व्यावर्तयद् भवति गुणो भेद्यत्वेन विवक्षितश्च गवादिर्द्रव्यमिति गुणद्रव्यलक्षणयोश्च संगतिः। 'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्' ( पा० सू० १।२।५८ ) इति सूत्रप्रामाण्याद् गवादिशब्दा यदा जातिमात्रवचनास्तदा तेभ्यः शब्दस्वरूपे प्रत्ययः। तदुक्तं हेलाराजेन[1]—'गोशब्दस्य जात्यवच्छिन्नद्रव्यवाचित्वे जातौ गोत्वमिति जातिमात्रवचनत्वे तु शब्दस्वरूपेऽव्यभिचारिणि प्रवृत्तिनिमित्ते'। अत्र अम्बाकर्त्री—'तस्य जातिमात्रवचनत्वपक्षे तु वाच्यवाचकभावसम्बन्धमूलकेनाध्यस्यमानतादात्म्यसम्बन्धेन सर्वत्र जातिरूपशब्दार्थविशेषणीभूते। अत एवाव्यभिचारिणि प्रवृत्तिनिमित्ते शब्दरूपे गोत्वमिति भावप्रत्ययः। तथा च गोशब्दस्य जातिमात्रपरत्वे गोत्वमित्यस्य गोशब्दोऽर्थः।

ननु गोशब्दस्य जातिमात्रपरत्वे तस्य विशेष्यत्वेऽपि कथं शब्दस्य विशेषणत्वमिति चेत्, प्रवृत्तिनिमित्ताश्रये जातौ शब्दस्य स्वरूपनादात्म्याध्यासेन जातिरूपमर्थं प्रत्यायतः शब्दस्य स्वरूपं गुणप्रवृत्तिनिमित्तम्। जातिरूपार्थे शब्दस्वरूपाध्यासेनैव जातिरूपार्थस्य प्रतीतिः।

ननु शब्दस्य प्रवृत्तिनिमित्तत्वे वाचकस्य तस्य कथं तेन रूपेण वाच्यत्वमिति चेद् वाचकावाचकसाधारणस्य प्रयोगगतस्य तस्य वाच्यत्वम्, अभिधाव्यापारविशिष्टस्य च वाचकत्वमिति भेदः।

गुणप्रवृत्तिनिमित्तकाः शब्दा गुणशब्दाः—यथा गुणिवाचकाः शुक्लादयः। ये तु शुक्लादयो गुणगुणिवृत्तयो गुणगुणिनोरभेदोपचारान्मतुब्लोपाद् वा तेभ्यो गुणिवृत्तिभ्यो गुणे प्रत्ययः। 'शुक्लत्वम्' इत्यस्य शुक्लो गुणोऽर्थः। शुक्लादिशब्दानां गवादिशब्दवद् गुणगतजातिमात्रपरत्वे तु पूर्ववद् शब्दस्वरूपे प्रत्ययः। तेषां गुणपरत्वे तु जातौ प्रत्ययः पूर्वमुक्तः।

क्रियाशब्दास्तु—क्रियासम्बन्धप्रवृत्तिनिमित्तकाःशब्दाः। यथा—पाचक-पाठकादिशब्दाः। इमे शब्दाः कृदन्ताः। कृत्तद्धितसमासेभ्यश्च सम्बन्धाभिधानं भवति भावप्रत्ययेनेति सिद्धान्तः। तदुक्तम्—'समासकृत्तद्धितेषु सम्बन्धाभिधानमन्यत्र रूढ्यभिन्नरूपाव्यभिचरितशब्देभ्यः'। समासकृत्तद्धितास्तु यद्यपि केवलं सम्बन्धं नाभिदधति, तथापि सम्बन्धिनि वर्तमानाः सम्बन्धं प्रवृत्तिनिमित्तमपेक्षन्त इति तेभ्यः सम्बन्धे भाव-

---

१. वाक्यप० गुणसमु०, कारिका-१।

प्रत्ययः। तथा च पाचकत्वमित्यत्र क्रियाकारकसम्बन्धः कर्तृत्वादिरूपस्त्वप्रत्ययार्थः। 'राजपुरुषत्वम्' इत्यत्र स्वस्वामिभावः प्रत्ययार्थः। 'औपगवत्वम्' इत्यपत्यापत्यवत्सम्बन्धः। न चैषा क्रिया प्रवृत्तिनिमित्तकत्वव्यवहारानापत्ति । क्रियासम्बन्धप्रवृत्तिनिमित्तकमिति तदर्थात्। क्रियापदं च सम्बन्धप्रवृत्तिनिमित्तकशब्दमात्रोपलक्षणम्। तेन चतुष्टयी शब्दानां प्रवृत्तिरित्यस्य न हानिः।

रूढिशब्दाः सप्तपर्णलोहितशाल्यादयो जातिविशेषावच्छिन्नद्रव्यवाचिन इति तेभ्यो जातावेव भावप्रत्ययः। एवं कुम्भकारत्वं हस्तित्वमित्यादावपि जातिविशेषस्यैव वाच्यत्वम्, न तु कुम्भक्रिययोः कर्मत्वरूपः सम्बन्धो हस्ततद्वतोः सम्बन्धो वा तत्र वाच्यः।

अभिन्नरूपाः शब्दाः शुक्लादयो मतुब्लुकि विज्ञायमाने यद्यपि तद्धितान्ताः, तथापि तेभ्यो भावप्रत्ययो गुण एव भवति, न सम्बन्धे ।

अव्यभिचरितसम्बन्धात् सतो भावः सत्तेति जातावेव भावप्रत्ययः। सत्तासतोः समवायरूपस्य सम्बन्धस्याव्यभिचाराद् अविशेषणत्वे जातिरेव भावप्रत्ययवाच्या। तदुक्तं कैय्यटेन—'तस्मात् सर्वेषु सत्सु पदार्थेषु नित्यसमवायिनी शब्दप्रवृत्तिहेतुः सत्तैव भावप्रत्ययवाच्या, न तु सत्सत्तयोः सम्बन्धः समवायाख्यः'[1]। घटत्वादिपदैः सत्तैवोच्यते भावसमवायिनी।

यदृच्छाशब्दा डित्थडवित्थादयः। अर्थगतं प्रवृत्तिनिमित्तमनपेक्ष्य यः शब्दः प्रयोक्त्रभिप्रायेणैव प्रवर्तते, स यदृच्छाशब्दो डित्थादिः। एवं च स्वेच्छया व्यक्तौ संकेत्यमानः शब्दो यदृच्छाशब्दः। ननु शक्तिग्रहार्थं प्रकारताविशेष्यतयोरुभयोरपेक्षितत्वाद् अत्र गुणक्रियाद्यभावात् कथं संकेतग्रह इति चेदत्र शक्यस्यैवार्थस्य विषयताद्वयेन मानम्। अतस्तदुत्तरस्य त्वप्रत्ययस्य प्रकारत्वावच्छिन्नः स एवार्थः। अथवा शब्दपराद् डित्थशब्दाद् वाच्येऽर्थे एव त्वादिप्रत्ययः। शब्दस्वरूपमर्थेऽध्यस्य 'अयं डित्थः' इति संज्ञासंज्ञिसम्बन्धः क्रियते। ततः शब्दस्वरूपासङ्गाद् यथा डित्थशब्दस्यार्थे प्रयोगः, तथैव शब्दस्वरूपेऽर्थेऽध्यस्ते प्रत्ययः।

अयम्भावः—शब्दस्य योऽर्थो वाच्यप्रवृत्तिनिमित्तान्यतररूपस्तद्वाचकत्वं त्वप्रत्ययस्य। 'घटत्वम्' इत्यादौ जात्यादिरूपं प्रवृत्तिनिमित्तं त्वप्रत्ययार्थः। डित्थत्वमित्यादौ त्वन्यस्य प्रवृत्तिनिमित्तस्याभावाद् विशेष्यभूतोऽर्थ एव त्वार्थः।एवञ्च, डित्थडित्थत्वशब्दयोः पर्यायिता। अयञ्च काथञ्चित्कः प्रयोग इति भाष्य एवोक्तम्। ईदृशस्थल एव त्वप्रत्ययस्य

१. म० भा० प्रदीपः—५।१।११९।

साधुत्वाय प्रकृतिः शब्दपरा कल्प्यते। एवञ्च, कुत्वमित्यस्य कवर्ग इत्यर्थः। अन्यथा 'कु' इत्यस्य कवर्गपरत्वे तस्मात् त्वप्रत्ययस्य कत्वादिरर्थः स्यात्, ततश्च 'कुत्वं कस्मान्न भवति'[1] इत्यादिवृद्धिसंज्ञासूत्रस्थभाष्यवाक्ये कुत्वशब्दस्यार्थे कुशब्देऽप्राप्ते तदर्थं कत्वाद्याश्रये लक्षणाऽङ्गीकरणीया भवति। अतो डित्थादावर्थस्यासम्भवे त्वन्यत्रार्थपराया प्रकृतेः शब्दबोध्यप्रवृत्तिनिमित्ते प्रत्ययः। अत एव भाष्ये मार्गद्वयं दर्शितम्।

ननु जातिशब्दाः क्रियाशब्दा यदृच्छाशब्दा इति शब्दस्य चतुर्विधं विभागं स्त्रीकृत्य तेभ्यो भावप्रत्ययस्य विचारः प्रस्तुतः, किन्त्वशक्तिजानुकरणानां ऌतकादीनां क्वान्तर्भाव इति विचारणीयम्। अन्यथा तेभ्यो भावप्रत्ययार्थविचारः प्रस्तोतव्यः। ऋऌक्सूत्रभाष्ये कैय्यटः 'अशक्तिजानुकरणस्य जातिशब्दत्वमिच्छन्ति। यस्मादनुक्रियमाणे शब्दे या जातिः समवेता तत्सम्बद्धमनुकार्यमनुकरणं प्रत्याययति' इति।

अथवा नागेशभट्टमतानुसारेण ऌतकादयोऽपि यदृच्छाशब्दाः, वक्त्रा शब्दपरतया प्रयोगात्। उभयथाप्यशक्तिजानुकरणस्य चतुर्विधशब्देष्वेवान्तर्भावान्नास्ति पृथग् विचारस्यावश्यकता। षत्वं णत्वमित्यादौ तु प्रत्युच्चारणं शब्दा भिद्यन्त इति स्वीकृत्य जातौ त्वप्रत्ययः।

ननूपर्युक्तं गुणलक्षणं व्याकरणे सर्वत्रास्वीकृत्य कथं 'सत्त्वे निविशतेऽपैति'इत्यादिना लक्षणान्तरमपि स्वीकृतम्। अयं संसर्ग्यादिलक्षणो गुणः 'वोतो गुणवचनात्' (पा० सू० ४।१।४४) इत्यादौ न ग्रहीतुं शक्यते। तत्र तु 'गुणमुक्तवान्, गुणवचनो न तु गुणं वक्ति' इति व्युत्पत्या गुणोपसर्जनद्रव्यवाचिभ्यः पट्वादिभ्यः प्रत्ययः। अत एव 'सत्वे निविशते' इत्यादिना लक्षणान्तरमुक्तं भाष्ये 'वोतो गुणवचनात्' इति सूत्रे। वार्त्तिककारेण च ( वा० पा० १।४।१ ) 'अर्थवत् प्रातिपदिकं गुणवचनं च' इति वदता सर्वस्य गुणस्य न ग्रहणम्।

नन्वव्ययेभ्यः सह, नाना, युगपदित्यादिभ्यस्त्वादिप्रत्यये नानात्वम्, सहत्वम्, यौगपद्यम् इत्यादिरूपाणि सिद्ध्यन्ति। एषाञ्च न जातिगुणक्रियादिप्रवृत्तिनिमित्तकशब्देष्वन्तर्भावः। यदृच्छाशब्दत्वं चैषां न भवति, नियतार्थे प्रयोगदर्शनात्। एवं तर्हि चतुष्टयी शब्दानां प्रवृत्तिरिति कथनं कथं संगच्छेत ? इति विचारे प्रथममिदमवधेयम्—शब्दानां चतुर्विधत्वपक्षे यदृच्छांशब्दा अव्युत्पन्ना भवन्ति। यदि त्रैविध्यपक्षः स्वीक्रियते, तदा सर्वे व्युत्पन्नाः व्युत्पत्तौ च जातिगुणक्रियाद्यन्यतमस्य भवति प्रवृत्तिनिमित्तत्वम्। अव्ययाश्चाप्यव्युत्पन्नाः। अतश्चतुर्थी विधाऽव्युत्पन्नशब्दानां स्वीकृत्य तत्रैवैषामन्तर्भावः कर्तुं

---

१. म० भा० ( पा० सू० १।१।१ )।

शक्यते। नानाशब्दोऽसहभूते, सहशब्दः सहभूते, युगपच्छब्दश्च सहभूते वृत्तौ वर्तते। अतोऽसहभावादौ प्रत्यय इति ध्येयम्।

भट्टोजिदीक्षितेन कौमुद्यां 'प्रकृतिजन्यबोधे प्रकारो भावः' इति भावपदार्थस्य निर्वचनं कृतम्। इदञ्च 'यस्य गुणस्य भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलौ' इत्यस्यैव शब्दान्तरेण प्रस्तुतिः। बोधे प्रकारः प्रवृत्तिनिमित्तमेव भवति। अतः प्रवृत्तिनिमित्तमेव त्वप्रत्ययार्थः। प्रवृत्तिनिमित्तं च शब्दस्वरूपगुणसामान्यादिरूपं भवतीति ज्ञेयम्।



# तन्त्रागमदृष्ट्या शक्तिपातस्वरूपनिरूपणम्

**डॉ० राजनाथत्रिपाठी**

**प्राध्यापकः, सांख्ययोगतन्त्रागमविभागस्य**

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

वाराणसी

❀❀❀

शक्त्यर्थकाद् शक् (शक्लृ) धातोः क्तिन्प्रत्यये शक्तिशब्दो निष्पद्यते। सा च शक्तिस्त्रिधा, पञ्चधा, अष्टधा, नवधा, कुलशक्तिभेदैर्भिन्ना भिन्ना भवति। एवं हि 'पत्लृ-पतने' इति धातोर्घञि प्रत्यये पतनमिति[1] व्युत्पत्त्या पातशब्दो निष्पद्यते। तथा च शक्तेर्निपतनमेव शक्तिपातपदेन बोध्यो भवति।

अथ कोऽयमनुग्रहशक्त्यपराभिधेयः शक्तिपातो नाम? अत्र खेटपालदेशिकप्रभृतयः 'अणूनां या स्वसंविदभिव्यक्तिस्तन्निरोधिनी या मलसम्बन्धिनी शक्तिस्तस्याः स्वव्यापारौदासीन्यरूपं यन्माध्यस्थ्यं स एव मलपरिपाकस्तद्धेतुको यः शिवरश्मिस्पर्शः, स एव शक्तिपातः, इत्याहुः। तदुक्तं तन्त्रालोके—

> तस्य रोद्ध्री यदा शक्तिरुदास्ते शिवरश्मिभिः।
> तदाणुः स्पृश्यते स्पृष्टः स्वके ज्ञानक्रिये स्फुटे॥
> समाविशेदयं सूर्यकान्तोऽर्केणेव चोदितः।
> रोद्ध्र्याश्च शक्तेर्माध्यस्थ्यतारतम्यवशक्रमात्॥
> विचित्रत्वमतः प्राहुरभिव्यक्तौ स्वसंविदः।
> स एष शक्तिपाताख्यः शास्त्रेषु परिभाष्यते[2]॥ इति।

तत्रैवैतत्कारिकात्रयं महामाहेश्वराचार्यजयरथेन व्याख्यातम्। तथा हि—नन्वेवंविधं मलं चेन्नित्यमणुभिर्वा नित्यमेव सम्बद्धम्, तन्न कदाचिदपि संसारः शाम्येदित्यनिर्मोक्ष एव प्रसज्येदित्याशङ्क्याह—**तस्य रोद्ध्रीति**।

---

१. अनुग्रहो द्विविधः, निरधिष्ठानुग्रहसाधिष्ठानुग्रहभेदात्। सृष्ट्यादौ प्रलयकाले च शिवो देहरहितान् विज्ञानाकलप्रलयाकलादीनेवानुगृह्णाति, स्थितौ तु न स्वयमपि तु केनापि मध्यस्थे नैवानुगृह्णाति। निष्कलो शिवः निष्कलानेव जीवान् साक्षादनुगृह्णातीति विशेषः।

२. तन्त्रालोके— ( १३ आ०, ५०-५१-५२ )।

'उदास्ते' इति स्वस्मान्निरोधाख्याद् व्यापारान्निवर्तत इत्यर्थः। 'स्पृश्यते' इति शिवशक्तिपातभाग् भवेदित्यर्थः। तेन यथार्करश्मिस्पृष्टः सूर्यकान्तः स्वकामभिज्वलन-लक्षणां क्रियां समाविशेत्, तथाऽयमपि शिवशक्तिपातपूतः स्वके पूर्णे ज्ञानक्रिये, समभि-व्यक्तस्वसंविद्विभवो भवेदित्यर्थः।

ननु यद्येवं तत् कथं शुद्धात्मनामपि पूर्णनिजज्ञानक्रियासमावेशाविशेषात् स्वरूपाभिव्यक्तावन्योन्यस्य वैचित्र्यं स्यादित्याशङ्क्याह—**रोद्धृश्चाश्चेति**। अतः शिव-रश्मिस्पर्शाद्धेतोरणूनां या स्वसंविदभिव्यक्तिस्तस्यां वैचित्र्ये मलसंबन्धिन्या एव रोद्ध्र्याः शक्तेः स्वव्यापारौदासीन्यात्मनो माध्यस्थ्यस्य यत् तारतम्यं परात्परमतिशयस्तत्प्रयुक्तः क्रमो निमित्तं येनात्मनां शुद्धत्वेऽप्यन्योन्यस्य विशेषः। अत उक्तम्—

परिपक्वमला ये तानुत्सादितशक्तिपातेन।
यो जयति परे तत्त्वे दीक्षया गुरुर्मूर्तिगः॥
यः स्वतन्त्रः प्रकाशात्मा शिवः संच्छाद्य स्वयं वपुः।
क्रीडयाऽनुप्रकटयत्यस्मै मे सततं नमः॥ इत्यादि।

तत्रैवं खेटपालाद्याचार्यसंमतः शक्तिपातो मलकर्माद्यपेक्षः। एतच्च मतं दूषयित्वाऽ-भिनवगुप्तपादैः—

कुलजातिवपुष्कर्मवयोऽनुष्ठानसंपदः।
अनपेक्ष्य शिवे भक्तिः शक्तिपातोऽफलार्थिनाम्।
या फलार्थितया भक्तिः सा कर्माद्यमपेक्षते॥
ततोऽत्र स्यात् फले भेदो नापवर्गे त्वसौ तथा[1]॥

इत्युक्तम्। तत्रैवं व्याख्यातं जयरथेन—एतन्मते च शिवे भक्तिरेव शक्तिपात इति लिङ्गलिङ्गिनोरभेदोपचारात्। भक्तिर्हि नामास्य प्राथमिकं चिह्नम्। उक्तं **चैतन्मालिनीविजयतन्त्रे**—'तत्रैतत् प्रथमं चिह्नं रुद्रे भक्तिः सुनिश्चला' इति।

शक्तिपातरूपे चानुग्रहे कर्तव्ये परमेश्वरस्यैव कर्ममलाद्यनपेक्षं कर्तृत्वम्, तस्य सर्वत्र स्वातन्त्र्यात्। तदुक्तं तत्रैव—

तेन शुद्धः स्वप्रकाशः शिव एवात्र कारणम्॥
स च स्वाच्छन्द्यमात्रेण तारतम्यप्रकाशकः[2]॥ इति।

अत्रायं विवेकः—कर्मादीनां शक्तिपाताधिकारप्राप्तावेवोपयोगः, न तु शक्तिपाते। अधिकारप्राप्तौ तु सत्यां भगवान् स्वतन्त्र एव शक्तिपातं करोति, स चान्यानपेक्ष इति।

---

१. तन्त्रालोके—(१३ आ०, ११७,११८,११९); २. तन्त्रालोके, (१३—१६½, १७½)।

तन्त्रसारेऽपि—स्वातन्त्र्यमात्रसारश्चासौ परमशिवः शक्तेः पातयितेति निरपेक्ष एव शक्तिपातो यः स्वरूपप्रथाफल इति[1]।

एवं हि फलभेदेन शक्तिपातश्चतुर्धा भवति। तत्राद्यः स्वरूपप्रथाफलः कर्मनिरपेक्षः, द्वितीयस्तु—भोगोत्सुकस्य भोगफलः कर्मापेक्षः, तृतीयस्तु—लोकोत्तररूपभोगोत्सुकस्य परमेश्वरस्येच्छाप्रेरितमायाकर्माधिकारीयरुद्रविष्णुब्रह्मादिभावप्राप्तिद्वारेण मन्त्रमन्त्रेश्वरमन्त्रमहेश्वरादिरूपत्वमायापुंविवेकपुंस्कलाविवेकपुंप्रकृतिविवेकपुंबुद्धिविवेकादिफलस्तदधरत्वभोगप्रतिबन्धफलश्च कर्मनिरपेक्षः। चतुर्थस्तु-भोगमोक्षोभयफलस्तदुभयोत्सुकस्य भोगे कर्मापेक्षः, मोक्षे तु तन्निरपेक्ष इति सापेक्षनिरपेक्षः। एतदपि तदग्रे प्रोक्तम्—'यस्तु भोगोत्सुकस्य सः कर्मापेक्षः, लोकोत्तररूपभोगोत्सुकस्य तु स एव शक्तिपातः परमेश्वरेच्छाप्रेरितमायागर्भाधिकारीयरुद्रविष्णुब्रह्मादिद्वारेण, मन्त्रादिरूपत्वम्, मायापुंविवेकम्, पुंस्कलाविवेकम्, पुंप्रकृतिविवेकम्, पुंबुद्धिविवेकमन्यच्च फलं प्रस्नुवानस्तदधरत्वभोगं प्रतिबध्नाति, भोगमोक्षोभयोत्सुकस्य भोगे कर्मापेक्षः, मोक्षे तु तन्निरपेक्ष इति सापेक्षनिरपेक्ष इति।

एवं हि सकलावस्थो जीवो बद्धोऽहमिति विज्ञाय बन्धमोक्षाय चेष्टते, तादृशं चेष्टमानं पशुमाश्रित्य मृगेन्द्रागमे उक्तम्—

> तमः शक्त्यधिकारस्य निवृत्तेस्तत्परिच्युतौ।
> व्यनक्ति दृक्क्रियानन्त्यं जगद् बन्धुरणोः शिवः[2] ॥ इति।

अनेन विधिना सकलावस्थं पशुं शिवोऽनुगृह्णाति। एवमेव महाभारतेऽपि शक्तिपातो भगवदनुग्रहेणैव भवतीत्युक्तम्[3]। मृगेन्द्रागमश्लोकस्यायमभिप्रायः—तमश्च शक्तिश्च तमःशक्ती, तयोरधिकारः। तमसो मलस्य शक्तेः, भगवत्सम्बन्धिन्यास्तिरोधानशक्तेश्च योऽधिकारस्तस्य निवृत्तेस्तत्परिच्युतौ कैवल्याभिमुखो भवति पशुः। तस्यामवस्थायां जगदुद्धरणक्षमः शिव आत्मनो दृक्क्रिययोरानन्त्यं परिपूर्णत्वं व्यनक्ति। सत्योरेवानन्तयोर्दृक्क्रिययोर्मलावच्छिन्नत्वादावृतानन्त्ययोर्मलपरिपाकेणावरणापगमादभिव्यक्तिः क्रियते, नत्वपूर्वतया उत्पाद इति भावः। एतेन कर्मनाशे मलपरिपाके च सति भगवतोऽनुग्राहिका शक्तिः पशुषु पततीत्युक्तं भवति। तदुक्तं पौष्करसहितायामपि—

---

१. तन्त्रसारे ( ११, पृ० ११८ )

२. मृगेन्द्रागमे, विद्यापादे ( ५, १ )।

३. जायमानं हि पुरुषं यं पश्येन्मधुसूदनः।
सात्त्विकस्तु स विज्ञेयो भवेन्मोक्षे च निश्चितः॥ ( महाभा० शान्ति० ३४८।७३ )

कर्मनाशान्मलस्यापि विपाके सहकारिणी।
पतत्युन्मीलिनी शक्तिस्तदाऽनुग्रहरूपिणी॥ इति।

श्रीकण्ठसंहितायां चायमेव विषयः—

यया विना न सर्वज्ञः शिवः सा शक्तिरैश्वरी।
या सा शिवप्रयुक्ता तु पशूनां मोक्षयेत् ततः॥
पतेद् दीक्षानुसन्धाने.................................॥

इत्यादिरूपेण निरूपितः।

स चायं शक्तिपातस्तीव्रमध्यममन्दभेदेन त्रिविधः सन्नपि प्रकारान्तरेण नवधा सम्पद्यते। तस्य त्रैविध्यमापन्नस्य प्रत्येकमुत्कर्षमाध्यस्थ्यनिकर्षैः पुनस्त्रैविध्यात्। नवधा च स यथा—तीव्रतीव्रः मध्यतीव्रः, मन्दतीव्र इति; तीव्रमध्यः, मध्यमध्यः, मन्दमध्य इति; तीव्रमन्दः, मध्यमन्दः, मन्दमन्द इति भेदात्। तत्र तीव्रतीव्राच्छक्तिपातात् तदैव देहपाते परमेश्वरप्राप्तिरूपं फलं जायते। मध्यतीव्राच्छास्त्राचार्यानपेक्षिणः पुरुषस्य स्वस्मिन् प्रत्ययवतः प्रातिभज्ञानोदयरूपं फलम्। यदुदये बाह्यं दीक्षादिप्रयुक्तं शिष्यसंस्कारं विनैव भोगापवर्गप्रदः प्रातिभो गुरुरित्युच्यते। सत्यपि तस्य प्रातिभत्वे स्वोपदेशसंवादाय शास्त्राद्यपेक्षा स्यादिति प्रातिभस्याचार्यस्य निर्भित्तिसभित्त्यादिबहुभेदत्वमागमेषूक्तम्। मन्दतीव्राच्छक्तिपातात् सद्गुरुविषया यियासा भवति। तथाऽसद्गुरुविषयाया यियासायास्तिरोभावो भवति। असद्गुरुतश्च सद्गुरुं प्रति गमनं भवति। स च सद्गुरुः समस्ततच्छास्त्रतत्त्वज्ञानपूर्णः साक्षाद् भगवद्भैरवभट्टारक एव सम्पद्यते। असद्गुरुस्त्वन्यः सर्व एव। एवं यियासुगुरोर्ज्ञानलक्षणां दीक्षां प्राप्नोति, यया सद्य एव जीवन्नपि मुक्तो भवति। दीक्षा चावलोकनात् कथनात्, शास्त्रसंबोधनात्, गुरोश्चर्यादर्शनात्, यथाविधिहुतावशिष्टस्य चरोः शिष्याय सम्प्रदानादित्यादिरूपा बहुविधा भवति। एवं ह्यत्र प्रतिपादितस्तीव्रशक्तिपातस्त्रिधेत्युक्तं भवति।

तीव्रमध्यात् तु शक्तिपातात् कृतदीक्षोऽपि स्वात्मनः शिवतायां दृढप्रतिपत्तिमान् भवति, ज्ञानपरिपाकक्रमेण तु देहान्ते शिव एव भवति। मध्यमात् तु शक्तिपाताद् शिवत्वप्राप्तावुत्सुकोऽपि भोग प्रेप्सुर्भवति, इति प्रागुक्तरीत्या दीक्षायां सत्यां ज्ञानभाजनं भवति; स च योगाभ्यासलब्धमनेनैव देहेन भोगं भुक्त्वा देहान्ते शिव एव जायते। मन्दमध्यात् तु शक्तिपाताद् देहान्तरेण भोगं भुक्त्वा शिवत्वमेति। एवं हि मध्यः शक्तिपातस्त्रिधा विवेचितस्तन्त्रग्रन्थेषु।

गुरौ शक्तिपाते सति यानि लक्षणान्युत्पद्यन्ते, तानीह मृगेन्द्रतन्त्रानुरोधेनोच्यते—

येषां शरीरिणां शक्तिः पतत्यविनिवृत्तये।
तेषां तल्लिङ्गमौत्सुक्यं मुक्तौ द्वेषो भवस्थितौ॥
भक्तिश्च शिवभक्तेषु श्रद्धा तच्छासके विधौ[1]॥ इति।

मतङ्गपारमेश्वरे च शक्तिपाते का स्थितिः शिष्यस्येति विमृशन्नाह—

सन्निपाताच्च तस्येत्थमज्ञस्याप्यभिलाषिणः।
बुद्धिरुत्पद्यतेऽकस्माद् विवेकेनात्मवर्तिना॥
विवेकिनो विरक्तस्य जिज्ञासा चोपजायते।
जिज्ञासोपेतचैतन्यं पशुं संसारसागरात्॥
जिघृक्षया युनक्त्येनं युक्तं प्रेरयति प्रभुः।
प्रेरणे प्रेरकः श्रीमान् द्वयोरपि स मन्त्रराट्॥
अनुग्राह्यस्य विनये तथाऽनुग्राहकस्य च।
कारुण्ये त्वनयोर्यः स्यात् तयोर्योगः सुदुर्लभः[2]॥

एवमेव शक्तिपातसम्पन्ने साधके परमेश्वरप्राप्तौ कीदृश्युत्कटेच्छेति विमृशन्नाह पौष्करसंहितायाम्—

वैराग्यं जायते क्षिप्तं संसाराद् दुःखसागरात्।
दिदृक्षा जायते शम्भोः पादपङ्कजयोरपि॥
कदा द्रक्ष्यामि देवेशं मोक्ष्येऽहं बन्धतः कदा।
को वा दर्शयिता शम्भोरिति संजायते मतिः॥
एवं संसारतो भीतमनुगृह्णाति चेश्वरः॥ इति।

स एष शक्तिपातः प्रकारान्तरेण द्विधा—कर्मादिनियतिनिरपेक्षस्तत्सापेक्षश्च। तत्राऽऽद्योऽनुग्रहफलः सकृदुत्पन्नश्च न तिरोभवति। द्वितीयस्तु कर्मादिनियतिसापेक्षस्तदपगमे तिरोभवति। यतस्तादृशे शक्तिपाते सत्यपि कर्माद्यपेक्षं गाढदुःखमोहभागित्वरूपं फलमुपजायते, तेन च शक्तिपातस्य तिरोभावो भवति। अनुग्रहार्थमुत्पन्नशक्तिपातस्य तु कर्मनिरपेक्षस्य न तिरोभावोऽस्ति। प्रारब्धवेगेन कदाचित्तिरोभूतशक्तिपातोऽपि पातयितुर्गुरोरिच्छावैचित्र्यादनुग्रहाद् वा पुनरपि स्वयं शक्तिपातेन युज्यते, मृतो वा जन्मान्तरे बन्धुर्गुर्वादिकृपामुखेनेति।

१. मृगेन्द्रतन्त्रे, विद्यापादे ( ५,५ )।
२. मतङ्गपारमेश्वरे, विद्यापादे ( ४, ४५-४८ )।

तत्र शिवस्य पञ्च शक्तयः। तथा हि—तस्य स्वातन्त्र्यमानन्दशक्तिः, तच्चमत्कार इच्छाशक्तिः, प्रकाशरूपता चिच्छक्तिः, आमर्शात्मकता ज्ञानशक्तिः, सर्वाकारयोगित्वं क्रियाशक्तिरिति। तासां च शक्तीनां पातोऽत्र तन्त्रागमराद्धान्ते शक्तिपातपदेनाऽऽख्यायते।

शक्तिपातः सहेतुकोऽहेतुको वेति भेदेन द्विधा विभज्यते। सहेतुकः खेटपालगुरुप्रभृतीनां द्वैतवादिनां मते सम्पद्यते, अहेतुकश्च परमेशाद्वयवादिनां वसुगुप्तसोमानन्दोत्पलाभिनवगुप्तप्रभृतीनां मते संगच्छते।

द्वैतवादिनस्तु मलो द्रव्यरूप इति मन्यन्ते। चितिशक्तेरावरकत्वेन तिमिरवद्-द्रव्यरूपत्वात्। किं च वैद्यव्यापारेणाचक्षुषःपटलादिरिवेश्वररूपगुरुव्यापारेण दीक्षाख्येनैव निवर्तते, न तु ज्ञानमात्रान्निवर्तते। तदेतत् सर्वमुक्तं रत्नत्रये, तट्टीकायां च। तद्यथा—

सा तु संविदविज्ञाता तैस्तैर्भावैर्विवर्तते।
मलोपरुद्धदृक्शक्तेर्नरस्येवोडुराट् पशोः॥ इति।

यथा तिमिररुद्धचक्षुष एकोऽपीन्दुरनेक इव प्रतिभात्येवं मलरुद्धज्ञानशक्तेरेकैव चेतनात्मिकासंविदनेकरूपेव विवर्तते। तथा च—

यथा तैमिरिको हेतुसहस्रेणापि तर्कयन्।
एकमिन्दुमनेकांस्तान् भूयोभूयस्समीक्षते॥
अथ वा पित्तसंतुष्टरसनः स्वादु तर्कयन्।
अपि तिक्तं विजानाति पयः करणदोषतः॥
यथा वासनसंयुक्ते क्वथ्यमाने च वारिणि।
विदुषामपि नीलोष्णप्रत्ययावविवेकतः॥
तथा परीक्षिता सम्यगागमैस्सोपपत्तिकैः।
विवर्तमाना जातेति नष्टेति विविधेति च॥
ज्ञानानि वृत्तिं गमयेत् कारणं तिमिरादिवत्[1]॥ इति।

स च मलो द्रव्यत्वाच्चक्षुःपटलादिरिव न ज्ञानमात्रान्निवर्ततेऽपि तु चक्षुषो वैद्यव्यापारेण पटलादिरिवेश्वरव्यापारेण दीक्षाख्येनैव निवर्तते। तथा चाह—

तच्छिवप्रणिधानेन शिवशास्त्रोदितेन च।
कर्मणैव निवर्त्येत नान्यथा ज्ञानकोटिभिः॥
तिमिरादिर्यथारोग्यशास्त्रोक्तेनैव कर्मणा॥ इति।

---

१. रत्नत्रये—श्लो० ( २२-२४,३५ )।

तन्मलं शिवध्यानेनाङ्गभूतेन सहकृतया शिवशास्त्रोक्तया दीक्षाख्यया क्रिययैव निवर्तते। तदुक्तं श्रीमत्स्वायम्भुवे—

दीक्षैव मोचयत्यूर्ध्वं शैवं धाम नयत्यपि ॥ इति।

अत्रायं भावः—मलो ज्ञानान्निवर्त्यो भवति, आत्मकारणाच्छादकत्वात्, तिमिरवत्। परमार्थो मलः, मलिनीकरणार्थक्रियाकारित्वात्। यथा काचतिमिरात्मको मलो भ्रमोत्पादक इति।

श्रीमत्किरणातन्त्रे तु कालवशेन कर्मसाम्यम्, ततो गुरुकर्तृकस्तीव्रशक्तिनिपातस्ततो दीक्षा, तया सर्वज्ञशिवरूपताप्राप्तिरिति। तदुक्तम्—

समे कर्मणि संजाते कालान्तरवशात् ततः।
तीव्रशक्तिनिपातेन गुरुणा दीक्षितो यदा॥
सर्वज्ञः सः शिवो यद्वत्........ ॥ इत्यादि।

अथ शक्तिपातस्य कानि फलानि लिङ्गानि चेत्याश्रित्य मृगेन्द्रतन्त्रे पञ्चमपटले उक्तम्—'तमोरूपस्य मलस्य वामाख्याया भगवच्छक्तेश्च योऽसावधिकारो जीवन्यग्भावनव्यापृतत्वं तस्य विरामाज्जीवस्य कैवल्याभिमुखीभावः। तदुक्तं श्रीमत्स्वायम्भुवे—

क्षीणे तस्मिन् यथा सा स्यात् परं निःश्रेयसं प्रति ॥ इति

अस्याभिप्रायः—तस्मिन् तमसो भगवच्छक्तेश्च न्यग्भावनरूपे व्यापारे क्षीणे शक्तिपातरूपेणानुग्रहेण क्षीणे सति जीवस्य परं निःश्रेयसं प्रति मोक्षं प्रति कैवल्याभिमुखीभावरूपा परिच्युतिः स्यादिति। तस्यां परिच्युतौ सत्यां जगदुद्धरणप्रवणः परमेश्वरोऽणोरात्मनो दृक्क्रियानन्त्यं प्रकटीकरोति। यांस्तु स्वापावस्थितान् परमेश्वरः शक्तिपातेनानुगृह्णाति, ते तत्काल एव शिवाः संपद्यन्ते, न त्वधिकारिणो भवन्ति, तेषां मलांशानवशेषात्। तथा संहारे सृष्टौ वा यान् विमोचयति, तेऽपि सद्य एव शिवाः सम्पद्यन्ते। तथा संहारकाले येषामधिकारवाननुग्रहस्ते तदानीं रुद्राणवः, सृष्टौ त्वधिकारिणो भवितारः। सर्गारम्भे तु साधिकारानुग्रहानुगृहीताः पतय इति परापरविद्येश्वराद्यधिकारभाजो भवन्तीति। एवं सृष्टिसंहारकालयोरश्रुतमपि कथमनुग्राह्याणां शिवत्वं लभ्यत इति चेत्, लभ्यत एव, मलपरिपाकस्य परमेश्वरानुग्रहस्य चानियतकालत्वादिति।

नन्वनुग्रहाख्यशक्तिपातस्य कानि लिङ्गानीत्युच्यते—मुक्तावुत्कण्ठा, संसारद्वेषः, परमेश्वरभक्तिपरेषु भक्तिः, तच्छासके शास्त्रे श्रद्धा चेति। यत्तु कैश्चिदुच्यते—

न हृष्यत्युपकारेण नापकारेण कुप्यति।
यः समः सर्वभूतेषु जीवन्मुक्तः स इष्यते॥

इत्युपकारापकारयोश्चिन्ताया अभाव एव कैवल्यप्राप्तिकारणरूपस्य लिङ्गमिति, तन्न, माध्यस्थ्यादेव तत्संभवात्। इह पुनरयं शक्तिपाते विशेषो यदधिकारवतीषु सृष्टि-स्थितिसंहारभेदभिन्नासु तिसृषु मुक्तिषु विषयेषूपायस्य दीक्षादेः—

लोकधर्ममयी दीक्षा शिवधर्ममयी तथा॥

इत्यादिना वैशिष्ट्यवर्णनात्, आदरस्य च तत्पदप्राप्तिप्रीतिः श्रद्धात्मनो वैलक्षण्यात्। तथोक्तं श्रीमत्सूक्ष्मस्वायम्भुवे—

योयत्राभिलषेद् भोगान् स तत्रैव नियोजितः।
सिद्धिभाङ्मन्त्रसामर्थ्यात्........॥ इत्यादि।

इदञ्च साधिकारं मुक्तित्रयं मध्यमापकृष्टभेदेन द्विविधम्। तत्र स्वस्मात् पदाच्च्युतिः संभाव्यते। तृतीया तु मुक्तिस्तत्पदाधिकारसमाप्तिसमनन्तरमेव भवति। तत्र साधिकारस्य मुक्तित्रयस्य लिङ्गचतुष्टयं तु प्रागुक्तमेव। शतरत्नसंग्रहे मतङ्गसूत्रमनुसृत्य शक्तिपातस्य प्रयोजनमुक्तम्। तथाहि—'शक्तिपातेनानित्याशुचिदुःखानात्मभूतायाः प्रकृतेरन्योऽहं चेतनात्मकः पुरुषः स्वतोऽवभासमानः परमेश्वराधीन इत्येवं विवेकेन युक्ता बुद्धिरकस्माज्जायते। तत्र शक्तिपातातिरिक्तं कारणं नास्ति। तादृशे च विवेके जाते वैराग्यमुपजायते, वैराग्याच्चेश्वरपुरुषविषयकज्ञानेच्छारूपा जिज्ञासा प्रधानात्मकसंसार-निवृत्तिहेतुरुत्पद्यते। तादृशजिज्ञासायुक्तं च चैतन्यं पशुं संसारसागरादुद्धर्तुं भगवानाचार्यप्रेप्सोत्पादनद्वाराऽऽचार्यं प्रति प्रेरयति। किञ्च, प्रेरको भगवानेवानुग्राह्यस्य शिष्यस्य विनयेऽनुग्राहकस्य चाचार्यस्य कारुण्ये हेतुरित्येवमाचार्यशिष्ययोरनुग्राह्यानुग्राहकभाव-रूपसम्बन्धसम्पादक इत्युक्तम्।

शक्तिपाते जाते निःश्रेयसप्राप्तिकामः पुरुषः शिवेच्छयाऽधिगतं गुरुमेवानुप्राप्य दीक्षाविच्छिन्नमलत्रयबन्धतो मुच्यत इत्येष क्रमः। तदुक्तं वरुणपद्धत्याम्—

क्रियया वाऽथ शक्त्या वा दीक्षा सा सर्वतो मता।
दीक्षया मुच्यते देही त्रिविधोद्भवबन्धनात्॥ इति।

एवमेव चिन्त्यविश्वेऽप्युक्तम्—

दीक्षयित्वा विधानेन षट्त्रिंशत्तत्त्वकोपरि।
निष्कले निर्मले तत्त्वे योजयत्येव निश्चयः॥ इति।

एतेनेदमेव सिद्ध्यति यद् दीक्षया एव मोक्षहेतुत्वम्, न तु ज्ञानादीनाम्, तेषां दीक्षाङ्गत्वेन श्रवणात्। शिवविषयस्य योगादेर्दीक्षया विनाऽनुपपत्तेः। मलस्य च द्रव्यत्वेन चक्षुःपटलादिवज्ज्ञानमात्रेण निवृत्त्यभावात्। चतुर्वेदव्यापारेणेव दीक्षाख्येनेश्वर-

व्यापारेणैव निवृत्तिसिद्धेश्च । सा च दीक्षा किं स्वरूपेति प्राप्त उच्यते—पशूनां पशुत्वक्षय-करी ज्ञानेन शिवत्वदायिका च शिवशक्तिरेव दीक्षा । तथा च तन्त्रालोकस्य प्रथमाह्निके चतुश्चत्वारिंश- ( ४४ ) श्लोकव्याख्यावसरे समुद्धृतं वचनम्—

दीयते ज्ञानसद्भावः क्षीयते पशुवासना ।
दानक्षपणसंयुक्ता दीक्षा तेनेह कीर्तिता ॥ इति ।

नन्वेवं सति शिवस्य स्वशक्तिदानेन शक्तिदारिद्र्यमापद्येतेत्याशङ्क्य मतङ्गसूत्रानु-सारेण समाहितं शतरत्नसंग्रहे—

दानं नाम स्वसत्तैव या सा ज्ञानक्रियात्मिका ।
सा शक्तिस्तस्य संस्पर्शाद् व्यक्तीभूता सुनिर्मला ॥
पत्युर्दानं तदेवोक्तं न स्वयं व्यज्यते पशोः ॥ इति ।

तदेव शक्तिपाते सति दीक्षया ज्ञानरूपयाऽज्ञाननिवृत्तिक्रमेण मुक्तिर्भवतीत्यत्रा-दावेवास्मिँल्लेखे निरूपितम् । अतो दीक्षां विना तु न कदापि मुक्तिरित्यागमसिद्धान्तो वेदितव्यः । यत्तु—

तस्य दीक्षां विनैवात्मसंस्कारपरिणामतः ।
सम्यग्ज्ञानं भवेत् सर्वशास्त्रेषु पारिनिष्ठितम् ॥

इति वचनं तद् बाह्यक्रियादीक्षानिषेधाभिप्रायेण, न तु सर्वथा दीक्षाया निषेधोऽ-त्राभिप्रेतः, आगमश्रुतिविरोधात् । दीक्षाऽपि तीव्रातीव्रशक्तिपाततारतम्येन द्विविधा । तत्र तीव्रतमशक्तिपातादावनुपायादिक्रमेण दीक्षा भवेद् येनास्य पशोस्तत्कालमेवापवर्गः । तदुक्तम्—

तत्संबन्धात् ततः कश्चित् तत्क्षणादपवृज्यते ॥ इति ।

अतीव्रशक्तिपातादौ तूपायादिक्रमेण दीक्षा संपद्यते। उपायाश्च त्रिविधाः—शाम्भवशाक्ताणवभेदात् । एतत् त्रयमपीच्छाज्ञानक्रियात्मकत्वेन त्रिविधम् । तत्र शाम्भवोपायः—उच्चारणध्यानवर्णस्थानप्रकल्पनाहीनस्य पशोर्यो गुरुणा प्रतिबोधितः शिवे खल्वावेशः शिवसमापत्तिरूपः, उत्पद्यतेऽसौ शाम्भवः, इच्छाशक्त्यात्मकश्चित्त-प्रलयरूपश्च । यत्तुउच्चाररहितं चेतसा वस्तुध्यानमात्रं तेन यः शिवसमावेशोऽसौ शाक्तः, ज्ञानशक्त्यात्मकश्चित्तसंबोधरूपश्च । उच्चारदेहकरणध्यानवर्णस्थानप्रकल्पनैर्यः शिवे समावेशः, स आणवः, क्रियाशक्त्यात्मकश्चित्तविश्रान्तिरूपश्च । तत्र शाम्भवोपायसाध्यं ज्ञानमभेदप्रधानम् । शाक्तं च ज्ञानं भेदाभेदप्रधानम् । आणवं तु भेदप्रधानमिति । तदुक्तम्—

तन्त्रं जज्ञे रुद्रशिवभैरवाख्यमिदं त्रिधा ।
वस्तुतो हि त्रिधैवेयं ज्ञानसत्ता विजृम्भते ॥
भेदेन भेदाभेदेन तथैवाभेदभागिना ॥ इति ।

तथा च तीव्रतमशक्तिपातोत्तरदीक्षयाऽनुपायादिक्रमेण पौरुषाज्ञाननिवृत्तौ तत्कालमेवापवर्ग इति । अतीव्रशक्तिपाते तूपायादिक्रमेण दीक्षया बौद्धज्ञानेन बौद्धमज्ञान-विजृम्भितं यदा विलीयते, तदा जीवन्मुक्तिर्रिति सिद्धान्तः । एवं शक्तिपाते सति मोक्षावाप्तिर्जन्मसाफल्यं च सम्भवतीत्यागमविद एव प्रमाणम् । अत उच्यते—

यच्छक्तिपातलेशेन विश्वं स्फुरति मद्हृदि ।
तस्मै नमो मे सततं शिवाय गुरुमूर्त्तये ॥ इति ।



# शक्तिविशिष्टाद्वैतवेदान्ते ईश्वरस्वरूपम्

डॉ० चन्द्रशेखरशर्माहिरेमठः

अनुसन्धानोपाध्यायः, (रिसर्च एसोशिएट) वेदान्तविभागे:,

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

वाराणसी

❀❀❀

ॐ नमो घनलिङ्गाय सच्चिदानन्दरूपिणे ।
शक्तिसम्पद्विशिष्टाय शिवाय परमात्मने ॥

तत्र तावद् ईश्वरवादिनो भारतीया जगदुत्पत्तिस्थितिसंहारक्रियाव्यवस्थार्थम्, प्राणिनामदृष्टानुरूपं सुखदुःखफलप्रदानार्थम्, वेदानां प्रामाण्यव्यवस्थापनार्थं चास्मद्विलक्षणः सर्वज्ञत्वसर्वकर्तृत्वादिगुणगणसमन्वित ईश्वर आवश्यक इति तमागमानुमानादिप्रमाणैः साधयन्ति । अनीश्वरवादिनः केचन विनैवेश्वरं पूर्वोक्तानां समस्यानां समाधानं कुर्वन्ति । परमत्र शक्तिविशिष्टाद्वैतवेदान्तापरपर्याये वीरशैवसिद्धान्ते तमङ्गीकृतत्वात् तत्स्वरूपं विमृश्यते ।

शक्तिश्च शक्तिश्च शक्ती, ताभ्यां विशिष्टौ जीवेशौ, तयोरद्वैतं शक्तिविशिष्टाद्वैतम्, इत्यस्य व्युत्पत्तिः । जीवः स्थूलचिदचिच्छक्तिविशिष्टः, शिवस्तु सूक्ष्मचिदचिच्छक्तिविशिष्टः । अत्र स्थूला चित् किञ्चिज्ज्ञत्वरूपा स्थूलाऽचित् किञ्चित्कर्तृत्वरूपा । एवमेव सूक्ष्मा चित् सर्वज्ञत्वरूपा, सूक्ष्माऽचित् सर्वकर्तृत्वरूपा, अर्थाज्जीवः किञ्चिज्ज्ञत्व-किञ्चित्कर्तृत्वशक्तिविशिष्टः, शिवः सर्वज्ञत्व-सर्वकर्तृत्वरूपशक्तिविशिष्ट इति सिद्धम् । एवम्भूतयोर्जीव-शिवयोर्भ्रमरकीटन्यायेनात्राद्वैतंप्रतिपाद्यत इत्ययं सिद्धान्तः शक्तिविशिष्टाद्वैतमित्युच्यते ।

अत्र शक्तिसङ्कोचविकासवादेन बन्ध-मोक्षौ व्यवस्थाप्येते, अर्थाद् इच्छाज्ञानादिशक्तिसङ्कोचरूपमलत्रयावृतत्वेन बन्धः पुनस्तासामेव शक्तीनां विकासे मुक्तिरित्यर्थः । अत एवोक्तं श्रीमद्भिः शङ्करशास्त्रिमहाभागैः—"सङ्कुचितशक्तित्रयरूपमलत्रयनिवृत्तिः । शक्तिविकासरूपपरशिवत्वप्राप्तिर्मोक्षः[1]" इति यथा भ्रमरात् सर्वप्रकारेण भिन्नस्वभावोऽपि कीटो निरन्तरेण भ्रमरध्यानेन स्वशरीरादिपरिवर्तनमुखेन भ्रमरो भवति, तथा पर-

शिवात् स्वभावतो भिन्नोऽपि जीवः तस्यैवाऽनवरतचिन्तनया सङ्कुचितशक्तीनां विकास-द्वारा शिवस्वरूपो भवतीति शक्तिविशिष्टाद्वैतवेदान्तराद्धान्तः।

सिद्धान्तेऽस्मिन् शिव-जीव-शक्तय इति त्रयः पदार्थाः स्वीकृताः सन्ति। तत्र शिवो लिङ्ग-ब्रह्म-परम-स्थलाऽऽदिशब्दैरभिधीयते। "एकमेवाऽद्वितीयं ब्रह्म" (छान्दोग्योपनिषद्—६।२।१), "एको रुद्रो न द्वितीयाय तस्थे" (श्वे० उ० ३।२) इत्यादिश्रुतिभिस्तस्यैकत्वा-वगमात् स तु एक एव। जीवस्तु अङ्ग-पुरुष-संसारि-क्षेत्रज्ञादिशब्दैरभिधीयते। स तु प्रतिशरीरं भिन्नोऽनन्तश्च।

बालाग्रशतभागस्य शतधा कल्पितस्य च।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते[1]॥

"अंशो नाना व्यपदेशात्" (ब्र० सू० २।३।४३) इत्यादिसूत्रैस्तस्यानेकत्वावगमात्। स्थूलसूक्ष्मात्मकविश्वमेव शक्तिः। सा च परा-प्रज्ञा-विमर्श-धर्म-माया-प्रकृत्याद्यभिधानैर-भिधीयते।

"परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च"।
(श्वे० उ० ६।८)

"प्रज्ञा च तस्मात् प्रसृता पुराणी" (श्वे० उ० ४।१८)।
"मायां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरम्" (श्वे० उ० ४।१०)।

शक्तिरेतज्जगत्सर्वं शक्तिमांस्तु महेश्वरः।
मं शिवं परमं ब्रह्म प्राप्नोतीति स्वभावतः।
मायेति प्रोच्यते लोके ब्रह्मनिष्ठा सनातनी[2]॥

इत्यादिना शक्तिस्वरूपं निगमागमेषु बहुधा प्रपञ्चितम्।

प्रकृतेऽस्मिन् निबन्धे विचार्यमाणस्य शिवस्य सकल-निष्कलभेदेन स्वरूपद्वय-मङ्गीकृतम्। अत्र सकलशब्दः सगुणवाची, निष्कलशब्दश्च निर्गुणवाची। अद्वैतवेदान्ते निर्गुणस्य परब्रह्मणो निर्विशेषत्वमङ्गीकृतम्; परमत्र निर्गुणेऽपि परशिवे सूक्ष्मशक्तेरङ्गी-कृतत्वान्निर्गुणः शिवो न निर्विशेषः; किन्तु सविशेष एव।

औष्ण्यं हुताश इव शीतलिमानमिन्दौ
शय्यासु मार्दवमिवाश्मसु कर्कशत्वम्।
बाह्येषु मोह इव योगिषु च प्रबोधः
स्वातन्त्र्यमस्ति हि नियन्त्रयितुर्महस्तः॥

---

१. श्वेताश्वतरोपनिषद्—५,९,१०; २. श्रीकरभाष्ये।

इत्यभियुक्तोक्त्या जगति सर्वमपि वस्तुजातं यत्किञ्चिदसाधारणशक्तिविशिष्टमेव दरीदृश्यते। एतादृशशक्तिविशिष्टस्य जगतो निर्माता परशिवोऽप्यद्भुतशक्तिविशिष्ट इत्यत्र न कोऽपि सन्देहः। परशिवस्येयं शक्तिः किं स्वरूपा ? इति जिज्ञासायां श्रीशिवयोगिशिवाचार्याः—

तदीया परमाशक्तिः सच्चिदानन्दलक्षणा।
गुणत्रयात्मिका शक्तिर्ब्रह्मनिष्ठा सनातनी[1] ॥

इति शक्तेः स्वरूपद्वयमुपवर्णितवन्तः।

अत्रेदमैदम्पर्यम्—यद्यपि शक्तिरेकैव, अथाप्यस्या द्वे अवस्थे वर्तेते—तत्रैकाऽविभागपरामर्शाख्या, द्वितीया च विभागपरामर्शाख्येति। अविभागपरामर्शदशायामियं शक्तिः परशिववत् सच्चिदानन्दस्वरूपा भवति, अर्थात् सच्चिदानन्दस्य परशिवस्य 'अस्मि'-प्रकाशे, नन्दामीति योऽनुभवो भवति, स एवास्य विमर्शशक्तिरित्युच्यते। यद्ययमनुभवः परशिवे न स्यात्, तदा स स्वप्रकाशोऽपि स्फटिकादिवज्जडः स्यात्। इष्टापत्तौ च स्वीयं सच्चिदानन्दस्वरूपमन्धस्य सौन्दर्यमिव व्यर्थमापद्येत। अतः परशिवे सच्चिदानन्दानुभवरूपा विमर्शशक्तिरवश्यमङ्गीकरणीया। अत एव श्रीशिवयोगिशिवाचार्यैः—**"वन्दे तां परमानन्दप्रबोधलहरीं शिवाम्"** (सि० शि० १।११) इति परमानन्दप्रबोधरूपत्वेन तां स्तुतवान्।

**शिव-शक्त्योः सम्बन्धः—**

न शिवेन विना शक्तिर्न शक्तिरहितः शिवः।
पुष्पगन्धवदन्योन्यं मारुताम्बरयोरिव ॥
यथा चन्द्रे स्थिरा ज्योत्स्ना विश्ववस्तुप्रकाशिनी।
तथा शक्तिर्विमर्शाख्या प्रकाशे ब्रह्मणि स्थिरा[2] ॥

इत्यादिप्रमाणैः शिव-शक्त्योरविनाभावसम्बन्धं स्वीकुर्वन्ति। यथा पुष्पगन्धयोः, चन्द्रचन्द्रिकयोश्च परस्परं नात्यन्तं भेदो नाप्यभेदः; किन्तु भेदाऽभेदस्तथैव परशिवस्य केवलावस्थायां स्वस्था या शक्तिर्विमर्शनाम्ना तदभिन्नापि लीलावस्थायाम्, सैव क्षुब्धा सती विश्वाकारतां भजत इति शिव-शक्त्योरवस्थाभेदेन कालभेदेन च भेदाऽभेदौ सम्भवत इत्यविनाभावसम्बन्धो भेदाऽभेदे पर्यवस्यति। तदुक्तं कूर्मपुराणे—

एषा शक्तिः शिवा ह्येतच्छक्तिमानुच्यते शिवः।
शक्तिशक्तिमतोर्भेदं वदन्ति परमार्थतः ॥
अभेदं चानुपश्यन्ति योगिनस्तत्त्वचिन्तकाः ॥ इति।

---

१. सिद्धान्तशिखामणिः ५,३८ (६५ तमे पृष्ठे); २. सि० शि० २०१४, पृ० २०२।

तत्रभवान् शिवयोगिशिवाचार्यः—

स्वेच्छाविग्रहयुक्ताय स्वेच्छावर्तनवर्तिने ।
स्वेच्छाकृतत्रिलोकाय नमः साम्बाय शम्भवे ॥

इत्यत्रेच्छामात्रेण जगत्कर्तृत्वं प्रतिपाद्य तस्याल्पायाससाध्यत्वम् । अत एव लीलारूपत्वं च सूचितवान् ।

**वैषम्य-नैर्घृण्यदोषपरिहारः—**

ननु निर्लिप्तस्य महेश्वरस्य जगत्कारणत्वे देवतिर्यङ्मनुष्याद्युत्तमाधममध्यम-सृष्ट्या शिवस्य बद्धजीववद् वैषम्य-नैर्घृण्यदोषापत्तिः । तद्वारणाय सृज्यमानजीवात्मनां कर्मसापेक्षत्वे तस्य सर्वशक्तत्वहानिरिति चेत्, न, "पुण्यः पुण्येन कर्मणा भवति, पापः पापेन" (बृ० उ० ४।४।५) इति श्रुतौ प्राणिनां भोगवैषम्ये स्वस्वकर्मणां कारणत्वप्रति-पादनान्नेश्वरे स दोषः संभवति । नन्ववान्तरसृष्टौ सृज्यमानप्राणिकर्मसापेक्षत्वेऽपि प्रथमसृष्टौ तदभावात् सम्भवत्येव स दोष इति चेत्, न, जीवानां तत्कृतकर्मणां चाना-दित्वात्, अन्यथा कृतहानाकृताभ्यागमदोषप्रसङ्गः । अत एव "ज्ञाऽज्ञौ द्वावजावीशानीशौ" (श्वे० उ० १।६) इति श्रुत्या प्रवाहरूपेण क्षेत्रज्ञानां तत्कृतकर्मणां चानादित्वं प्रति-पादितम् ।

न च प्राणिनां कर्मसापेक्षत्वे तस्य सर्वशक्तत्वहानिः, स्वकृतनियमस्य परिपाल्यमानत्वात् । लोके यथा नृपस्य स्वकृतस्यैव नियमस्य परिपालनेन सर्वशक्तत्वं न हीयते, तथेश्वरस्यापीति बोध्यम् । तस्माद् विद्युतो वीजन-पेषणादियन्त्रगतायास्तत्त-त्कर्मणि प्रेरकत्वेन सहायिकाया अपि बीजनादिकार्यवैचित्र्ये तत्तद्यन्त्राण्येवासाधारणानि कारणानि भवन्ति, तथा सृष्ट्युत्पत्तावीश्वरस्य साधारणकारणत्वेऽपि सृष्टवैचित्र्ये तत्त-त्प्राणिनामदृष्टान्येवाऽसाधारणानि कारणानीति निष्कर्षः ।

एवं पञ्चकृत्यव्यवस्थावद् वेदागमादीनां व्यवस्थार्थमपीश्वर आवश्यकः । अत एव भगवान् भाष्यकारः "शास्त्रयोनित्वात्" (ब्र० सू० १।१।३) इत्यस्य सूत्रस्य भाष्ये—

सद्योजातेन ऋग्वेदं वामदेवेन याजुषम् ।
अघोरेण तथा साम पुरुषेण त्वथर्वणम् ॥
ईशानेन मुखेनैव कामिकाद्यागमांस्तथा ।
जनयामास विश्वेशः सर्वसिद्धिप्रदायकः[1] ॥

इति शिवस्य वेदागमानामुत्पादकत्वस्मृतिमुदाहरन् "शास्त्रस्य ऋग्वेदादेर्योनिः कारणम्"

---

१. ब्रह्मसूत्रश्रीकरभाष्यम् ।

इति व्युत्पत्तिसिद्धशास्त्रयोनित्वं समर्थ्य तदागतत्वेनैव निगमागमानां प्रामाण्यमिति साधयामास ।

तदेतावता पर्यालोचनेन ज्ञायते यच्छक्तिविशिष्टाद्वैतवेदान्ते मायाशक्तिविशिष्टं परशिवब्रह्मचैतन्यमेव सगुणं सद् महेश्वर इत्यभिधानवान् भवति । अस्य च मायाशक्तेन चाद्वैतवेदान्तवद् या मा सा माया इत्युत्पत्तिवन्न मिथ्याभूतत्वम्; किन्तु "मं = शिवम्, अयति = स्वभावतः प्राप्नोतीति माया" इति व्युत्पत्त्या तस्याः सत्यत्वात् तद्विशिष्टो महेश्वरोऽपि सत्यः । यदि च निर्गुणस्यैव सत्यत्वं सगुणस्य च मिथ्यात्वं स्यात्, तदा "तदैक्षत बहु स्यां प्रजायेयेति" (छा० उ० ६।२।३) इत्यादीनामीश्वरस्य सगुणत्वप्रतिपादकश्रुतिशतानां निर्विषयत्वापत्तिः स्यात् । अपरं चोपास्यस्य मिथ्यात्व उपासकानां श्रद्धानुदयात् भक्तिसिद्धान्तस्य वैय्यर्थ्यापत्तिः । अतः सगुणरूपस्यापि सत्यत्वमेवाङ्गीकर्तव्यम् । एतद्विषये शक्तिविशिष्टाद्वैतवेदान्तपक्ष एव भक्तैर्मुमुक्षुभिश्च समाद्रियत इति शिवम् ।



# महामहोपाध्यायपण्डितश्रीगोपीनाथकविराजस्य जीवनकथायां वंशपरम्पराया जीवनयात्रायाश्च लोकयात्रानुसारि वर्णनम्

**श्रीशशिधरमिश्रः,**

मुमुक्षुभवनम्, अस्सी

वाराणसी

❀❀❀

पुरोत्तरगुप्तकाले ब्राह्मणधर्मस्य यत् पुनरुत्थानमुपस्थितम्, तस्य वङ्गभूमौ व्यापकप्रभावो महाराजादिशूरशासनकाले १०८३ ईसवीयस्य निकटतमे काले दृश्यते स्म। अस्मिन्नेव समये पञ्चकुलीना ब्राह्मणा वङ्गवासार्थमामन्त्रिताः। एषु शाण्डिल्य-गोत्रियान्यतमो भट्टनारायण आसीत्। कालान्तरेऽस्यैवैको वंशजो गोपालनामा पूर्वं-वङ्गस्य मयमनसिंहजनपदे स्थितगायनाकदनामकग्रामे स्वस्थायिनिवासं निर्मितवान्। तस्य वंशधरो रामबागचो तावदुपाधिना विभूषितश्शासनेन। नवाबीशासने यदै-तत्कुलोनाः केचिद्विशिष्टजनाश्चिकित्सकवृत्तिं स्वीचक्रुः। तस्माद् बागचीवंशान्तर्गता-नामपि तेषां कविराजपदवी प्रसिद्धा। श्रीपण्डितगोपीनाथस्याविर्भावो वारेन्द्रश्रेण्या ब्राह्मणानामस्यामेव शाखायामभूत्। तस्मिन्नेव वंशे श्रीवैकुण्ठनाथस्य पुत्रो महामनाः श्रीगोपीनाथ आसीत्। अस्य महामनसः पण्डितगोपीनाथस्य प्रपितामहः पं० कमलाकान्त आसीत्। एतस्मात्पूर्वः कश्चिद् गोपालकुटुम्बी मयमनसिंहजनपदस्य 'टाङ्गाईल' तर्हशिलस्य दान्यानामकग्रामेऽवसत्। शनैः शनैः केचिद्ग्रामा वृत्तिरूपेण तम्प्रापुः। एवञ्च, संक्षिप्तेति-हासवर्णनप्रसङ्गेन स तत्कालीनप्रथानुसारेण श्रीवैकुण्ठनाथस्य विवाहो घामराई-ग्रामस्य प्रसिद्धमौलिकपरिवारे १८७६ ईशवीये जातः। तस्य पत्नी सुखदासुन्दरीदेवी घामराई-ग्रामस्य यशोमाधवदेवमन्दिरसेवकस्य रामजीवननाममौलिकस्य वंशजहरिश्चन्द्रराय-मौलिकस्य तनयाऽऽसीत्। मौलिकस्य पत्नी दिवंगता। अतः सुखदासुन्दरीदेव्याः पालनं तस्यैव ग्रामस्य वृद्धया महिलया वामासुन्दर्या कृतम्। हरिश्चन्द्ररायस्य देहावसाने वामासुन्दर्यैव श्रीवैकुण्ठनाथेन सह विवाहं सम्पादितवती तदनन्तरं धर्ममातुः वामासुन्दर्या गृहमेव मातृकुलमभवत्।

अस्य महानुभावस्याविर्भावः ३० अप्रैलमासस्य १८८७ खीस्ताब्दे पितुः परलोकवासानन्तरं श्रीमत्याः सुखदासुन्दर्याः गर्भात् प्रकृतमहानुभावस्य ७ सितम्बर, १८८७ खीस्ताब्दे समजनि। अस्य महानुभावस्य पितुर्मातुलेन पण्डितकालाचाँदसान्यालेन रक्षा कृता। अस्य प्रारम्भिकशिक्षा काण्ठालिया प्रारम्भिकपाठशालायां सम्पन्ना। नवमे वर्षे च (१८।२।१८९६ ई०) उपनयनसंस्कारो जातः। १८९८ ईशवीयं यावत् काण्ठालीयास्थानविशेष एव बँगलासंस्कृताङ्ग्लभाषा अभ्यस्तवान्। १९०५ ई० ढाकास्थजुविलीस्कूलात् एन्ट्रान्स्परीक्षा प्रथमश्रेण्याम्पारिता। इत्थम् १९०६ ईसवीयात् १९१० ईशवीयं यावत् महाराजाकालेजजयपुरेऽध्ययनव्यवस्था प्रचलति स्म। १९११ खीस्ताब्दस्य सप्तममासे वाराणसीमागत्य एम० ए० कक्षाया द्वितीयवर्ष प्रवेशो लब्धः कविराजेन क्विन्सकालेजे। १९१२ ई० एम० ए० कक्षायाः स्वास्थ्यभङ्गवशात् परीक्षा न दत्ता। अतः १९१२ खीस्ताब्दीय-जुलाईमासेऽस्य द्वितीयवर्ष पुनः प्रवेशो जातः। ये छात्राः अस्मादेकवर्षपरवर्तिन आसन्, ते वर्त्तमानसमये सहपाठिनो जाताः। तेषु श्रीमाननीयनरेन्द्रदेवदिवाकरा अप्यासन्। ते त्रयोऽपि श्रीवेनिसमहोदयनिर्दशने पुरातत्त्वमध्येतुमारेभिरे। अयम्महानुभावः पालिप्राकृतफ्रेञ्चजर्मनभाषा अधीते स्म।

देवनाथपुरातः कालेजीयागमने कृशकायमेनं महानुभावं कष्टम्प्राप्नोति स्म। आर्थिकचिन्ताभारोऽप्यतिरिक्त आसीत्। तत्प्रयोज्यहानिमपाकर्त्तुम् औरंगाबादे व्यक्तिगताध्यापनामङ्गीकृतवान्। श्रीवेनिसमहोदयेनास्य यदा परिचयो जातः, तदा स महानुभावोऽस्मै छात्रवृत्तिमदापयत्। स तदैव छात्रावासे वासाय एकं कक्षमपि समर्पयामास। समयानुसारेण श्रीवेनिसमहोदय एनं बोधयामास यत्तत्समोपेऽस्य महानुभावस्य नियुक्त्यर्थं स्थानद्वयात् प्रस्तावः प्राप्तोऽस्ति। सूचनाल्लँब्ध्वागम्यपदयोरन्यतरस्वीकारे श्रीवेनिसमहोदय एव भारो निहितः। ततस्तेनोभयानङ्गीरोऽनुमतः। श्रीमहामनसः कविराजमहोदयस्याऽऽर्थिकविपन्नतासद्भावेऽपि धनोपार्जनापेक्षया ज्ञानोपार्जनेऽधिकरुचिरासीत्—श्रीवेनिसमहोदयेनाज्ञप्तः श्रीगोपोनाथमहोदयो यत्किञ्चित्कालं यावद्लप्स्यमानवृत्त्या सधैर्यं कालं यापय, सत्यवसरे सर्वं संसेत्स्यतीति महामना तदोयाज्ञां शिरसा वोढ्वा स्वारब्धकार्यन्निर्वाहितवान्।

काशीस्थराजकीयसंस्कृतकालेजस्य तात्कालिकी व्यवस्थेत्थमासीत् यत् प्राच्यपाश्चात्यशिक्षाप्रणालीद्वाराविविधविषयेषु स्नातकोत्तरकक्षां यावत् शिक्षाया व्यवस्थाऽऽसीत्, आङ्ग्लभाषाया माध्यमेन। एम० ए०, एम० एस्० सी परीक्षां च यावत्, संस्कृतविभागे चाचार्यपरीक्षां यावदध्यापना प्रचलति स्म। सरस्वतीभवनपुस्तकालयोऽप्येतदधीन आसीत्। वेनिसमहोदय उभयोः प्राचार्यं आसीत्। सहैव संस्कृतकालेज द्वारा

संचालितपरीक्षाया रजिष्ट्रारोऽप्यासीत्। तस्मिन् समये संस्कृताध्ययनाध्यापनव्यवस्था शोभनतमाऽऽसीत्। श्रीवेनिसमहोदय आङ्ग्लीयः सन्नपि बहूनां वेदान्तादिग्रन्थानाम् आङ्ग्लभाषायाम् अनुवादं कृतवान्। श्रीवेनिसमहोदयस्य तिरोधानानन्तरं संस्कृतपाठशालानां वरिष्ठनिरीक्षकः श्रीठाकुरदासशर्माऽस्थायिरूपेण तत्पदमलङ्कृतवान्। ततः परं तत्पदं श्रीगङ्गानाथझामहोदयो विभूषितवान्। अयं महानुभावः श्रीस्वर्गीयवेनिसमहोदयस्य शिष्य आसीत्। श्रीगोपीनाथमहोदयोऽपि तदीयदयनीयकृपापात्रशिष्य आसीत्। येन श्रीगोपीनाथमहोदयैः सह तदीयो गुरुभ्रातृव्यवहारः प्रचलति स्म। तदैवैनान् श्रीकविराजमहोदयान् आनेतुम् कालिकातातस्तत्रत्यविश्वविद्यालयस्योपकुलपतिः काशीमागतस्तेनाधिकवेतनप्रदानेन प्रलोभिता अपीमे महानुभावास्तत्र गन्तुं नाङ्गीचक्रुः। इमे च १९१८ ईशवीये दीक्षिताः, दीक्षकमहोदयानाम् अत्रैव निवासेनैव वशीभूतः काश्यामेव निवासं स्थायिनञ्चक्रुः।

अस्मिन्नेवावसर एषाम् अध्ययनविषयपरिवर्तनं जातम्, तथाहि शनैः शनैः भक्तिदर्शनयो रुचिर्याता। भारतीयास्तिवाद-गोरखपन्थ-वीरशैवमत-तान्त्रिकदर्शन-मध्यकालीनभक्तिसम्प्रदाय-गौडीयवैष्णवधर्मा एषां विशेषाध्ययनविषयोऽभूत्। चतुर्विंशत्यधिकैकोनविंशतितम ईशवीये(१९२४)वर्ष डॉ. गङ्गानाथझामहोदयस्य प्राचार्यपदात्, कार्यमुक्तौ काशीस्थराजकीयसंस्कृतकालेजे तत्पदे श्रीगोपीनाथमहोदयानां नियुक्तिः संजाता। यद्यपि तत्पदायाऽपरेऽप्यभ्यर्थिता आसन्, तथाप्येषाम्महानुभावानाम् अगाधपाण्डित्यम्, प्रस्तुतकालेजं प्रति कृतचिरन्तनसेवां च दृष्टिकोणयन्तौ श्रीध्रुवश्रीगङ्गानाथमहोदयावेनानेव तत्पदेऽपराधिकारिसम्मतान् न्ययूयुजताम्। प्रिंसिपलपदे नियुक्ता अपि कञ्चित् कालं यावत् रजिष्ट्रारपदकार्यं परीक्षायोजककार्यं चापि निरवीवहन्। उक्तपदनियुक्तिः पार्थक्येन पश्चाज्जाता। एवंरीत्या त्रयोविंशतिवर्षानभिव्याप्य पूर्णनिष्ठया संस्कृतकालेजस्य कार्यनिर्वाहसमय एव १९३७ ईशवीयवर्ष एनान् बेरीवेरीरोगो ग्रसितवान्।

एतत्साम्राज्य एव वयम् १९३१ ईश्वीये वर्षे व्याकरणाचार्यपरीक्षां द्वितीयश्रेण्यां पारितवन्तः। अत एव तदीयकालेजशिक्षासंचालनव्यवस्थां सम्यग् जानीमः। तात्कालिका अध्यापका अखिलविद्याव्यसनिनः, अध्यापनकलाप्रवीणाश्छात्रा अपि संस्कृताध्ययनसमुत्सुका आसन्। श्रीगोपीनाथमहोदयानामाधिपत्ये कालेजे व्याकरणविषयाध्यापकाः श्रीहरिनारायणत्रिपाठिनः, श्रीरामभवनोपाध्यायाः, आस्माकीना गुरवः श्रीगणपति-(मुक्राटे इत्युपाधिमन्तः) शास्त्रिणः, ज्योतिषाध्यापकाः श्रीहृषीकेशोपाध्यायाः, पद्मनाथमहोदयाः, नव्यन्यायविषयस्य श्रीवामाचरणभट्टाचार्यमहोदयानन्तरं शुक्लोपाधि-

मन्तः श्रीसूर्यनारायणमहोदया व्याकरणनव्यन्यायाचार्या मदीयन्यायगुरव आसन् । एके बालबोधमिश्रा अनेकविषयाचार्याः श्रीमहादेवनामानः साहित्याध्यापकाश्चासन् । एकोऽपरोऽपि साहित्याध्यापक आसीद्यश्च मया नाम्ना न स्मर्यते । इत्थं योग्यतमा इमेऽध्यापका मदीयाध्ययनकाले विराजमानाः कविराजमहोदयानामधिकारित्व आसन् । छात्रसमुदायेषु श्रीदेवनायकोपाध्याय-श्रीमुनिवरशर्म-शान्तनुविहारि श्रीमदखण्डानन्दादिमहोदया- आसन्, ये च पदपदार्थविवेचनायां शास्त्रार्थे चातीव व्रवीणा आसन् ।

स एवायं कालेजः संस्कृतस्य, संस्कृतेश्च साम्प्रतं **श्रीसम्पूर्णानन्दसंस्कृतविश्वविद्यालयपदभाग्** आधुनिकाध्यापकच्छात्रकर्मचारिवर्गैरधिकारिवर्गैश्च शोशुभ्यमानो दृश्यतेऽस्मदादिसौभाग्यनिकरैः । १९३७ ईशवीये वर्ष इमे महानुभावाः सेवाकालसत्त्वेऽपि सार्वदिकावकाशार्थमावेदनपत्रं प्रेषितवन्तः । तदनु प्रान्तीयशिक्षाविभागो रोगविमुक्तिहेतवे चिरकालिकावकाशं स्वीकृत्यैतत्सेवावृत्तिसुरक्षायै प्रायतत । किन्त्विमे प्रागेव पदत्यागाय समकल्पन्त तत्र दृढा आसन् । एवं व्यवसिते शिक्षाविभागीयप्रधानाधिकारिणा १३-३-१९३७ ईशवीये वर्षे नियुक्तकार्यादिमे विश्रामिताः । पदन्निवृत्तावेत एकनिष्ठभावेन 'स्वाध्याये' योगसाधने च निरता अभवन् । अनन्तरं वाराणस्यामेव सिगरास्थाने भूमिं क्रीत्वा गृहं निरमापयन्, तत्रैव च १९३७ ईशवीये वर्षे ३१ मार्चमासे नूतनगृहं प्राविशन् । १९६१ ईशवीये वर्षे इमे महानुभावा आनन्दमय्या आश्रमे न्यवसन् । तत्र च 'मौनयोगम्' आश्रयन् । तत्रैव चास्माभिः पुनर्दर्शनलब्धम् ।

आनन्दमय्याश्रमे तद्दर्शनेनास्माकमित्थं निर्णयः प्राप्तो यदिमे महानुभावाः साक्षाज्जीवन्मुक्ताः सन्ति । यद्यपि जीवनकाले मुक्तताऽसम्भविनी; तथाप्यद्वैतवेदान्तावलम्बनेनाविद्याया द्वे शक्ती निर्धारिते—आवरणशक्तिर्विक्षेपशक्तिश्चेति । तत्र वृत्त्यात्मकावरणशक्तेर्ब्रह्मसाक्षात्कारेण नाशेऽपि प्रारब्धकर्मप्रतिबन्धकेन विक्षेपशक्तेर्नाशप्रतिबन्धेन तदनुरोधेन शरीरेन्द्रियादिसद्भावेन जीवने च जीवन्मुक्तेर्व्याघाताभाव इत्येवं जीवन्मुक्त्यन्यथानुपपत्त्या यथा 'पीनोऽयं देवदत्तो दिवा न भुङ्क्ते' पीनत्वान्यथानुपपत्त्या रात्रिभोजनं कल्प्यते, तथैवात्रापि जीवन्मुक्त्यन्यथानुपपत्त्याऽविद्यालेशः कल्प्यते, तत्राविद्यालेशे तदुक्तम्—

अथ कोऽयमविद्याया लेशो यदनुवर्तनाद् देहादेः ।
प्रतिभासेन जीवन्मुक्तिरिहोच्यते ॥
ज्ञानेनावरणे नष्टे विक्षेपांशोऽनुवर्तते ।
प्रारब्धप्रतिभासेन सलेशस्तेन जीवनम् ॥ इति ।

सोऽविद्यालेशस्त्रिधा व्यवस्थितः। आद्यो यथा—आवरणविक्षेपशक्तिमत्या मूलाविद्यायाः प्रारब्धकर्मवर्तमानदेहाद्यनुवृत्तिप्रयोजको विक्षेपशक्त्यंशोऽविद्यालेश इत्यन्ये केचित्। क्षालितलसुनभाण्डानुवृत्तवासनाकल्पोऽविद्यासंस्कार इत्यन्ये। दग्धपटन्यायेनोभयशक्तिहीना वियदादिप्रजननसामर्थ्यविकलाऽविद्येवाविद्यालेश इत्यपरे। एवं त्रिधाव्यवस्थितोऽयमविद्यालेशो यदुपपत्तये जीवन्मुक्तिराश्रीयतेऽतो यथा जनकादयो जीवन्मुक्तास्तथैव महामहोपाध्यायश्रीगोपीनाथकविराजमहोदया अपि जीवन्मुक्ता आसन्। आशास्महे च वर्तमानकुलपतिमहोदयसाम्राज्येऽपि पूर्ववदियं संस्थाऽध्ययनाध्यापनशैल्या निखिलदुर्नीतिनिवारणपुरुसरःवश्यमेव समृद्धि प्राप्ता स्यादित्याशास्महे।



# निगमागमसार्वभौमानां योगिराजानां वाग्योगविदुत्तमानां महामहोपाध्यायश्रीगोपीनाथकविराजमहाभागानां स्तवः

( जन्मशताब्दीसमारोहप्रसङ्गे )

डॉ० शशिधरशर्मा, डी० लिट्०

❀❀❀

नीलाम्भोजद्युतिततिशिता कालिका मालिकासत्-
स्वान्तानां सा कुमुदमहसः संविभिन्ना न शम्भोः।
तन्त्रं तन्त्रश्रुतिषु निभृतं तत् किमासेत्स्यदेवं
गोपीनाथो यदि न धरणीं जन्मनाऽपावयिष्यत् ॥१॥

यद्वा शक्तेः कथमपि मनाक् शक्तिमान्नैव भिन्नो-
निर्विश्रामं प्रथयति गिरा नैगमी निर्विशेषम्।
राधायाः स्वीकृततनुसितरुचिप्रीतिदाक्षिण्यभूति-
र्गोपीनाथोऽभवदिति पुनर्गीतचिच्चारुगीतः ॥२॥

उद्रिक्तोऽस्मिन् किमुत विनयो वाऽतिरिक्ताऽत्र विद्या-
लेखा लेखस्वतनुरिह वा पाठनं पाटवाढ्यम्।
वैराग्यं किं परमहिमगं वाऽथवाऽभ्यासवासः,
सन्देहस्थस्त्त्वति बुधजनो निर्णयं नाऽऽससाद ॥३॥

वृष्टा व्योम्नो यदि फलततिर्भक्तसौहित्यहेतो-
स्तत्कालं सन्निहितमथवा वस्तुना दूरगेण।
देहो धूतः पुनरुपगतो वाऽथ पश्यत्सु सत्सु-
नो चित्रं तत् किमपि परमं योगमातस्थुषोऽस्य ॥४॥

वन्दारूणां परिषदमसौ धीरधीर्नाऽभ्यनन्दत्
श्रद्धाऽऽनीतं कुलपतिपदं सस्मितं संव्यहासीत्।
ब्रह्माऽऽनन्दोच्छलदतिसुधाऽमन्दनिष्यन्दमग्नाः,
किं वाऽऽलोकाऽसहहिमकणान् जातु धन्या जुषन्ते ॥५॥

यत्पादान्ते प्रगुरुगुरवो वीतखेदा निषेदु-
र्यन्निर्णीतिः परमपरमा सर्वशङ्काऽऽस्पदेऽभूत् ।
एकस्त्यागोऽनयदमृततामागमानामितीदृग्-
वाचो यत्राऽभिनवपरदिक् चिन्मये चाविरासीत् ॥६॥

प्राच्यं ज्ञानं मतिततिशताऽऽविभंवद् भूरिशाखं
पाश्चात्त्यञ्चाऽप्यभिनववलत्तुङ्गसाहस्रभङ्गम् ।
यत्र द्वन्द्वं व्यलसदतुलं प्राप्तमद्वन्द्वभावं
गोपीनाथः स कथमयतां वर्ण्यतां मादृशानाम् ॥७॥

ऊर्ध्वं व्योम स्फुरति विततं विष्वगाद्यन्तहीनं
पारावारः सरति शतधालीनधारस्तथाऽधः ।
एतद् द्वयन्तः किमपि निभृतञ्चाऽन्तरं श्रान्तमानम्,
गोपीनाथप्रवचनचये तद्द्वयं संभृतं तु ॥८॥

योगस्याऽऽसीद् भुवनशिवकृद् यत्र सौभाग्ययोगो,
वेदान्तानां व्यकसदमला निस्तुला यत्र कान्तिः ।
तन्त्रं यत्र प्रसृतिमगमत् सर्वतन्त्राऽऽत्मतन्त्रं
गोपीनाथः स कविरलसद् शारदापौंस्नभावः ॥९॥

हं हो ! दृष्टं सुकृतिभिरदो मञ्जुलं कञ्जमेकं
यस्याऽश्रान्तं मधुमधुकरा भेजुराकण्ठमग्नाः ।
हन्त प्रापुर्दलवलयतां कृत्स्नशास्त्राणि यस्य
काश्यां प्रत्यासददथ शुभा कर्णिका कर्णिका च ॥१०॥

तीर्थानां राजनि बदरिकास्वाश्रमे लब्धजन्मा,
श्रीचिन्तामण्यमलकरुणाऽवाप्तवाग्वैभवाढ्यः ।
पुष्णात्यन्तः शममिह पुराऽसंस्तुतं संस्तुवन् सः
गोपीनाथं शशिधरकविः श्रद्धया बद्धचित्तः ॥११॥

# संस्कृतवाङ्मये सूर्यस्तवाः

आचार्यश्रीकरुणापतित्रिपाठी
कुलपतिचरः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
अध्यक्षश्च,
उत्तरप्रदेश-संस्कृत-अकादम्याः

❀ ❀ ❀

**सामान्यं प्रास्ताविकम्—**

भारतीयदेवानां स्तुतिमाध्यमेन परिचयम् ऋग्वेदसंहिताद्रष्टारः ऋषयोऽतीव पुरातनकालात् समुपस्थापितवन्तः। इत्थञ्च भारतीयार्यसंस्कृतौ प्राक्तनतमकालादेव दैवतानां वर्णनं वर्तते। भगवत आदित्यस्य चानेकरूपेण देवेषु वर्णनमुपलभ्यते। संहिता-कालादनन्तरं ब्राह्मणग्रन्थेषु, आरण्यकेषूपनिषत्सु च तस्य महिमा नानारूपेण, विविध-सन्दर्भेषु दरीदृश्यते। सूत्रग्रन्थेषु, पुराणेषु, स्तोत्रेषु च भूरिशो देवस्यादित्यस्य महत्त्वम्, स्तवनीयत्वम्, सर्वार्थसाधकत्वञ्चानुलक्ष्यते। एतेषां विविधपक्षाणां निबन्धेऽस्मिन् सिंहावलोकनक्रमेण स्वरूपमुपस्थापयिष्यते।

सर्वतः प्रथममत्र भूलोकस्य कृते सूर्यस्य सर्वाधिकप्रभावस्य कारणरूपेण किञ्चिद् विवरणमावश्यकम्। सवितुरेतन्महत्त्वं त्वाधुनिकविज्ञानदृष्ट्या सामान्यलोकजीवन-निर्वाहदृष्ट्या चास्माभिरवलोकनीयम्। सर्वे वयं जानीमो यद् अस्मदीयस्य पृथ्वीमण्डलस्य अथ च स्थावर-जङ्गमगतजीवनस्य चाविर्भावः, तिरोभावो जीवस्थितिः, किं बहुना, जननमप्यादित्यस्य प्रभावादेव जायन्ते।

पृथ्वी खलु भगवतो भास्करस्य ग्रहः। सर्वदा इयं पृथ्वी सूर्यत एव शक्तिम्, ऊर्जाञ्च समवाप्नोति। अत्र च यावन्ति जीवनानि वृक्षादिस्थावरपदार्थेषु कीटपतङ्गादा-रभ्य मनुष्याश्वगजादिषु च वर्तन्ते, तेषां सर्वेषां प्रसविता सविता एव। अन्यदपि एकं तत्त्वं न विस्मरणीयम्। यदि सूर्यस्य सत्ता न स्यात्, तदा अस्मत् सौरमण्डलान्त-र्गतग्रहोपग्रहाणां स्थितिरपि नाभविष्यत्। एषा कथा त्वतीव विस्तृता। वैज्ञानिकाश्चा-मुष्मिन् विषये विपुलं वाङ्मयं लिखितवन्तः। दिने दिने चाभिनवान् प्रयोगान् विद-धति। मदीयं ज्ञानं तस्मिन् पक्षे नगण्यमेव; परन्तु जानाम्यहं यद्वद् अस्माकं भूर्लोकः

सूर्यस्याकर्षणेन समाकृष्टोऽविरतगत्या सूर्यस्य परिक्रमामनुतिष्ठति। ततश्चैवेयं धरित्री ऊर्जाम्. शक्तिञ्च लब्ध्वा ऊर्जस्वती शक्तिसम्पन्ना, सजीवा, चेतनप्राणमती च विद्यते।

सविता एव स्वरश्मिभिः स्वकीयोष्मणा च समुद्रस्य जलं वाष्पीकुर्वन् तच्च समाकृष्य मेघरूपेण परिणामयति। वर्षाद्वारा पृथ्वीमभिसिञ्चति। सूर्यप्रभावादेव च पृथिव्यां कार्बनम्, आक्सीजनञ्च समुत्पद्येते, येन जीवसृष्टिः सम्पद्यते। वैज्ञानिकज्ञानाभावादधिकं लपितुं नोत्सहे। मार्तण्डस्य प्रभावादेवास्माकं भूमण्डस्य दिवसाः, निशाः, मासाः, ऋतवः, संवत्सराश्च जायन्ते। अस्माकं भारतीयानां निखिलाः कालगणनाः फलितसिद्धान्त-गणितज्योतिषसम्बन्धिन्य आकलनाश्च सूर्यमधिकृत्यैव क्रियन्ते। किं बहुना, सौरमण्डलस्य सर्वे ग्रहोपग्रहादयः सूर्यस्य प्रभावादेव नर्तनं कुर्वन्ति। आकाशगङ्गया सहापि सूर्यस्य विशिष्टः सम्बन्धो वर्तते।

अस्मिन् वर्तमाने वैज्ञानिके युगे ऊर्जायाः, विद्युच्छक्तेश्च प्रभावः सर्वतोऽधिकं विद्यते। यानि यानि च पेट्रोलादीनि ऊर्जासाधनानि च विद्युच्छक्तिः, अग्निः, किं बहुना, निखिलं तैजसं तत्त्वं सूर्यादेव प्रभवति। परमाणुगता या अपरिमेया ऊर्जामयी शक्ति-र्वैज्ञानिकान् सामान्यलोकांश्च चमत्करोति, साऽपि सूर्यप्रभावादेव प्रादुर्भवति। चन्द्र-बुध-शुक्र-शनि-गुर्वादिमण्डलेषु ये प्रक्षिप्ताः शक्तिबाणा उद्गच्छन्ति, तेऽपि सूर्याच्छक्तिपुष्टाः। अत्र पक्षे अलमधिकवक्तव्येन। वैज्ञानिकानुसन्धानग्रन्थेषु अमी सव वृत्तान्ता अवगन्तव्याः।

आर्याणां क आदिदेश इत्यत्राधुनापि बहुविवादो वर्तते; परन्तु बहवो भारतीयाः, प्राच्यविद्याविदः, भारतीयपुरातनेतिहासविज्ञाः, पुरातनभूगर्भविदः, नक्षत्रज्योतिष-विज्ञानविज्ञा घोषयन्ति यद् आर्याणां भारत एवादिदेशः। आधुनिक-पाश्चात्यभाषा-विज्ञानविज्ञा मूलार्यभाषायाः क्षेत्ररूपेण योरपभूखण्डं बहूनि च एशियास्थानानि भारतीयभूभागं च आर्यभाषायाः क्षेत्रं वर्णयन्ति। मूलपितृभाषारूपेण कल्पितां भाषां सर्वासामार्यभाषाणां जनकत्वेन पूर्ववर्तित्वेन वा निर्धारयन्ति।

अयं पक्षः कियान् साधीयान् ग्राह्यश्चेति तु अन्या कथा; परन्तु एक एतादृशो विषयो वर्तते, यत्र सन्देहलवलेशोऽपि न विद्यते। ऋग्वेदसंहिता निखिलस्य विश्वस्य, समग्राया आर्यजातेः, भारतीयहिन्दूनां च प्राचीनतमो वाङ्मयसन्दर्भोऽस्ति। तस्यां संहितायामार्याणां यानि चरितानि संस्कृतिचिह्नानि, देवोपासनादीनि, सामाजिका-चरणानि, अन्ये च विषया राजनीतिक-धार्मिकादयश्च विद्यन्ते, तेषामनुशीलनेनैव मुख्यतः प्राचीनतमानामार्याणां पुरातनमूलार्यपितृभाषायाः कल्पना कृताऽस्ति। इत्थं

च पुराकालीनार्याणां युद्धनीति-राजनीति-गार्ह्याचरण-समाजविज्ञानादिसम्बन्धेऽपि सर्वा कल्पना मुख्यतो वेदाध्ययनेनैव प्रधानतया प्रस्थापिताः सन्ति। यद्यप्यन्यान्यपि प्रमाणानि खण्डशो लब्धानि, तथापि ते निर्णायकानि प्रायः न भवन्ति; अपि च अमूनि केवलं सङ्केतमात्रकारकाणि सन्ति।

इत्थमेव च वैदिकदेवानां विषयेऽपि, अथ चार्याणामुपासनापद्धतिसन्दर्भे च बहवो विवादाः, समस्याः, प्रश्नाश्च सन्ति, येषां विषये यदि किञ्चिद् इदमित्थमिति-रूपेण निगदितुं वयं प्रभवामः, तदा तत्र ऋग्वेद-यजुर्वेद-अथर्ववेदादिग्रन्थानामनु-शीलनम्, परिशीलनम्, गभीराध्ययनं चापेक्षते।

सूर्यस्य विषये संक्षेपेणेह ऋग्वेदमाधृत्यैव किञ्चित् कथितव्यं वर्तते। आर्याणां वैदिकभाषा सर्वप्राचीना। ऋग्वेदसंहितायाम् इतरासु च वैदिकसंहितासु सूर्यस्य विषये नानारूपेण, नानासन्दर्भेण, नानापक्षेण च सूक्तेषु, मन्त्रेषु वा विवरणं लभ्यते।

**ऋग्वेदसंहितासन्दर्भाः केचन—**

संस्कृतस्तुतिवाङ्मये (संस्कृतस्तोत्रवाङ्मये वा) सूर्यस्य स्तवानां संक्षिप्तविवरण-मस्य निबन्धस्य[१] मुख्यः सन्दर्भः; परन्तु संस्कृतभाषापदेन लौकिकी वैदिकी चेत्युभये भाषे गृह्यतेऽतोऽत्र सूच्यते यदस्य निबन्धस्य स्रोतः लौकिकसंस्कृतस्तवाः। लौकिकसंस्कृतस्तववाङ्मयमतिविस्तृतं यस्य विपुलमाकलनमस्मिन्निबन्धेऽशक्यम्। अथातोऽत्र निबन्धे संक्षेपेण तस्य सिंहावलोकनमात्रं प्रस्तूयते। परन्तु यतः सर्वेषा-मास्तिकविचारसन्दर्भाणां भारतीयलौकिकसाहित्ये वैदिकसंहितासु प्रत्यक्षतः परोक्षतो वा उत्सः परिलक्ष्यतेऽतस्तत्र लभ्यमानाः केचन सन्दर्भा अधस्तात्लिख्यन्ते।

**वैदिकसंहितासु आदित्यानां संख्या—**

ऋग्वेदसंहितायां महनीयाया अदितिदेव्याः[१] आदित्या अभवन्। एकत्र तेषां संख्या षट् निर्दिष्टा विद्यते—

> इमा गिर आदित्येभ्यो घृतस्नूः सनाद्राजभ्यो जुह्वा जुहोमि।
> शृणोतु मित्रो अर्यमा भगो नस्तुविजातो वरुणो दक्षो अंशः॥
>
> ( ऋ० सं० २, २७, १ )

---

१. अदितिदेव्या महनीयत्वे कारणभूतो मन्त्रोऽत्र उपस्थाप्यते—

> अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः।
> विश्वेदेवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वम्॥
>
> ( ऋ० सं० १, ८९, १० )

अत्र (१) मित्रः, (२) अर्यमा, (३) भगः, (४) वरुणः, (५) दक्षः, (६) अंशश्चेति षण्णामादित्यानां नामान्यभिहितानि।

समग्रमिदमुपरिष्टाद्यतो मन्त्रमुद्धृतं तत्सूक्तमादित्यविषयकवर्णनस्तुतिजुष्टम्। अनन्तरवर्त्तिनि द्वितीये तृतीये च मन्त्रे आदित्यमहिमद्रष्टा सूक्तस्य ऋषिर्निवेदयति—

दीप्तिमन्तो धार (वृष्टि)-पूता अनुग्रहशीला अनवद्या अवृजिना अहिंसका पूता आदित्या मित्र-वरुणार्यमाणः अद्येमां ( मदीयां ) स्तुतिं जुषन्तु। (२) ते उरवः (महान्तः), गभीराः अदब्धासः दिप्सन्तो बहुदृष्टिमन्त आदित्याः प्राणिनामन्तर्बहिः सर्वत्र पापपुण्यानि च पश्यन्ति। दूरस्था अपि पदार्था तस्य कृते ( सर्वद्रष्टृत्वेन ) निकटस्था एव भवन्ति। अत्र षट्स्वादित्येषु मित्रपदस्य सर्वप्रथम उल्लेखो विद्यते। पारसीक-भाषायां मिहिरशब्दः सूर्यार्थे प्रयुज्यते। पारसीकभाषा खलु यत आर्यपरिवारशाखाभूतासु भारतेरानी-(इण्डो-ईरानियन) भाषास्वेकाऽतः संस्कृतभाषापदेन सूर्यवाचकमिहिर-शब्देनैतस्य पारसीकमिहिरपदस्यैक्यं विकर्तनार्कमार्त्तण्डमिहिरारुणपूषण इत्यमरकोशः ( १, ४, २९ ) न विस्मयकरम्। अवेस्ताभाषायां मित्रशब्दस्य समानार्थकल्पो 'मिथ'-शब्दस्य प्रगोगो मिलति, येन अवेस्ताभाषा प्राचीनतमा पारसोकभाषेत्यपि कथञ्चिद् वक्तुं शक्यते। एतस्य मित्रपदस्य विषये ऋग्वेदे एकं मित्रसूक्तं (ऋ० ३।५९ १-३) वर्तते, यस्य केचन मन्त्रा अधस्तादुपस्थाप्यन्ते। अस्मिन् सूक्ते नव ऋचो विद्यन्ते, याः सर्वा मित्रस्तवनसन्दर्भिताः—

मित्रो जजान्यातयति ब्रुवाणो मित्रो दाधार पृथिवीमुत द्याम्।
मित्रः कृष्टीरनिमिषाभि चष्टे मित्राय हव्यं घृतवज्जुहोत॥ १।
प्र स मित्र मर्तो अस्तु प्रयस्वान् यस्त आदित्य शिक्षति व्रतेन।
न हन्यते न जीयते त्वोतो नैनमंहो अश्नोत्यन्तितो न दूरात्॥ २।
अनमीवास इळया मदन्तो मितज्ञवो वरिमन्ना पृथिव्याः।
आदित्यस्य व्रतमुपक्षियन्तो वयं मित्रस्य सुमतौ स्याम॥ ३॥

एतेषां मन्त्राणामर्थः सायणभाष्ये द्रष्टव्यः। एतावदेवात्रावधेयं यद्द्वितीयतृतीय-मन्त्रयोर्मित्रस्य पर्यायरूपेणादित्यपदस्य प्रयोगो विद्यते। इत्थमेव च सवितृशब्दोऽपि समानसन्दर्भे मिलति सूर्यस्य—

उत यासि सवितस्त्रीणि रोचनोत सूर्यस्य रश्मिभिः समुच्यसि।
उत रात्रीमुभयतः परीयस उत मित्रो भवसि देव धर्मभिः॥
( ऋ० ५।८१।४ )

एतत्सवितासूक्तम्। अग्रिममपि नवर्चं सवितासूक्तमेव।

संक्षेपेणात्र फलितार्थं यदृग्वेदे मित्रादित्यसूर्यसवितृप्रभृतिपदानि पर्यायकल्पानि, प्रवृत्तिभेदबुद्ध्या च सन्दर्भविशेषेषु केषुचित् प्रयुक्तानीति ।

सूक्ते चैकस्मिन् ऋग्वेदीये ( ९, ११४, ३ )—

सप्त दिशो नानासूर्याः सप्त होतार ऋत्विजः ।
देवा आदित्या ये सप्त तेभिः सोमाभि रक्ष न इन्द्रायेन्दो परि स्रव ॥

आदित्याश्रयस्थलभूता या सप्त दिशः ( सोमवतीदिशं विहाय ), अथ च ये सप्त होतारः पुरोहितास्तथा **ये सप्त आदित्याः** ( मार्त्तण्डं विना ) तैः सह नो रक्षन्तु इन्द्राय च सोमं स्रवतु ।

अस्यामृचि स्पष्टतः सप्तानामादित्यानामुल्लेखो वर्त्तते । सोमवत्या दिशोऽष्टमोऽप्यादित्योऽस्ति, यः किल टीकाकृतां मतेन मार्त्तण्डनामकः । ऋग्वेदसंहितायामेवोक्तं किलादितेरष्टौ पुत्रा आसन्—मित्रः, वरुणः, धाता, अर्यमा, अंशः, भगः, विवस्वान्, आदित्यश्च । एतेषु सप्त आदाय देव्यदितिरगमत् । अष्टमं चाकाशे व्यसृजत्[1] ।

शतपथब्राह्मणे 'कतमे आदित्या' इति जिज्ञास्यमाने "द्वादश मासाः संवत्सरस्यैत आदित्याऽएते हीदꣳसर्वमाददाना यान्ति (यन्ति) तस्मादादित्याऽइति"[2] ।

ऐतरेयब्राह्मणे आधुनिकवैज्ञानिकमान्यतानुसारि आदित्यस्य वर्णनं लभ्यते । अनयैव दिशा अनेकेषु ब्राह्मणारण्यकादिषु विविधरूपेणादित्यस्योल्लेखा दरीदृश्यन्ते । तत्रोक्तम्—"आदित्याद्वै चन्द्रमा जायते[3]" अग्रे चाधिकमहत्त्वमयी वैज्ञानिकी दृष्टिरुपलभ्यते । तत्रोक्तं यदस्तंगतोऽप्यादित्यस्तत्त्वतो नास्तं यात्यपि तु पृथिव्या अपरे पार्श्वे सरति । वैज्ञानिकमतेन निरन्तरं बाभ्रम्यमाणायाः पृथिव्या यो भागः सूर्यस्य प्रकाशसम्मुखे भवति, तत्र सूर्यो दृश्यते, तदा च दिनं भवति, यश्च भागः पश्चपार्श्वेऽवतिष्ठति, तत्र रात्रिर्जायते । लोकव्यवहारे सूर्योऽस्तंगत इति प्रोच्यते ।

शतपथब्राह्मणानुसारेण वर्षगतद्वादशमासमधिकृत्य द्वादशादित्यानां या व्यवहारकल्पना क्रियते, तस्याः पुष्टिरनेकेषु पुराणेषु महाभारते च परिलभ्यते ।

---

१. हिन्दी-ऋग्वेद (इण्डियन प्रेस पब्लिकेशन) प्रा० लि० प्रयाग, भूमिका पृ० ४ ।

२. शतपथब्राह्मणे—( का० ११, प्रपा० ४, अध्याये ६ पृष्ठे ) ।

३. ऐतरेयब्राह्मणे, ( तारा-प्रिंटिंग वर्क्स, वाराणस्याः प्रकाशितम्, १९८३ ईशवीये वर्षे ), पृ० १३३२ ।

ऋग्वेदसंहितायां बहूनि सूक्तानि पूर्णतोंऽशतो वा सवितृसंबद्धानि लभ्यन्ते(१।३५) सूक्ते, मन्त्रे (२) द्वितीये कथितं वर्त्तते अन्धकारपूर्णे (कृष्णरजसा परिपूर्णे) अन्तरिक्षेऽसकृत् न्राभ्रम्यमाणः सविता देवान् मनुष्यांश्च स्व-स्वकर्त्तव्येषु निवेशयन् हिरण्मयेन रथेन परिभ्रमन् ( सर्वदा ) भ्रमन्नेव लक्ष्यते—

आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च।
हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥

सूक्तमेतदादित्यविषयकतत्त्वानुशीलनदृशाऽतीव विलक्षणं नानारूपवर्णनविचित्रं वर्त्तते। अनुशीलकैस्तत्रैव तत्त्वानि विचेतव्यानि। अस्य सूक्तस्याङ्गिरा-ऋषिः कथयति अष्टमे-नवमे च मन्त्रयोः—सूर्येणाष्टौ दिशः ( अष्टौ ककुभः—एतेन तद्युगे अष्टानां दिशां परिकल्पना अवर्त्तत इति सूच्यते ) प्रकाशिताः पृथिव्याः प्राणिनः भुवनत्रयं सप्तसिन्धूँश्च प्रकाशितास्तत्र स पर्यभ्रमत्। सुवर्णाक्षः सविता हव्यदात्रे यजमानाय वरणीयानि द्रव्याणि प्रदायात्रागात्। सुवर्णपाणिर्विचर्षणिः सविता उभयोः द्यावापृथिव्योः परिभ्रमणं ( गमनं ) करोति, रोगादींश्च दूरीकरोति ( वैज्ञानिकदृष्टया रोगाणुकीटकृम्यादि-नाशकत्वात् )। उदीयमानो लोकस्य तमोऽन्धकारमपाकरोति तथा च तथाविधेन तेजसा द्यामावृणोति[1]। दशमे मन्त्रे कथयति—स्वर्णहस्तः, प्राणदः ( प्राणवान् = असुरः ) सुनेता, हर्षदायकोऽथ च धनदः सविता अस्माकमभिमुखोभूय आयातु, यातुधानान् राक्षसांश्च निराकरोतु, तथा च प्रतिरात्रिस्तुतिं प्राप्यावतिष्ठतु।

इत्थं च प्राचीनतमाया वैदिकसंहिताया ऋग्वेदीयायाः कानिचन वचनानि समुद्धृतानि। एवमेव शुक्लकृष्णयजुर्वेदमन्त्रेषु अन्यासु च संहितासु सूर्यसम्बन्धि-मन्त्राणां प्राचुर्यमस्ति। अथर्वसंहितायां तु तेषां संख्या बृहती वर्त्तते। वाजसनेयि-संहितायामपि तेषां सूर्यसम्बन्धिमन्त्राणां प्राचुर्यं विद्यते। त्रयस्त्रिंशतमेऽध्याये बहवः सूर्यसम्बन्धिमन्त्रा दरीदृश्यन्ते।

प्रसिद्धः सूर्योपस्थापनान्यतरो मन्त्रोऽत्रैवास्ति, यस्मिन् हि सूर्यो जगतः (चरस्य) तस्थुषश्च ( अचरस्य ) आत्मत्वेन ज्ञापितः। अग्रे च बहवः सूर्यमहिम्नः सूचका मन्त्रा अत्र सन्ति। उदुत्यञ्जातवेदसमित्यादिसूर्योपस्थापनमन्त्रोऽप्यत्रास्ति।

निष्कर्षरूपेण निगदितुं शक्यते यन्निखिलेऽपि संहितावाङ्मये सूर्यस्य स्थानं यद्यपि इन्द्रवरुण-अग्निप्रभृतिदेवापेक्षया द्वितीयं भवति; तथापि द्युस्थानीयदेवेषु तस्यातीव महत्त्वं सर्वत्र सोसूच्यते।

---

१. ऋ० सं० १।३५।८-९।

वैदिकसंहितावाङ्मयविषये एतावदेव विवेचनेनालमत्र। ब्राह्मणग्रन्थस्यारण्यकस्य चैतादृशो विस्तारोऽस्ति अथ च विभिन्नेषु सन्दर्भेषु सूर्यस्य विस्तृतं वर्णनं वर्तते, यदत्र तेषां विवरणोपस्थापनस्यानवसरः।

शतपथब्राह्मणे ऐतरेये अन्येषु च ब्राह्मणेषु विविधेष्वारण्यकेषु तत्सम्बन्धिचर्चां विहाय उपनिषत्सु तस्य विषये किञ्चिन्निवेद्यते।

**उपनिषत्सु सूर्यसन्दर्भाः —**

उपनिषत्स्वपि सूर्यस्य विषये तथैव प्रचुरं विवरणं दृश्यते, यथा खलु ब्राह्मणारण्यकयोः। अत्र साक्षात्परोक्षतो वा भगवद्विवस्वत्सम्बद्धा उपनिषत्सु निबद्धा प्रमुखा प्रसङ्गाः समुपस्थाप्यन्ते। अत्रैतदवधार्यं यदेतासामुपनिषदां समाविर्भावकालविषय इदमित्थमितिरूपेण निर्धारयितुं न पार्यते; तथापि ता उपनिषदो निगद्यते।

ईशावास्योपनिषद्धि खलु सर्वासूपनिषत्सु पुरातनतमेति वैदिकेषु प्रसिद्धिः। यतो हि यजुर्वेदीय-वाजसनेयि-शाखासंहितायां चत्वारिंशेऽध्याये वर्तते—

> हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्।
> तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये[1]॥
> पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन्समूह।....(ईशा० उ० १५-१६)

अत्रैतदेव निगाद्यं सत्यधर्माय दृष्टये पूषा प्रार्थ्यते हिरण्मयेन पात्रेण यत्सत्यस्य मुखमपिहितं तस्यापावरणाय।

तत्रैका प्रसिद्धा सूर्योपनिषत्, तदुपक्रमे लिखितम्—अथ सूर्याथर्वाङ्गिरसं व्याख्यास्यामः। येनास्या उपनिषदः प्रामाण्यं सूच्यते। अस्यामेवोपनिषदि प्रोच्यते—"सूर्य आत्मा जगतस्तस्थुषश्च। सूर्याद्वै खल्विमानि भूतानि जायन्ते। सूर्याद्यज्ञः पर्जन्योऽन्नमातमानमस्त

---

१. डा० वेबरसम्पादिते महीधरकृतवेदीयभाष्यजुष्टे माध्यन्दिनीयायां वाजसनेयिसंहितायां 'तत्त्वं पूषन्नपावृणु'—इत्यारभ्य 'व्यूह रश्मीन् समूह' इत्यंशो नास्ति; तथापि काण्वशाखीयोक्ताध्याये स भागो विद्यते। प्रसिद्धेषु सर्वप्रचलितेषु दशोपनिषत्सु मन्त्रो वर्त्तते। हिरण्मयेन पात्रेणेत्यादि पङ्क्तौ महीधरेण लिखितम्—'हिरण्यमिव हिरणायं ज्योतिर्मयं यत्पात्रं पिबति, यत्र स्थिता रश्मयो रसानिति पात्रं मण्डलम्, तेन तेजोरूपेण मण्डलेन सत्यसूर्यस्यादित्यमण्डलस्याविनाशिनः पुरुषस्येत्यादि, पृ० ९८९—चौखम्भा-संस्कृत-ग्रन्थमालाप्रकाशनम्।

आदित्य। त्वमेव प्रत्यक्षं कर्मकर्ताऽसि। त्वमेव प्रत्यक्षं ब्रह्माऽसि विष्णुरसि। त्वमेव प्रत्यक्षं रुद्रोऽसि। त्वमेव प्रत्यक्षम् ऋगसि। त्वमेव प्रत्यक्षं यजुरसि। त्वमेव प्रत्यक्षं सामासि। त्वमेव प्रत्यक्षमथर्वासि" इत्यादि। एतेनोपनिषदृषेः वरेण्यं सवितारं प्रति यो दृष्टिबोधोऽभिलक्ष्यते, तस्य महत्त्वमुपरिनिर्दिष्टोपनिषद्वाक्यखण्डैरभिज्ञायते। अस्यामादित्यं प्रति सर्वकर्मकर्तृत्व-सर्वरूपत्व-सर्वमहनीयत्व-सर्ववेदाद्युपास्यत्वादिभावस्य सङ्केतो वर्त्तते। सूर्य एव ब्रह्मा-विष्णु-रुद्र-स्वरूप इति।

सूर्यतापिन्युपनिषदोऽपि प्रसङ्गोऽत्रावश्यमेव घ्येयम्। सनत्कुमारस्य जिज्ञासां परिलक्ष्य तस्याः समाधानाय तस्यामुपनिषदि—"तच्छ्रुत्वा पितामह आह—शृणोतु भवानेकमनाः सर्वदा यमामनन्ति, यन्नमस्यन्ति देवाः स ब्रह्मा, स शिवः, स हरिस्सेन्द्रः सोऽक्षरः परमः स्वराट् स सूर्यो भगवान् सहस्रांशुः। तं सूर्यं भगवन्तं सर्वरूपिणं निगमा बहुधा वर्णयन्ति। कश्यपः पश्यको भवति यत्सर्वं परिपश्यतीति सौक्ष्म्यात्।"

षट्पटलात्मकेऽस्मिन् सूर्यतापनीये सूर्योपासनार्घ्यदान-ध्यान-न्यास-पूजाविधान-जप-मन्त्र-यन्त्र-बीजोद्धारादिविषयाणां सूर्योपासनासम्बद्धानां सम्यगुपदेशः क्रियते। अतोऽस्या उपनिषदो महत्त्वं स्वतः सिध्यति, तत्रत्या दृष्टिश्च परितः स्फुटीभवति। अत्रत्ये पञ्चमे पटले यन्त्रनिबन्धनीयद्वादशावरणानां विवरणमपि लभ्यते।

नेत्ररोगविनाशाय नित्यपठनीया नेत्रोपनिषद्यपि दिव्यभास्करः केन्द्रस्थो देवो यथा—'चक्षूरोगान् शमय शमय' इत्यारभ्याग्रे कथ्यते—"ॐ नमश्चक्षुस्तेजोदात्रे दिव्यभास्कराय। ॐ नमः करुणाकराय अमृताय"। अधिकमत्र न विस्तारयामि, प्रसङ्गमनुसरामि।

गायत्रीरहस्योपनिषद्यपि गायत्रीमन्त्रविवृतार्थबोधने प्रोक्तं सवितुरिति सविता सावित्रमादित्यो वै—अस्मिन्प्रसङ्गे आदित्यस्य उल्लेखो महत्त्वमावहतीति जानन्ति सर्वे। मन्त्राणां महनीयतमो गायत्रीमन्त्रः स्वयमेव सवितुर्देवस्य ध्यानं यः सर्वेषां लोकानां धियं सत्कर्म प्रति, सदाचारं प्रति सच्चिन्तनं प्रति प्रचोदयात्।

इत्थमेव सावित्र्युपनिषद उपक्रम एव प्रोच्यते—"कः सविता, का सावित्री? अग्निरेव सविता पृथिवी सावित्री" इति। अत्राग्निपदेन सर्वं तैजसं तत्त्वं निखिलं प्रकाशमयं प्रकाशात्मकं प्रकाशकं च ज्ञानविज्ञानादिरूपं तत्त्वं सौरमेवेति सूच्यते, येन सूर्यस्य महत्त्वं प्रतिपादितम्। उपनिषत्सु सूर्यसम्बन्धे एतावदेवोक्त्वोपसंहरामि विरमामि च।

वेदेषु मुख्यतः संहिताग्रन्थेषु ब्राह्मणारण्यकवाङ्मये च विभिन्नेषु सन्दर्भेषु नानाख्याभिर्यत्र तत्र चार्थभेदसहिताभिः सूर्यस्य निर्देश उपलभ्यते। आदित्यः, पूषा, विवस्वान्, अर्यमा, मित्रः, सविता सूर्यादयश्चेति विविधैर्नामभिरेक एव देवोऽभिज्ञातः। पौराणिकदेवपरिवारे सूर्यस्य वैदिकद्युस्थानीयस्य देवस्यैतादृशं महनीयं स्वरूपं समुपलभ्यते, येन पञ्चदेवोपासकस्मार्तमते अन्यतमस्तस्य विशिष्टं स्थानमभूत्। सूर्योपासनायाश्च वैशिष्ट्यं पौराणिकेषु वैदिकधर्मानुयायिषु स्मार्तेषु चोररीबभूव। सनातनधर्मानुयायिनां दैनन्दिने सन्ध्योपासनादिकर्मणि प्राणायामसूर्यार्घ्य-गायत्रीजपादिषु सूर्यदेवस्याप्रतिमं स्थानमभवत्।

वाल्मीकिरामायणे महाभारतेऽष्टादशपुराणेषु, उपपुराणेषु सर्वत्र सूर्यस्योपासनाऽतीव महत्त्वं भजते स्म। आरोग्यलाभार्थं कुष्ठादिमहारोगनिवारणार्थं बुद्धिलाभार्थं जपप्राप्त्यर्थं सौभाग्यप्राप्त्यर्थं बुद्धिवैशद्योपलब्धये, किं बहुना, सर्वमनोरथपूरणाय चास्य प्रत्यक्षदेवस्योपासना समजनि। आरोग्यं भास्करादिच्छेदित्यादिसुभाषितभूताः लोकोक्तयः प्राचलन्। विशिष्टतमे मत्स्यपुराणे सूस्य ब्रह्मविष्णुशिवानां समकक्षत्वं तथा च त्रिदेवानामाधारत्वं चोद्घोषितं वर्तते—

ब्रह्मा विष्णुश्च भगवान्मार्तण्डो वृषवाहनः।
अष्टौ च वसवस्तद्वदेकादशगणाधिकाः॥
लोकपालाधिपालाश्च पितरो मातरस्तथा।
इमा विभूतयः प्रोक्ताश्चराचरसमन्विताः॥
ब्रह्माद्याश्चतुरो मूलमव्यक्ताधिपतिः स्मृतः।
ब्रह्मणा चाथ सूर्येण विष्णुनाथ शिवेन वा।
अभेदात्पूजितेन स्यात्पूजितं सचराचरम्॥
ब्रह्मादीनां परं धाम त्रयाणामपि संस्थितिः।
वेदमूर्तावतः पूषा पूजनीयः प्रयत्नतः॥

(मत्स्य० पु० ५२।२१–२४)

एतत्सर्वं पुरस्ताद्विविच्यते संक्षेपेण।

**वाल्मीकिरामायणीयाः सन्दर्भाः—**

स्तोत्रवाङ्मये सूर्यस्य संस्कृतभाषानिबद्धानां स्तोत्राणां संख्या गणयितुं न पार्यते। दिङ्निर्देशरूपेणेह केषाञ्चनातिप्रसिद्धानां स्तवानाम्भगवत आदित्यस्य वर्णनमुल्लिख्यते।

पुराणेषु सूर्यस्तवानां विषये संक्षेपेणोक्तमेव। अत्र स्वतन्त्रस्तुतिषु तस्य सङ्केत उपस्थाप्यते। वाल्मीकिरामायणे रामरावणयुद्धप्रसङ्गे यदा महामुनिरगस्त्यो दाशरथिं

रामं युद्धश्रान्तमलक्ष्यत्, तथा तमुपेत्य सूर्यस्तवनार्थं प्रेरयति स्म। अतिप्रसिद्धोऽयं वाल्मीकिरामायणस्य आदित्यहृदयस्तवः। एतस्योपक्रमं यथाऽस्ति तथाऽधस्तादुद्ध्रियते—

ततो युद्धपरिश्रान्तं समरे चिन्तया स्थितम्।
रावणं चाग्रतो दृष्ट्वा युद्धाय समुपस्थितम् ॥ १।
देवतैश्च समागम्य द्रष्टुमभ्यागतो रणम्।
उपगम्याब्रवीद्राममगस्त्यो भगवांस्तदा ॥ २।
राम ! राम ! महाबाहो ! शृणु गुह्यं सनातनम्।
येन सर्वानरीन् वत्स समरे विजयिष्यसि ॥ ३।
आदित्यहृदयं पुण्यं सर्वशत्रुविनाशनम्।
जयावहं जपेन्नित्यमक्षयं परमं शिवम् ॥ ४।
सर्वमङ्गलमाङ्गल्यं सर्वपापप्रणाशनम्।
चिन्ताशोकप्रशमनमायुर्वर्धनमुत्तमम् ॥ ५। इत्यादि।

एतस्यादित्यहृदयस्तोत्रस्य महनीयत्वं त्रिधा परिलक्ष्यते—

(१) प्रथमतः स्तोत्रमेतन्महर्षिणा स्वकीये आदिकाव्यभूते रामायणे निगदितम्। प्रसङ्गश्चाप्यत्रातीव विशिष्टं वर्तते। युद्धपरिश्रान्तं युद्धाय समुपस्थितं रावणं चाग्रतः पश्यन्तं समरे चिन्तया स्थितं रामं प्रति अमुष्यादित्यहृदयस्तवस्योपदेशः, (२) द्वितीयश्चास्य स्तवस्योपदेष्टा भगवानगस्त्यः। अस्मिन्सन्दर्भे विशेषरूपेण अवधातव्यमत्र यन्महर्षिणा वाल्मीकिना श्रीमन्तमगस्त्यं भगवद्विशेषणेन विशिष्टीकृतम्। यः खलु रामहितचिन्तकोऽगस्त्यो रामस्य विजयाकाङ्क्षीति तेन स्वयमेवोपागम्याब्रवीत्, (३) तृतीयश्चासौ स्तवः पुण्यफलदायकः, सर्वशत्रुविनाशकः, जयावहः, सर्वपापप्रणाशक आयुर्वर्द्धकश्चिन्ताशोकप्रशमनकरो यया चिन्तया रामस्तदा ग्रस्तो बभूव। अथ च सर्वमङ्गलमाङ्गल्यमप्येतदादित्यहृदयस्तोत्रम्। अन्तिमे चास्योपसंहारपद्ये सूचितं कथासम्बद्धं वृत्तं यद् सूर्यवंशीयस्य श्रीरामस्य प्रवर्त्तकः श्रीसूर्यस्तदाऽब्रवीद् यदा रावणं युद्धार्थमुपागतं प्रेक्ष्य सुप्रीतो राघवस्तस्य राक्षसराजस्य वधार्थं धनुरादत्तवान्—

अथ रविरवदन्निरीक्ष्य रामं मुदितमनाः परमं प्रहृष्यमाणः।
निशिचरपतिसंक्षये विदित्वा सुरगणमध्यगतो वचस्त्वरेति ॥इति।

**महाभारतीयाः सन्दर्भाः—**

**महाभारते** यद्यप्यनेकत्र सूर्यवर्णनानि वर्तन्ते, विशेषतश्च कुन्ती-कर्णयोराख्यानप्रसङ्गे; तथाप्यत्र युधिष्ठिरप्रोक्तं सूर्यस्तोत्रस्य कांश्चन श्लोकानत्रोद्धरामि—

त्वं भानो ! जगतश्चक्षुस्त्वमात्मा सर्वदेहिनाम् ।
त्वं योनिः सर्वभूतानां त्वमाचारः क्रियावताम् ॥
त्वं गतिः सर्वसांख्यानां योगिनां त्वं परायणम् ।
अनावृतार्गलाद्वारं त्वं मतिस्त्वं मुमुक्षताम् ॥
त्वया संधार्यते लोकस्त्वया लोकः प्रकाश्यते ।
त्वया पवित्रीक्रियते निर्व्याजं पाल्यते त्वया ॥
त्वामुपस्थाय काले तु ब्राह्मणा वेदपारगाः ।
स्वशाखाविहितैर्मन्त्रैरर्चन्त्यृषिगणार्चित ॥ इत्यादि ।

अत्र एतस्य जगतः सृष्टि-स्थितिविधायकरूपेण सर्वकर्मप्रेरकत्वेन, सनातन-धर्मानुष्ठानाधिष्ठानाधारत्वेन सांख्ययोगादिदार्शनिकपरिकल्पनानिधानत्वेन मुमुक्षूणां चरमगम्यत्वादिप्रतिपाद्यत्वेन सूर्यस्य यो महिमा विवृतस्तदस्माकीनसनातनधर्मराद्धान्त-दृष्टिबोधेन सम्यक् सामञ्जस्यं भजते ।

वैज्ञानिकदृष्ट्याऽमुष्मिन्स्तवेऽग्रे एतदपि निवेदितं यदेतेनैव स्तवकारेण स्वधर्म-मयैरंशुभिर्भूर्लोकस्य निखिलस्य रसरूपं जलांशमादाय लोकोपकाराय प्रावृषि तद्रसं सूर्येण मुच्यते (तुलनीयम्—"आदानं हि विसर्गाय सतां वारिमुचामिव" कालिदासो रघुवंश-महाकाव्ये) । भगवत आदित्यस्य सर्जक-पालकरूपस्य सन्दर्भे वर्ण्यस्तोत्रस्य मान्यताऽत्र प्रदर्शिता । तस्यैव प्रलयकरं संहारकरूपमपि वर्णितं स्तोत्रेऽस्मिन् वर्त्तते यथा—

संहारकाले सम्प्राप्ते तव क्रोधविनिःसृतः ।
संवर्तकाग्निस्त्रैलोक्यं भस्मीकृत्यावतिष्ठते ॥
त्वद्दीधितिसमुत्पन्ना नानावर्णा महाघनाः ।
सैरावताः साशनयः कुर्वन्त्याभूतसंप्लवम् ॥
कृत्वा द्वादशधात्मानं द्वादशादित्यतां गताः ।
संहृत्यैकार्णवं सर्वं त्वं शोषयसि रश्मिभिः ॥

एषा च वैज्ञानिकानामद्यतनानां सर्वविख्याता मान्यता सर्वैरुररीक्रियते यत् सौरमण्डलीयलोकानां ग्रहादीनां विशेषतश्च भूर्लोकस्योत्पत्तिस्थितिसंहृतयः सूर्याधीनाः[1] ।

इत्थं च महाभारते नानाप्रसङ्गेषु सूर्यस्य नानास्तवा निगदिता विद्यन्ते । अत्रैकस्य स्वयंभुवप्रोक्तस्य सूर्याष्टोत्तरशतनामस्तोत्रस्य काँश्चनांशानधस्तादुल्लिखामि ।

---

१. एतस्मिन्नेव सूर्यस्तवेऽनुश्लोकमेव वरदानसन्दर्भे सूर्येणोक्तम् ।

एतस्मिन् प्रसङ्गे एतदवधार्यं यदेतत्स्तोत्रमष्टोत्तरशतनामात्मकं पार्थाय महात्मने समुपदिष्टवान् । तत्रैव यथा—

धौम्येन तु यथा प्रोक्तं पार्थाय सुमहात्मने ।
नामाष्टोत्तरं पुण्यं शतं तच्छृणु भूपते ॥

अग्रे च—

एतद्वै कीर्तनीयस्य सूर्यस्यामिततेजसः ।
नामाष्टशतं पुण्यं प्रोक्तमेतत्स्वयम्भुवा ॥

एतदत्र विशेषेणावधेयं यन्महाभारतकृताऽस्य स्तवपाठस्य महत्फलं निगदितम् । भगवतो भास्करस्य वैशिष्ट्यकीर्तनमुखेन "द्वादशात्माऽरविन्दाक्षः पिता माता पितामहः । स्वर्गद्वारं प्रजाद्वारं मोक्षद्वारं त्रिविष्टपम्" । अग्रे च तस्य विश्ववन्दनीयत्वमपि समुद्घोषितम्—' सुरगणपितृयक्षसेवितं ह्यसुरनिशाचरसिद्धवन्दितम् ।" एतस्य पाठेन सूर्योदये यः सुसमाहितः पठेत्स पुत्रदारान् धनरत्नसंचयान् लभेत्, जातिस्मरतां नरः सदा धृतिं च मेधां च विन्दते पुमान् इत्यादि ।

**ब्रह्मपुराणीयाः सन्दर्भाः—**

ब्रह्मपुराणं किल भारतोयपौराणिकपरम्परया पुराणेष्वादिम इति विष्णुपुराणोक्तिः—

आद्यं सर्वपुराणानां पुराणं ब्राह्ममुच्यते ।
अष्टादश पुराणानि पुराणज्ञाः प्रचक्षते ॥

इतिकृत्वा ब्रह्माण्डपुराणतः सर्वतः प्रथममादित्यसन्दर्भमत्र संक्षेपेण सूच्यते । तत्राष्टाविंशेऽध्याये ओण्ड्र-(ओडिशा)देशस्य कोणादित्यस्य ( कोणार्कस्य ) प्रसङ्गत उपक्रम्य तत्रेदमुक्तम्—

यावन्न दीयते चार्घ्यं भास्कराय यथोदितम् ।
तावन्न पूजयेद्विष्णुं शङ्करं वा सुरेश्वरम् ॥

तदनन्तरं च सूर्यार्घ्यस्य माहात्म्यमपि समुद्घोषितम्—

यं यं काममभिध्यायन् सूर्यायार्घ्यं प्रयच्छति ।
तस्य तस्य फलं सम्यक् प्राप्नोति पुरुषः सुधीः ॥

एतस्मिन्प्रसङ्गे विशेषत एतत्सूचनीयं विद्यते यत्सूर्यार्घ्यस्य महन्महनीयत्वं नानापुराणादिषु सूर्योपासनसन्दर्भे लक्ष्यते, यथा स्कन्दपुराणान्तर्गते काशीखण्डे निगदितम्—

एभिः सप्ततिसंख्याकैः पुण्यैः सूर्यस्य नामभिः ।
प्रणवादिचतुर्थ्यन्तैर्नमस्कारसमन्वितम् ॥
प्रत्येकमुच्चरन्नाम दृष्ट्वा दृष्ट्वा दिवाकरम् ।
विगृह्य पाणियुग्मेन ताम्रपात्रं सुनिर्मलम् ॥
जानुभ्यामवनीं गत्वा परिपूर्य जलेन च ।
करवीरादिकुसुमै रक्तचन्दनमिश्रितैः ॥
उपमौलि समानीय तत्पात्रं नान्यदृङ्मनाः ।
प्रतिमन्त्रं नमस्कुर्यादुदयास्तमये रविम् ॥
अनया नाम सप्तत्या महामन्त्ररहस्यया ।
एवं कुर्वन्नरो जातु न दरिद्रो न दुःखभाक् ।
व्याधिभिर्मुच्यते घोरैरपि जन्मार्जितैरपि ।
विनौषधैर्विना वैद्यैर्विना पथ्यपरिग्रहैः ।
कालेन निधनं प्राप्तः सूर्यलोके महीयते ॥

एतदत्र विशेषतोऽवधेयं यत्समाहितचेता यथाविध्यर्घ्यप्रदानमवश्यमेवोक्तानि फलानि सद्यो लभते, इत्यभियुक्तवचनम् । भविष्योत्तरपुराणस्य चादित्यहृदयस्तोत्रस्यानेकेषु पद्येषु समाहात्म्याः सूर्यायार्घ्यदानमन्त्राः पठिताः सन्ति । अत्र निदर्शनरूपेणैकं पद्यमधस्ताल्लिखितं द्रष्टव्यम्—

सर्वदेवाधिदेवाय चाधिव्याधिविनाशिने ।
अर्घ्यं गृहाण मे देव सर्वव्याधिर्विनश्यतु ॥

साम्प्रतं प्रकृतं ब्रह्मपुराणप्रसङ्गमनुसरामि । अग्रिमेषु पञ्चस्वध्यायेषु क्रमशो विस्तरेण सूर्यपूजनव्रतादिविधानं समग्रस्य जगतस्तैजसादादित्याख्यतत्त्वात्सर्जनादित्याख्यानादिवर्णनं[1] द्वादशादित्यनामकर्मसंसूचनं तदवसाने चोक्तम्—

आभिर्द्वादशभिस् (मूर्तिभिस्)-तेन सवित्रा परमात्मना ।
कृत्स्नं जगदिदं व्याप्तं मूर्तिभिश्च द्विजोत्तमाः ॥

---

१. अस्मिन् त्रिंशेऽध्याये द्वादशनामप्रसङ्गे प्रोक्तम्—

इन्द्रो धाताऽथ पर्जन्यस्त्वष्टा पूषार्यमा भगः ।
विवस्वान् विष्णुरंशश्च वरुणो मित्र एव च ॥
आभिर्द्वादशभिस्तेन सूर्येण परमात्मना ।
कृत्स्नं जगदिदं व्याप्तं मूर्तिभिश्च द्विजोत्तमाः ॥

अग्रिमे एकत्रिंशेऽध्याये आदित्यतन्नाममाहात्म्यवर्णनं ततः परं द्वात्रिंशे मार्त्तण्ड-जन्ममाहात्म्यवर्णनं त्रयस्त्रिंशे च मार्त्तण्डमाहात्म्यवर्णन-सूर्याष्टशतनाम-तन्महिमसंसूचनं तस्य फलश्रुतौ चावसाने—

इमं स्तवं देववरस्य यो नरः प्रकीर्त्तयेच्छुद्धमनाः समाहितः ।
विमुच्यते शोक इवाग्निसागराल्लभेत कामान्मनसा यथेप्सितान् ॥
(ब्र० पु० ३३।४९)

ब्रह्मपुराणमधिकृत्यैतावता संक्षेपेण निवेद्य मत्स्यपुराणप्रसङ्गमुपस्थापयामि ।

**मात्स्ये सूर्यसन्दर्भाः—**

सर्वतः प्रथमं मात्स्यप्रसंगे श्लोकाः केचन न विस्मर्त्तव्याः—

ब्रह्मा विष्णुश्च भगवान्मार्तण्डो वृषवाहनः ।
इमा विभूतयः प्रोक्ता चराचरसमन्विताः ॥
ब्रह्मादीनां परं धाम त्रयाणामपि संस्थितिः ।
वेदमूर्तावतः पूषा पूजनीयः प्रयत्नतः ॥

मत्स्यपुराणे द्वात्रिंशोत्तरशततमेऽध्याये सूर्यविषये प्रसङ्गतः सूर्यस्य परिणाम-गत्योर्वर्णनं निर्दिष्टं यच्चाधुनिकविज्ञानमतेन न समीचीनम्; तथापि पौराणिकरीत्या पुराणप्रचलितपद्धत्या च तत्र बहूनि तत्त्वानि निर्दिष्टानि—

अहस्तु चरते नाभेः सूर्यो वै मण्डलं क्रमात् ।
कुलालचक्रपर्यन्तो यथा चन्द्रो रविस्तथा ॥ (म० पु० १२३।६८)

अग्रिमेऽध्याये सूर्यमाहात्म्यवर्णनप्रसङ्गे तस्य लोकरक्षकगुणोल्लेखनं कुर्वन् पुराणकारः सूचयति यदंशुमतोंऽशवः वायुसहकारेण सागराज्जललवानाकर्षमाकर्षं लोकानां पालनायोपकाराय च मेघद्वारा जगतः समुपकरोति—

तेजोभिः सर्वलोकेभ्य आदत्ते रश्मिभिर्जलम् ।
समुद्राद्वायुसंयोगाद्वहन्त्यापो गभस्तयः ।
ततस्त्वृतुवशात्काले परिवर्तन्दिवाकरः ॥
नियच्छत्यापो मेघेभ्यः शुक्लाशुक्लैस्तु रश्मिभिः ।
अभ्रस्थाः प्रपतन्त्यापो वायुना समुदीरिताः ॥
(मत्स्यपु० १२४।३१-३५)

**विष्णुपुराणे सूर्यसन्दर्भाः—**

श्रीविष्णुपुराणस्याद्यतनैरितिहासज्ञैः प्राचीनतरत्वं सुष्ठुरीकृतम् । अत एवैतत्पु-राणवर्णिताः केचन सन्दर्भा प्रस्तूयन्ते । पुराणस्यास्य द्वितीयेऽशेऽष्टमेऽध्याये ब्रह्माण्ड-

संस्थानं विवृत्य सूर्यादिग्रहाणां परिणामाः स्थितयश्च पौराणिकमर्यादारीत्या श्रीपराशर-मुनिना सूचिताः। तत्रोक्तं सर्वतः पुरतस्तस्य रथविषये—

योजनानां सहस्राणि भास्करस्य रथो नव।
ईषादण्डस्तथैवास्य द्विगुणो मुनिसत्तमः॥
सार्द्धकोटिस्तथा सप्त नियुतान्यधिकानि वै।
योजनानां तु तत्राक्षस्तत्र चक्रं प्रतिष्ठितम्॥

(श्रीविष्णुपु० अंशो द्वितीयः—२, ३)

पुरत एतेषु विषयेषु बृहद्विवरणं लिखितं विद्यते। एतस्मिन्नेवाध्याये कथितं यत्कुत्र स्वचक्रपर्यन्तो भ्रमन्नेष दिवाकरः। करोत्यहस्तथा रात्रिमित्यादि(२९-३०) उत्तरायणदाक्षिणायनराशिसंबद्धपक्षाणां च विस्तृतं विवरणमस्ति। बहूनि ज्योतिष-धर्मशास्त्र-प्रकरणानि वर्णितानि। अस्यांशस्य दशमेऽध्याये वैशिष्ट्यमेकं दृश्यते—सूर्यस्य रथः किल देवप्रभृतिभिरधिष्ठितो भवति।

स रथोऽधिष्ठितो देवैरादित्यै ऋषिभिस्तथा।
गन्धर्वैरप्सरोऽभिश्च ग्रामणीसर्वराक्षसैः॥

इतः परं मधुमासादारभ्यैतेषामादित्यरथेऽधिष्ठितानां देवादित्यर्षिप्रभृतीनां षोडशपद्यैर्विवरणं निर्दिष्टम्। अत्र प्रसङ्गतो द्वादशादित्यसंज्ञा अपि घोषिता। अन्ते चोक्तम्—

मासेष्वेतेषु मैत्रेय वसन्त्येते तु सप्तकाः।
सवितुर्मण्डले ब्रह्मन् विष्णुशक्त्युपबृंहिताः॥
स्तुवन्ति मुनयः सूर्यं गन्धर्वैर्गीयते पुरः।
नृत्यन्त्यप्सरसो यान्ति सूर्यस्यानु निशाचराः॥

तत्रैवोक्तम्—

नमो विवस्वते ब्रह्मन्भास्वते विष्णुतेजसे।
जगत्सवित्रे शुचये सवित्रे कर्मदायिने॥

(वि०पु० ३।११।३९१)

ततः पश्चादंशस्यास्यैकादशेऽध्यायेऽस्मिन्सन्दर्भे वैष्णवसूर्यशक्त्योः सम्मिलितरूपेण सर्वप्रेरकत्वादित्यस्य सर्वशक्तिमत्त्वं सप्तकारणत्वं प्रख्यापितं दरीदृश्यते।

स्कन्दपुराणस्य विषयाकारखण्डप्रसङ्गवर्णने विविधखण्डचर्चादिविचारेणातीव महत्ता सोसूच्यते। केचन खण्डेषु तत्र सूर्यस्य महामहिमा वर्णितोऽस्ति। अवकाशावसरा-

ननुगुण्याद्विस्तरभयाच्च तत्सर्वमुपेक्ष्य काशीखण्डतोऽत्रातीव संक्षेपेण यत्किल निर्देशोऽस्ति, तस्य विमर्शो विधास्यते ।

**काशीखण्डे संख्याता द्वादशादित्याः—**

(१) लोलार्कः, (२) उत्तरार्कः, (३) साम्बादित्यः, (४) द्रुपदादित्यः, (५) मयूखादित्यः, (६) खखोल्कादित्यः, (७) अरुणादित्यः, (८) वृद्धादित्यः, (९) केशवादित्यः, (१०) विमलादित्यः, (११) गङ्गादित्यस्तथा (१२) यमादित्यः । अग्रिमे ( ४७ तमेऽध्याये ) उत्तरार्कस्य तत्समीपस्थस्य चार्ककुण्डस्य वर्णनमस्ति, यत्कुण्डं बनारसीभाषायां बहरियाकुण्डपदेनाभिज्ञायते ।

इत्थञ्च काशीखण्डे द्वादशादित्यमन्दिराणां वर्णनं विद्यते । पूर्वपृष्ठेऽपि सूर्यसप्तति-नाम्नां तेभ्यश्चार्घ्यसमर्पणसन्दर्भे सूचितं वर्तते । अतोऽत्र स्कन्दपुराणान्तर्गान्य-सूर्यसन्दर्भाणामनुल्लेखेनैवैष प्रसङ्गो मयाऽत्रैव समाप्यते ।

**ब्रह्मवैवर्त्तपुराणे सूर्यसन्दर्भाः—**

ब्रह्मवैवर्त्तपुराणस्याष्टादशेऽध्याये गणपतिखण्डस्य तत्रैकमाख्यानमस्ति, यत्र निगदितं वर्तते यत् माली, सुमाली च यदा व्याधिग्रस्तौ विशेषतश्च श्वेतकुष्ठगलितकुष्ठ-रोगसहितौ शक्तिहीनौ बभूवतुस्तदा स्वयं स्वयम्भूर्ब्रह्मा तौ सूर्योपासनायै प्रेरयामास सर्वव्याधिनिवृत्तये । एकोनविंशे गणपतिखण्डस्याध्याये नारदः नारायणं पप्रच्छ—

किं स्तोत्रं कवचं नाम ब्रह्मणा लोकसाक्षिणा ।
दानवाभ्यां पुरा दत्तं सूर्यस्य परमात्मनः ॥
किं वा पूजाविधानं वा कं मन्त्रं व्याधिनाशम् ।
सर्वं चास्य महाभाग ! तन्मे त्वं वक्तुमर्हसि ॥

अस्मिन्नेव सन्दर्भे नारायणः प्रोवाच—

श्रृणु नारद वक्ष्यामि सूर्यपूजाविधेः क्रमम् ।
स्तोत्रं च कवचं सर्वं पापव्याधिविमोचनम् ॥

अग्रे चास्मिन्नेव सन्दर्भे ब्रह्मणा पृष्टो विष्णुरुवाच—

कृत्वा सूर्यस्य सेवां च पुष्करे पूर्णवत्सरम् ।
व्याधिहर्त्तुर्मदंशस्य तौ च मुक्तौ भविष्यतः ॥

अग्रे च शंकर उवाच—

सूर्यस्तोत्रं च कवचं मन्त्रं कल्पतरं परम् ।
देहि ताभ्यां जगत्कान्त ! व्याधिहर्तुर्महात्मनः ॥

**कूर्मपुराणे सूर्यसन्दर्भः—**

कूर्ममहापुराणस्यैकचत्वारिंशत्तमेऽध्याये ज्योतिःसन्निवेशवर्णनसन्दर्भे भूर्भुवादि-सप्तलोकानां नामोल्लेखतः पश्चात् प्रोक्तम्—

सूर्याचन्द्रमसौ यावत्किरणैरेव भासतः।
तावद्भूर्लोक आख्यातः पुराणे द्विजपुंगवाः॥

तदनन्तरं पौराणिकरीत्या सूर्यस्य भूरादिलोकस्यान्येषां ग्रहाणां च गति-प्रमाणादीनि वर्णितानि। परस्परं तेषां दूरतादिरपि वर्ण्यते। द्विचत्वारिंशत्तमेऽध्याये द्वादशादित्यनामानि वर्णितानि वर्तन्ते। तदनन्तरं पुलस्त्यादिभिर्ब्रह्मवादिमुनिभिर्विविधै-श्च्छन्दोमन्त्रैः स्तवनं सूचितम्। अन्ये च विविधा नागा गन्धर्वा यक्षा अप्सरसस्तथा चान्ये सुर-देवयोन्यादिसम्भवास्तं स्तुवन्ति। बालखिल्यादीनामप्यत्र चर्चा विद्यते। अन्ते चोक्तं—(४२।२१-२५) एते सर्वे भानुगाः सूर्येण सहैव दिवि भ्रमन्ति—

एतेषामेव देवानां यथावीर्यं यथातपः।
यथायोगं यथासत्त्वं स एष तपति प्रभुः॥

अहोरात्रव्यवस्थानकारणं स प्रजापतिः।
पितृदेवमनुष्यादीन् स सदाप्याययद्रविः॥

तत्र देवो महादेवो भास्वान्साक्षान्महेश्वरः।
भास्वते वेदविदुषां नीलग्रीवः सनातनः॥

स एष देवो भगवान्परमेष्ठी प्रजापतिः।
स्थानं तद्विदुरादित्ये वेदज्ञा वेदविग्रहाः॥

त्रिचत्वारिंशेऽध्याये भुवनकोशवर्णनप्रसङ्गे तत्रैकं वैज्ञानिकं तथ्यमुद्घाटितं वर्तते यत्सूर्यस्यैव प्रभावेण उपग्रह–ग्रह-नक्षत्रादीनां वृद्धिर्भवति, अथ च ( आकर्षणशक्ति-महिम्ना ) अलातचक्रवद्ग्रहादयो रविमभितोऽभिद्रवन्ति परिभ्रमन्ति च। सर्वतः प्रथमं तत्र सप्तरश्मीनां संज्ञा अभिहिता—

सुषुम्लो हरिकेशश्च विश्वकर्मा तथैव च।
विश्वश्रवाः पुनश्चान्यः संयद्वसुरतः परः॥
अर्वावसुरिति ख्यातः स्वरकः सप्तकीर्तिताः।
अमृता नामतः सर्वा रश्मयो वृष्टिसर्जनाः॥

पुरतश्चात्रैवैको विशेषः—

वसन्ते कपिलः सूर्यो ग्रीष्मे काञ्चनसप्रभः।
श्वेतो वर्षासु विज्ञेयो पाण्डुरः शरदि प्रभुः॥
हेमन्ते ताम्रवर्णः स्याच्छिशिरे लोहितो रविः॥ इत्यादि।

अन्ते च—

सर्वे ध्रुवे निबद्धा वै ग्रहास्ते वातरश्मिभिः।
भ्राम्यमाणा यथायोगं भ्रमन्त्यनुदिवाकरम्॥
अलातचक्रवद्यान्ति वातचक्रेरितास्तथा।
यस्माद्वहन्ति तान्वायुः प्रयहस्तेन स स्मृतः॥

एतावदेवोक्त्वा संक्षेपेण विरमामि।

श्रीमद्भागवते सूर्यप्रसङ्गेऽल्पतममेवोक्तम्; तथापि तत्रत्यानेकेन वचनेन सर्वं विशिष्यते—

"परो रजः सवितुर्जातवेदो देवस्य भर्गो मनसेदं जजान।"
(श्रीमद्भाग० ५।७।१४)

इत्थमेव च वायुपुराणे ८४ तमेऽध्याये सूर्यसन्दर्भो दर्शनीयः।

पुराणोपपुराणेष्वपि अपरिमेयाः सूर्यसन्दर्भा विद्यन्ते, तेषां सर्वेषामाकलनं स्वतन्त्रप्रबन्धेऽप्यतिदुष्करं किमुतास्मिल्लघुनिबन्धनिबन्धने ?

परन्तु सौरपुराणोपपुराणानि विषयेऽस्मिन् जिज्ञासुभिरवश्यमेव विशेषतः पठनीयानि। उपपुराणं साम्बपुराणं मया प्रसङ्गतो यत्र तत्र मूले पादटिप्पण्यामल्परूपेणोद्धृतम्; परन्तु बहवः स्तवाः कवचस्तोत्राणि मन्त्रादीनि कथाप्रसङ्गा उपासना-पूजनविधानि माहात्म्यानि विस्तरतो वर्णितानि। तानि तत एवोह्यानि। भविष्योत्तरपुराणे आदित्यहृदयस्तोत्रमेकं वर्त्तते, यः खलु तान्त्रिकपौराणिकविधिविधानजुष्टो महत्स्थानमावहति। तस्य विषये स्तोत्रवाङ्मयप्रसङ्गेन पुरस्ताद्वक्ष्यते।

पुराणेषु सूर्यमहत्त्वप्रसङ्गे श्रीमद्भागवते द्वादशस्कन्धे महर्षियाज्ञवल्क्योपदिष्टकमद्भुतं श्रीसूर्यस्तोत्रं गद्यमयम्। प्रारम्भः तस्योद्धरामि—

"ॐ नमो भगवते आदित्यायाखिलजगदात्मस्वरूपेण कालस्वरूपेण चतुर्विधभूतनिकायानां ब्रह्मादिस्तम्बपर्यन्तानामन्तर्हृदयेषु बहिरपि चाकाश इवोपाधिनाऽव्यवधीयमानो भगवानेक एकक्षणलवनिमेषावयवोपचितसंवत्सरगणेनायामादानविसर्गाभ्या-

मिमां लोकयात्रामनुवहति ॥ १ ॥ यदुत वाव विबुधर्षभ सवितरदस्तपत्यनुमहराम्नाय-विधिनोपतिष्ठमानामखिलदुरितवृजिनबीजावभर्जनभगवतः समभिधीमहि तपन-मण्डलम्" ॥ २ ।

अन्ते चोपसंहरन्मुनिरब्रवीत्—"अथ ह भगवंस्तव चरणनलिनयुगलं त्रिभुवन-गुरुभिर्वन्दितमहमयातयामयजुःकाम उपसरामि ।"

**प्रकीर्णानि सूर्यस्तोत्राणि—**

लौकिक्यां संस्कृतभाषायां बहवः स्तोत्रग्रन्थाः प्रकाशिताः सन्ति । तत्र स्तवानां स्तोत्राणां वा रूपद्वयं दरीदृश्यते । प्रथमतस्तु वाल्मीकिरामायणे महाभारते पुराणोपपुराणेषु, संहिताग्रन्थेषु—( यथा जयाख्यसंहिता अहिर्बुध्न्यसंहिता-सात्त्वत-संहिता-पुराणसंहिताप्रभृतिग्रन्थेषु ); यामलग्रन्थेषु यथा रुद्रयामल-ब्रह्मयामलादिषु ग्रन्थेषु । द्वितीया च श्रेणी विद्यते स्वतन्त्रस्तोत्राणाम् । वाल्मीकिरामायणमहाभारत-पुराणोपपुराणादिकमधिकृत्योपरिपृष्ठेषु सूर्यस्तुतीनां सन्दर्भे दिङ्मात्रं लक्षितमस्माभिः । यामलग्रन्थस्थानां स्तोत्राणां दिग्दर्शनमत्र प्रस्तूयते ।

**त्रैलोक्यमङ्गलं सूर्यकवचम्—**

ब्रह्मयामले तत्रैकमतीव विख्यातं सूर्यस्तोत्रवाङ्मयविश्रुतं "त्रैलोक्यमङ्गलं नाम सूर्यकवचम् ।" एतद्धि कवचं बहुवैशिष्ट्यविशिष्टम् । साम्बाय कृष्णपुत्राय स्वयं भगवता सूर्येणोपदिष्टमेतत्स्तोत्रं यामलानुसारेण । आदावेवोक्तं "त्रैलोक्यमङ्गलं नाम कवचं परमाद्भुतम्" ।

रुद्रयामलग्रन्थस्योत्तरतन्त्रमेवाधुनोपलभ्यते प्रकाशितरूपेण; परन्त्वस्माकं गुरुवर्येण सर्वतन्त्रस्वतन्त्रशास्त्राचार्य-दार्शनिकसार्वभौमेन गोस्वामिदामोदरलालमहा-भागेन एकदा सूचितं रुद्रयामलस्य पूर्वतन्त्रे गणपति-विष्णु-सूर्यादीनां सरहस्यानि काव्यमयान्यद्भुतानि स्तोत्राणि सन्ति । परन्तु तेषामनुपलम्भान्न तद्विषये किञ्चिद् वक्तुं समीहे ।

बहवो भास्करस्तवाः स्तोत्रसंग्रहग्रन्थेषूपलभ्यन्ते । तत्रैषा सम्भावना यदमी स्तवाः पुराणेभ्योऽन्येभ्यो वा पुराणदेशीयकृतिभ्योऽधिगृहीताः ।

नमो भगवते तुभ्यमादित्याय नमो नमः ।
जयाय जयभद्राय हरिदश्वाय ते नमः ॥

अस्मिंस्तवे बहवः सूर्यार्घ्यसमर्पणमन्त्रा नाना फलदायका विद्यन्ते । एतस्य स्तवस्य विषयेऽपरमपि वैशिष्ट्यमेकमवश्यविज्ञापनीयमन्यथाऽपूर्णमेवैतद्विवरणं भविष्यति ।

अस्मिंस्तवे पञ्चदशश्लोकमयं वर्णनं वर्तते—

नमः सवित्रे जगदेकचक्षुषे जगत्प्रसूतिस्थितिनाशहेतवे ।
त्रयीमयाय त्रिगुणात्मधारिणे विरञ्चिनारायणशङ्करात्मने ॥

अग्रतश्च १४२ तमश्लोकादारभ्य १५४ तमश्लोकपर्यन्तं मण्डलाष्टकं विद्यते यत् किल स्वतन्त्ररूपेणापि सूर्योपासकैः पापठ्यते । तच्चातीव महत्त्वमयं सूर्यमहित्वज्ञापकं काव्यमयं भास्करभक्तैर्नित्यं पाठ्यम् ।

यन्मण्डलं विश्वसृजा प्रसिद्धमुत्पत्तिरक्षाप्रलयप्रगल्भम् ।
यस्मिञ्जगत्संहरतेऽखिलं च पुनातु मां तत्सवितुर्वरेण्यम् ॥
यन्मण्डलं सर्वगतस्य विष्णोरात्मा परं धाम विशुद्धतत्त्वम् ।
सूक्ष्मान्तरैर्योगपथानुगम्यं पुनातु मां तत्सवितुर्वरेण्यम् ॥
यन्मण्डलं ब्रह्मविदो वदन्ति गायन्ति यच्चारणसिद्धसङ्घाः ।
यन्मण्डलं वेदविदः स्मरन्ति पुनातु मां तत्सवितुर्वरेण्यम् ॥

एतदादित्यहृदयस्तोत्रं परमविख्यातं शतानीकप्रोक्तम् । सुमन्तुवचनानुसारं महाभारतसंगरे प्रवृत्ते कुरुक्षेत्रे पार्थः अर्जुनः भगवन्तं कृष्णमपृच्छत्—

सूर्यस्तुतिमयं न्यासं वक्तुमर्हसि माधव ।
भक्त्या पृच्छामि देवेश कथयस्व प्रसादतः ॥
सूर्यभक्तिं करिष्यामि कथं सूर्यं प्रपूजयेत् ।
तदहं श्रोतुमिच्छामि त्वत्प्रसादेन यादव ॥

तदनन्तरं स्तोत्रस्य ऋषिच्छन्दोदेवता-शक्ति-न्यासादीनि विस्तरेण निगदितानि ।

तदनन्तरं च ध्यानम्—

भास्वद्रत्नाढ्यमौलिः स्फुरदधररुचा रञ्जितश्चारुकेशो
भास्वान् यो दिव्यतेजाः करकमलयुतः स्वर्णवर्णप्रभाभिः ।
विश्वाकाशावकाशग्रहपतिशिखरे भाति यश्चोदयाद्रौ
सर्वानन्दप्रदाता हरिहरनमितः पातु मां विश्वचक्षुः ॥ इति ।

अधुना केषाञ्चन साहित्यिकलालित्यलालितानामेकतोऽपरतश्च भक्तिभावभारभरितानां स्तवानां विषये संक्षेपेण किञ्चिद्विज्ञापयितुमुपक्रमे । सर्वतो सम्राजो हर्षवर्धनस्य राजकविष्वन्यतमस्य किंवदन्त्यनुसारेण महाकविबाणभट्टस्य श्वसुरस्य कविवरस्य मयूरभट्टस्य प्रसिद्धं सूर्यशतकमधिकृत्य निवेदयामि । श्रूयते हि मयूरभट्टः कुष्ठग्रस्तोऽभवत्तदैतत्सूर्यशतकं निर्माय नित्यं चैनद् पठन् रोगमुक्तो जातः । स्रग्धराख्ये

छन्दसि विरचितोऽयं प्रौढस्तवः। स्रग्धरावृत्तलिखितेषु काव्येष्विदं प्रथमं स्तुतिकाव्यं यस्मिन्कवेः संस्कृतभाषाकाव्यनिर्माणे असाधारणी क्षमता प्रौढिश्च प्रत्यक्षीभवति। झङ्कृतिकार्यनुप्रासलालित्ये काव्यप्रौढोक्तिसिद्धकल्पनातरलत्वेन एष स्तवो न किल भक्तानामपि तु विदुषां हृदयावर्जकः। द्वित्राः श्लोका उदाह्रियन्ते—

उद्गाढेनारुणिम्ना विदधति बहुलं येऽरुणस्यारुणत्वं
मूर्च्छोद्धूतौ खलीनक्षतरुधिररुचो ये रथाश्वाननेषु।
शैलानां शेखरत्वं श्रितशिखरिशिखास्तन्वते ये दिशन्तु
प्रेङ्खन्तः खे खरांशोः खचितदिनमुखास्ते मयूखाः सुखं वः॥

दत्तानन्दाः प्रजानां समुचितसमयाकृष्टसृष्टैः पयोभिः
पूर्वाह्णे विप्रकीर्णा दिशि दिशि विरमत्यह्नि संहारभाजः।
दीप्तांशोर्दीर्घदुःखप्रभवभवभयोदन्वदुत्तारनावो
गावो वः पावनानां परमपरिमितां प्रीतिमुत्पादयन्तु॥

एकमपरमपि स्तोत्रमेतादृशं काव्यवर्गीयं साम्बपञ्चाशिकेति विख्याताभिधानक-मधिकृत्य किञ्चिद् ब्रवीमि। एतत्स्तोत्रकाव्यं रुचिरपदनिबद्धमथ काव्यगतचारुत्वरमणीयं शास्त्रीयवैचक्षण्यविलक्षणम्। यथा चादिमौ द्वौ श्लोकौ—

शब्दार्थत्वविवर्त्तमानपरमज्योतीरुचो गोपते-
रुद्गीथोऽभ्युदितो पुरोऽरुणतया यस्य त्रयीमण्डलम्।
भास्वद्वर्णपदक्रमेरिततमः सप्तस्वराश्वैर्वियद्-
विद्यास्यन्दनमुन्नयन्निव नमस्तस्मै परब्रह्मणे॥

ओमित्यन्तर्नदति नियतं यः प्रतिप्राणि शब्दो
वाणी यस्मात्प्रसरति परा शब्दतन्मात्रगर्भा।
प्राणापानौ वहति च समौ यो मिथो ग्राससक्तौ
देहस्थं तं सपदि परमादित्यमाद्यं प्रपद्ये॥

तृतीयोऽपि श्लोको आदित्यस्य सकलकारणाधारकत्वं दर्शितमिति सोऽपि श्लोको विद्वद्भिर्विवेच्यः; परन्तु पञ्चमोऽत्र निदर्श्यते—

ऊर्ध्वाधःस्थान्यतनुभवनान्यन्तरा संनिविष्टं
नानानाडीप्रसवगहना सर्वभूतान्तरात्मा।
प्राणापानग्रसननिरतैः प्राप्यते ब्रह्मनाडी
सा नः श्वेता भवतु परमादित्यमूर्तिः प्रसन्ना॥

एतस्मिँस्तव एतादृशानि शास्त्रीयपाण्डित्यप्रचुराणि पद्यानि तत्र गुम्फितानि। अपरं चैषां प्रौढपद्यानां परोत्कर्षत्वं यदिमानि काव्योत्कृष्टरमणीयताजुष्टान्यपि प्रसाद-गुणगुरूणि ।

अन्ते च—

सर्वात्मत्वं सवितुरिति यो वाङ्मनःकायबुद्ध्या
रागद्वेषोपशमसमतायोगमेवारुरुक्षुः ।
धर्माधर्मग्रसनरशनामुक्तये युक्तियुक्तां
सः श्रीसाम्बः स्तुतिमिति रवेः स्वप्रशान्तां चकार ॥

भक्तिश्रद्धाद्यखिलतरुणीवल्लभेनेदमुक्तं
श्रीसाम्बेन प्रकटगहनं स्त्रोत्रमध्यात्मगर्भम् ॥
यः सावित्रं पठति नियतं स्वात्मवत्सर्वलोकान्
पश्यन् सोऽन्ते व्रजति शुकवन्मण्डलं चण्डरश्मेः ॥

स्वयमेवास्य स्तोत्रस्य पठनेनानुभूयते यदनुपममध्यात्मगर्भमेष स्तवः प्रसादगुण-गरिम्णा भक्तानां विदुषां परमो हृद्य इति दिक् ।



# अहो शब्दकोशसूक्ष्मेक्षिका माघस्य[1]

प्रो० वि० वेङ्कटाचलम्

कुलपतिः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

वाराणसी

❀ ❀ ❀

भगवतः पतञ्जलेः किलेयमुक्तिः[2] प्रसिद्धैव पस्पशाह्निके महाभाष्यस्य यद् बृहस्पतिरपि नान्तं जगाम शब्दानाम्, दिव्यं वर्षसहस्रं शब्दपारायणं प्रब्रुवन्निन्द्राय। पर्यवस्थिते चैवमनन्तपारे संस्कृतशब्दकोशे कथन्नामेयं पप्रथे सूक्तिर्विदग्धगोष्ठीषु, नवभिरेव सर्गैः पारमियाय शब्दानां महाकविर्माघ इति घोषयन्ती "नवसर्गे गते माघे नवशब्दो न विद्यते" इति ? किमिदं रिक्तं वचः ? आहोस्विदस्ति किमपि तात्पर्य-याथार्थ्यमस्मिन् वचने ? यद्यस्ति कश्चिद् याथार्थ्यपक्षोऽस्य वचनस्य, कीदृशो नामासौ स्याद् इत्यवश्यमेव मननीयं भवेत्सुधीभिः।

माघः किल महाकविरभून्महान् शाब्दिक इति तु घण्टाघोषः। संभवति चास्य शाब्दिकत्वस्य पक्षद्वयम्। आसीदसाववारपारीणो व्याकरणशास्त्रस्येति प्रथमः। तेन चास्य महाकवेः शब्दसंस्कारशुद्धिरविगीता दृढीकृता भवति। परन्नेदमतिरोहितं

१. त्रिशतो वर्षेभ्यः प्राक् 'मद्रास्'विश्वविद्यालये बी० ए० पाठ्यतया निर्धारितस्य शिशुपालवधद्वितीयसर्गस्य अध्यापनवेलायामङ्कुरितमासीद् बीजमस्य निबन्धस्य। पश्चात् स्वाध्यायप्रसङ्गेषु क्रमोपबृंहितोऽयं विषयः २०.२.१९७३ दिनाङ्के वल्लभ-विद्यानगरप्रतिष्ठस्य 'सरदार पटेल्' विश्वविद्यालयस्य संस्कृतविभागे प्रसार-व्याख्यानयोजनान्तर्गते व्याख्याने प्रप्रथमं प्रास्तावि तत्रत्यविदुषां पुरस्तात्। परस्तादवसरान्तरेष्वपि गोष्ठीषु चर्चितः। गूर्जरेषु माघजन्मभूमौ संप्रति राजस्थान-प्रदेशान्तर्गते 'भीनमल्' ग्रामे 'राजस्थान साहित्य अकादमी' संस्थया १९८१ वर्षे समायोजिते माघजयन्तीमहसि उद्घाटनभाषणे कृतलेशसङ्केतश्च इदंप्रथमतया पत्रमारोपितः संप्रति।

२. पाणिनीयव्याकरणमहाभाष्ये प्रदीपोद्द्योतव्याख्यायुते १९१७ वर्षे निर्णयसागर-मुद्रिते, पृ० ५०।

सहृदयानां यत् कविकर्मणि शब्दसंस्कारमतिरिच्यप्यस्ति पक्षः कश्चिदर्थविषयकस्ततोऽपि बहुधा महत्तरः। न केवला व्याकरणशुद्धिरपेक्ष्यते कविभिः शब्दानां काव्येषु; किन्तु पुष्कलमर्थरामणीयकमपि तेषां संस्कारपूतानां शब्दानाम्[1]। तदिदमाह स्म स्वयं माघ एव कण्ठोक्तैः शब्दैः—

"शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते[2]।"

इति सत्कवेरपेक्षाप्रस्तावे शब्दार्थावुभावप्युपक्षिपन्। इदमनेनोक्तं भवति—माघस्य यत् शाब्दिकत्वं तस्यायमपरो द्वितीयः पक्षः, तदीयशब्देषु निहितमर्थविन्यासवैदग्ध्यं नाम। संस्कृतभाषायाः शब्दानां ये विभिन्नपथप्रस्थाना विचित्रा अर्थविशेषाः, तेषां सर्वेषामयमभूद्रहस्यज्ञ इतीदमाकलितमनेन द्वितीयपक्षेण। तेन व्यवस्थितमेतद् यदस्य शाब्दिकत्वस्य शब्दनिष्ठेन प्रथमपक्षेणास्य महावैयाकरणत्वम्, अर्थनिष्ठेन द्वितीयपक्षेणास्य शब्दकोशचातुरीधुरीणस्य अर्थवैचित्र्यनदीष्णत्वं च प्रख्यापितं भवतीति। तदिह प्रस्तावितयोः पक्षयोर्द्वयोर्मध्ये प्रथमे माघस्य व्याकरणशास्त्रपारीणत्वविषये तावत् सूरिभिः पराक्रान्तमेवेति नोद्युञ्ज्महे व्यापारयितुमात्मानं तत्र संप्रति। अत एव द्वितीयं शब्दकोशचातुरीपक्षमवलम्ब्यास्य महाकवेरर्थविषयिणीं सूक्ष्मेक्षिकामभिनवपथेन केनचित्परीक्षितुं प्रयतामहे निबन्धेऽस्मिन्।

इदञ्च न विस्मर्तव्यं सहृदयैर्यदस्य माघीयशब्दकोशविस्तरचातुरीविशेषस्यापि सन्ति बहवः पक्षा विमर्शयोग्या विद्वद्भिः। विमृष्टा एव च भूम्ना केचिदेतत्सम्बन्धिनोऽपि पक्षा विद्वद्भिरिति तत्र चर्वितचर्वणं परिहरद्भिरस्माभिरिह निबन्धेऽस्य शाब्दिक-

---

१. काव्यलक्षणे अर्थस्य रमणीयत्वमुपक्षिपतः शब्दस्य संस्कारवत्वादिगुणैरविशेषयतः पण्डितराजस्यापि काव्ये शब्दार्थयोर्मध्येऽर्थपक्षस्यैव गुरुतरत्वमभिमतमिति नेदं तिरोहितं तद्विदाम्।

दिष्ट्याधिरूढाः कविताधिराज्यं धीरा रमन्ते नहि शब्दचित्रे।
स्वर्गेऽपि गत्वाप्सरसां निवासे काणैव किं कापि गवेषणीया॥
(शिवलीलार्णवस्य प्रथमसर्गे)

इति रमणीयार्थवन्ध्यं शब्दचमत्कारमात्रपरं काव्यं काणत्वोपहतसौन्दर्यसर्वस्वया सुन्दर्या उपमिमता, शब्दपक्षमात्राभिनिविष्टान् कवीन् सोत्प्रासं दूषयता च नीलकण्ठदीक्षितेनाप्ययमर्थः सोल्लासमुपबृंहित इति ध्येयम्।

२. शिशुपालवधे, २.८६—अत्र शब्दार्थावुभावपि ताटस्थ्येन निर्दिशतोऽस्य शाब्दिककवेस्तु काव्ये शब्दार्थयोरुभयोः समानं स्थानमभिमतमिति प्रतिभाति।

धुरन्धरस्य शब्दकोशविषयिणीं सूक्ष्मेक्षिकां प्रकाशयितुमवलम्ब्यते मार्गः कोऽपि नूतनः परैरनाक्रान्तपूर्वः।

सन्ति किल संस्कृतभाषायां शब्दाः परःशता अनेकार्थपराः। प्रयुञ्जते च बहुलं कवयस्तानीदृशान् अनेकार्थान् शब्दान् विविधान् स्वकाव्येषु श्लेषप्रसङ्गेषु। क्वचित् क्वचिच्च शब्दकुशलाः पण्डितकवयः प्रदर्शयन्ति शब्दश्लेषस्य नवनवाः स्वोपज्ञा विच्छित्तीरपि; यथा भारविमाघावप्यतिशयानः शब्दक्रीडाचुञ्चुः श्रीहर्षो 'नार्पयति' इति शब्दस्य 'न' 'अर्पयति' इति पदद्वयसंहितारूपेण सर्वैरप्यनुभूयमानस्य विचित्रं 'राजसात् करोति' इत्येवंरूपं नूतनमर्थविशेषमकल्पयत् स्वप्रतिभाविशेषेण 'नृपस्येदं = नार्पं' 'नार्पं करोति = नार्पयति' इति च तद् व्युत्पादयन्[1], यथा चान्यत्रापि "चेतो न लङ्घामयते[2]" इति दमयन्तीवाक्ये "चेतो नलं कामयते" इति "चेतोऽनलं कामयते" इत्याद्यर्थवैचित्र्यजुगूहिषया गूढैः स्वप्रतिभाकल्पितैः सन्धिग्रन्थिभिः शब्देषु खेलन्। नास्ति संस्कृतशब्दनिहिताया अनन्ताया अर्थशक्तेः कापि सीमेत्येतद् रहस्यं सम्यगादर्शितं महाकविभिरीदृशैः स्वोपज्ञैः प्रगल्भैः प्रयोगविशेषैः। तदिदमुक्तं माघेनापि प्रकारान्तरेण प्रसङ्गान्तरे—

वर्णैः कतिपयैरेव ग्रथितस्य स्वरैरिव।
अनन्ता वाङ्मयस्याहो गेयस्येव विचित्रता[3] ॥

कामं सन्तीदृशा नैके चित्रचित्राः श्लेषप्रयोगविशेषा माघकाव्येऽपि। परमयं पन्था विचित्रः सन्नपि सर्वैः कविसार्थैर्बहुधा क्षुण्ण एवेति, व्याख्यातारश्चेदृशाः श्लेषप्रयोगाः कुशलैर्व्याख्यातृभिरिति च, नेदमिह चर्चाविषयीक्रियते।

अस्ति शब्दकोशचातुरी माघस्यास्मात् प्रहतपथादतिरिक्तापि नवनवा कापि। तत्रापि सन्ति भूयांसो विच्छित्तिविशेषाः। न शक्यन्त इमे सर्वेऽपि विच्छित्तिविशेषाः सामग्र्येण सोपस्करं व्याख्यातुमत्र। न वैतेषां माघकाव्ये विद्यमानानि सर्वाण्युदाहरणानि शक्यन्ते प्रदर्शयितुम्। अतोऽस्माभिरत्र तांस्तान् विच्छित्तिविशेषान् प्रथमं निरूप्य तेषामुदाहरणानि कतिपयानि सविस्तरं संगमय्य तत्सरूपाणामुदाहरणान्तराणां दिङ्मात्रं प्रदर्श्यते।

---

१. नैषधीयचरिते ५.८९।

२. तत्रैव ३.६७।

३. शिशुपालवधे २.७२।

**(क) सहप्रयोगेण विलक्षणार्थरहस्यप्रकाशनम्**

तत्र प्रथमेयं विच्छित्तिर्माघीयकोशकौशलस्य, यद् एकस्य शब्दस्य तेनैव तत्रैवार्थान्तरमादाय सहप्रयोगः। नानार्थकं कञ्चित् शब्दं कस्मिंश्चित् पद्ये सर्वजनवेद्येऽर्थे प्रयुज्य तमेव शब्दं तत्रैव पद्ये तत्साहचर्येणैव तद्भिन्नेऽप्रसिद्धेऽर्थविशेषे प्रयुङ्क्तेऽसौ महाकविः। अत्रायं महाकवेरभिसन्धिः। यदा पाठकाः पठेयुरीदृशानि पद्यानि तदा तेषां बुद्धिर्झटित्याकृष्टा भवति कथमत्रैकस्यैव पदस्य पुनरावृत्तिरिति। तेन चार्थान्तरानभिज्ञानामपि पाठकानां मनस्ययं प्रत्ययः समुत्पत्स्यते यदस्मिन् प्रयोगे शब्दस्यार्थान्तरेण भाव्यमेवावश्यमिति। तेन च बलात्प्रेरिता भवन्ति कोशसाहाय्येन नातिप्रसिद्धस्य गूढार्थस्य गवेषणायाम्। अयमेको विचित्रः पन्थाः माघस्य पाठकानां पुरतः कोशनिहितानां रहस्यानामुद्घाटनस्य।

(१) —दृश्यतां संप्रति पद्यमिदं द्वितीयसर्गस्थम्—

यातव्यपार्ष्णिग्राहादिमालायामधिकद्युतिः।
एकार्थतन्तुप्रोतायां **नायको नायकायते**[१] ॥

अत्र प्रथमो नायकशब्दो विजिगीषुराजवाचकः, यस्तावदनुपदमेव महाकविना द्वादशप्रकाराणां राज्ञां मध्ये श्रेष्ठत्वेन वर्णितः। तेषामेव द्वादशविधानां राज्ञामत्रोपक्षेपः पूर्वार्धे यातव्यपार्ष्णिग्राहादिपदेन कृतः। तेन प्रथमोऽयं नायकशब्दः सर्वप्रसिद्धे श्रेष्ठरूपेऽर्थे प्रयुक्तः। परस्ताच्च अस्यैव नायकस्य उपमानवाचकतया पुनर्नायकशब्दस्य प्रयोगोऽत्र ग्रन्थग्रन्थिरूपतया निवेशितो माघेन। अत्रायं प्रश्नः समुत्तिष्ठते कथं नायक एव नायकवद् भवितुं शक्नोतीति। अस्य ग्रन्थेश्च समाधानं नायकशब्दस्य कोशादर्थान्तरपरिग्रहेण भवति। अर्थान्तरञ्चेदं सामान्यतो नातिप्रसिद्धमपि, कोशेषु स्पष्टमेव। यद्यप्यमरकोशस्य नानार्थवर्गे शब्दोऽयं न पठितः, तथापि "नायको नेतरि श्रेष्ठे हारमध्यमणावपि"[२] इति विश्वकोशे हेमचन्द्रकोशे च व्याख्यात एवासौ। तेन विजिगीषू राजा सर्वेषां राज्ञां मध्ये मालाया मध्यमणिरिव शोभत इत्यर्थः स्पष्टीभवति। अस्यार्थस्य च संकेतः पूर्वार्धे 'माला'-रूपकविन्यासेन कविनापि स्वयं कृत इत्यत्रवधेयम्। तदनेन अर्थान्तरप्रयुक्तनायकशब्दद्वयसाहचर्येण समुद्घाटिता माघेन नवशब्दरहस्योन्मीलनकौशलप्रदर्शनमुखेनात्मनः कोशसूक्ष्मेक्षिका पण्डितपामरसाधारणेषु पाठकेषु। एकमेव शब्द-

---

१. शिशुपालवधे २.९२।
२. अमरकोशे विशेष्यनिघ्नवर्गे "अधिभूर्नायको नेता......." (३.१.११) इत्यस्य व्याख्याने सुधाव्याख्यायामुद्धृतम्।

मेकस्मिन्नेव पद्ये भिन्नभिन्नेऽर्थद्वये प्रयुञ्जानः कविरत्र शब्दार्थचमत्कारविशेषमलौकिकमप्यादधातीत्यन्यदेतत् ।

(२)—संप्रति विमृश्यतामिदं द्वितीयमुदाहरणमीदृशस्यैव साहचर्यचमत्कारस्य। इदमप्युदाहरणं द्वितीयसर्गे उद्धववचनान्तर्गतमेव ।

सहिष्ये शतमागांसि सूनोस्त इति यत् त्वया ।
प्रतीक्ष्यं तत् प्रतीक्ष्यायै पितृष्वस्रे प्रतिश्रुतम्[1] ॥

शिशुपालं प्रति जैत्रयात्रा करणीया, उत युधिष्ठिरस्याह्वानमनुरुन्धानेन यज्ञयात्रा विधेयेति कृष्णस्य विचिकित्सायां बलरामेण साटोपं समर्थितं जैत्रयात्रापक्षं प्रत्याचक्षाण उद्धवस्तत्र विशिष्टं युक्त्यन्तरमुपक्षिपति पद्येऽस्मिन्निति तु संदर्भविदां स्पष्टमेव। पूर्वं शिशुपालमात्रे आत्मनः पितृष्वस्रे पुत्रवात्सल्यनिघ्नायै प्रतिश्रुतं श्रीकृष्णेन, "पुत्रस्य ते शतमपराधान् मर्षयिष्यामि मद्विषयान् । यद्यसौ अपराधानां शतसंख्यामप्यतिक्रामेत् तदा तु न स्थास्यामि तूष्णीं नूनं विधास्यामि तस्य लोकविद्वेषिदुष्कृत्यानुरूपं दण्डम्" इति पूर्वप्रतिज्ञां स्मारयन् ब्रूते गुरुरुद्धवो यद् यावदसावपराधसीमानं पूर्वाभ्युपगतं नोल्लङ्घयति ततः पूर्वं तं प्रति युद्धकरणस्य वार्ता दूरनिरस्तेति । यदि बलरामो ब्रूयाद् भज्यतां सा प्रतिज्ञेति, तत्तु सर्वथा न श्रद्धेयं, यतो यस्यै कृता प्रतिज्ञा सा किल पितृष्वसा कृष्णस्य परमपूज्येति समाधानं मनसि निदधानस्तां हेतुगर्भं विशिनष्टि 'प्रतीक्ष्यायै' इति । अतश्च शतापराधपूर्तिरवश्यं प्रतिपालनीया श्रीकृष्णेनेति श्लोकाशयः ।

अत्र महाकविना 'प्रतीक्ष्य'शब्दस्य अर्थद्वये साहचर्येण प्रयोगं कृत्वा प्रदर्शिता कोशचातुरी । प्रथमप्रयुक्तस्य 'प्रतीक्ष्यम्' इति शब्दस्य 'प्रतिपालनीयम्' इत्यर्थः साधारणः सर्ववेद्यः । द्वितीयस्य 'प्रतीक्ष्यायै' इति टाब्विशिष्टस्य च 'पूज्यायै' इत्यर्थो नातिप्रसिद्धो विद्वज्जनवेद्यः कोशगवेष्यो वा । अस्त्यस्य "पूज्यः प्रतीक्ष्यः" इत्यमरकोशे पूज्यपर्यायत्वेन पाठः । हेमचन्द्रस्तु "प्रतीक्ष्यः प्रतिपाल्यः स्यात् पूज्ये च" इत्यर्थद्वयमपि पपाठ[2] । पूर्वोदाहरणे नायकशब्दस्य मध्यमणिरूपमर्थविशेषं बोधयितुमिव, प्रकृतोदाहरणे प्रतीक्ष्यशब्दस्य पूज्यरूपमर्थविशेषमनधिगतकोशसारान् पाठकान् बोधयितुमियमपूर्वा पद्धतिः शब्दकोशरहस्यज्ञस्य माघस्येति विदाङ्कुर्वन्तु सहृदया नवनवशब्दार्थरसिकाः ।

(३)—इत्थमेवैकादशे सर्गे 'वर्णक'शब्दस्याप्यर्थद्वयमादाय साहचर्यं व्यधायि महाकविना । तत्रेदं पद्यं प्रभातवर्णनप्रसङ्गस्थम्—

---

१. शिशुपालवधे २.१०८ ।

२. दृश्येताम् अमरकोशः (३.१.५) तद्व्याख्या च ।

नखपदवलिनाभीसन्धिभागेषु लक्ष्यः
क्षतिषु च दशनानामङ्गनायाः सशेषः।
अपि रहसि कृतानां वाग्विहीनोऽपि जातः
सुरतविलसितानां **वर्णको वर्णको**ऽसौ[1] ॥

अत्र प्रथमप्रयुक्तस्य वर्णकशब्दस्य 'वर्णयिता' इत्यर्थः। 'वर्णनकर्ता' इति भावः। 'वर्ण वर्णक्रिया-विस्तार-गुणवचनेषु' इत्यस्माद्धातोः ण्वुलि निष्पन्नोऽयं शब्दः। पश्चात्प्रयुक्तो वर्णकशब्दस्तु 'वर्ण'-वाचकः "अङ्गराग"इत्यर्थः। अयमपि 'वर्णं करोती'ति टीकायां सर्वङ्कषायां मल्लिनाथेन व्युत्पादितः। अत्रापि स एव ण्वुल्प्रत्यय इति विलेपनपर्यायेषु अमरकोशपठितस्य वर्णकशब्दस्य सुधाव्याख्यायां स्पष्टम्। ललनानां शरीरावयवेषु कृतपदा नखक्षतदन्तक्षतादिकृता अङ्गरागविशेषाः (वर्णकाः) रहस्यात्मकाः सन्तोऽपि तत्प्रियजनकृतसुरतचेष्टानां समुद्घाटकाः (वर्णकाः) बभूवुरित्यर्थः। परस्तादपि कविना षोडशसर्गे 'अनुलेपनम्' इत्यर्थे वर्णकशब्दः प्रयुक्तः। "नृपमौलिमरीचिवर्णकैरथ यस्याङ्घ्रियुगं विलिप्यते[2]" इति।

(४)—पुनश्चैकादशे सर्ग एवास्ति पद्यान्तरमपीदृशम्, यत्र 'भानु'-शब्दस्यार्थद्वये साहचर्यं व्यधायि माघेन। तत्रापि कवेराकूतन्तु स्पष्टमेव साहचर्यसंविधानकस्य। 'भानु'शब्दस्य सूर्ये किरणे च प्रयोगः प्रसिद्ध एव। प्रभाते रक्तवर्णैः सूर्यकिरणैर्लिप्तं भवनं तथारुणितं प्रत्यभाद् यथा चन्दनचर्चितमिवाभासतेति श्लोकार्थः। तत्रेयं माघीया पदधोरणी—

अरुणितमकठोरैर्वेश्म काश्मीरजाम्भः-
स्नपितमिव तदेतद्भानुभिर्भाति **भानोः**[3] ॥

अत्र द्वितीयो भानुशब्दः षष्ठ्येकवचनान्तप्रयुक्तः सूर्यवाचकः, प्रथमस्तृतीयाबहुवचनान्तप्रयुक्तश्च किरणवाचक इति निगदव्याख्यातमपीदं बालानुजिघृक्षया स्पष्टार्थमीषद् व्याख्यातम्।

(५)—द्वादशसर्गस्थे प्रयाणवर्णने च पुनरचीक्लृपत्पद्यमीदृशं माघो यस्मिन्नेकस्यैव पदस्य पूर्वचर्चितेषूदाहरणेष्विव अर्थद्वयचमत्कारेण साहचर्यं दृश्यते।

---

१. शिशुपालवधे ११.२९।
२. तत्रैव १६.६२।
३. तत्रैव ११.५३।

श्मश्रूयमाणे मधुजालके तरोर्गजेन गण्डं कषता विधूनिते ।
क्षुद्राभिरक्षुद्रतराभिराकुलं विदश्यमानेन जनेन दुद्रुवे[1] ॥

मार्गेण गच्छन्तो यात्रिका मध्येमार्गं स्थूलस्थूलैर्भ्रमरैर्दंष्टाः सद्यः पलायन्तेति वर्णयितुकामो महाकविरत्र 'क्षुद्रा'शब्दमर्थद्वये द्विः प्रयुङ्क्ते । एकत्र 'क्षुद्रा'शब्दो मधुमक्षिकारूपे अप्रसिद्धेऽर्थविशेषे प्रयुक्तः । पुनश्च लघुपर्यायं प्रसिद्धार्थं क्षुद्रशब्दमुपादाय 'अक्षुद्र'-विशेषणेन ताः क्षुद्राः विशेष्य तेषां भ्रमराणां स्थूलत्वकथनेन भयावहत्वं व्यञ्जितम्[2] । मधुमक्षिकाः स्वेषु मधुजालकेषु मधुसञ्चये व्यापृतास्तावन्नोपद्रवन्ति पार्श्वस्थान् प्राणिनो यावत्कश्चिन्न चेष्टते तानुपरोद्धुम् । यदा तु कश्चिदुपरुणद्धि तास्तदा तु सर्वाः संभूय समाक्रमन्त्युपरोद्धारमिति प्रसिद्धम् ।

अत्र चाजानानेन गजेन केनचित्तरुस्कन्धे कटं कण्डूयमानेन प्रकम्पिते मधुजालके तत्रस्थाः स्थूलस्थूला मधुमक्षिकाः कृष्णसैनिकास्तथा संभूय प्रसभमाचक्रमुः, यथा तेषां तत्स्थानाद् दूरपलायनं मुक्त्वा नासीज्जीवितरक्षणोपाय इति हृद्यमिह कवेस्तात्पर्यं मक्षिकाणां स्थूलत्वकथनेन साधु समुपोद्बलितं महाकविना । इदमनेन सिद्धं भवति यदीदृशीषु प्रगल्भासु शब्दकोशक्रीडासु सुखरामं रममाणेनापि महाकविना शब्दानामर्थ-पुष्टिरपि न पर्यहीयतेति ।

इत्थं विवेचितानि प्रकाममुदाहरणानि कानिचित्सविस्तरं प्रथमस्यास्य विच्छित्ति-प्रकारस्य । अधुनास्मद्दृष्टिपथमायातान्यपराणीदृशान्युदाहरणानि संक्षेपतो निर्दिश्यन्ते ।

(६)—द्वादशे सर्गे श्रीकृष्णस्य प्राभातिकप्रस्थानवर्णने उष्ट्रकाणां वर्णनपरमिदं पद्यम्—

अह्नाय यावन्न चकार भूयसे निषेदिवानासनबन्धमध्वने ।
तीव्रोत्थितास्तावदसह्यरंहसो विशृङ्खलं शृङ्खलकाः प्रतस्थिरे[3] ॥

अत्र प्रथमे विशृङ्खलशब्दे शृङ्खलशब्दः पशुबन्धनादौ प्रयुक्तं निगडमभिधत्ते । द्वितीयः शृङ्खलकशब्दस्तु करभवाचकः शृङ्खलशब्दात् कप्रत्यययोगेन निष्पन्नः । स चायं 'शृङ्खलमस्य बन्धनं करभे' इति पाणिनिसूत्रेण[4] विहित इत्यवधेयम् । इत्थं

---

१. शिशुपालवधे १२.५४ ।

२. क्षुद्रा व्यङ्गा नटी वेश्या सरघा कण्टकारिका ।
त्रिषु क्रूरेऽनघेऽल्पेऽपि क्षुद्रः..............॥ इत्यमरकोशः (३.३.१७७) ।

३. शिशुपालवधे १२.७ ।

४. अष्टाध्याय्याम् ५.२.७९ ।

चास्मिन् प्रयोगविशेषे कविना शृङ्खल-शृङ्खलकशब्दयोरर्थविशेषप्रदर्शनेन सह पाणिनिसूत्रमपि तद्विषयकं कटाक्षितमिति विभावनीयम् ।

(७)—अस्मिन्नेव श्रीकृष्णसेनाप्रस्थानवर्णनप्रसङ्गे चेत्थमेव 'प्रकीर्ण'-'प्रकीर्णक'-शब्दयोः प्रयोगसाहचर्येण चमत्करोति माघः पाठकान् शब्दकोशसूक्ष्मेक्षिकावैदग्ध्येन—

यान्तोऽस्पृशन्तश्चरणैरिवावनिं जवात्प्रकीर्णैरभितः प्रकीर्णकैः ।
अद्यापि सेनातुरगाः सविस्मयैरलूनपक्षा इव मेनिरे जनैः[1] ॥

अत्र प्रथमः प्रकीर्णशब्दस्तावत् प्रसिद्धः 'कॄ विक्षेपे' इत्यस्माद्धातोः निष्ठातप्रत्ययेन निष्पन्नः इतस्ततोऽनियतं विक्षिप्तत्वबोधकः । द्वितीयः प्रकीर्णकशब्दस्तु तस्मादेव शब्दात् 'कन्' प्रत्ययसंयोजनेन निष्पन्नोऽत्र चामरवाची । अयञ्चार्थः 'चामरन्तु प्रकीर्णकम्' इत्यमरकोशे[2] स्पष्टः । धावतामश्वानां वेगेनेतस्ततो विक्षप्तानि चामराण्यत्र वर्ण्यन्ते । 'प्रकीर्णक'शब्दस्य यद्यपि तुरगवाचकत्वमपि "प्रकीर्णकं चामरे स्याद् विस्तरे ना तुरङ्गमे"[3] इत्यादिमेदिनीवाक्याद् ज्ञायते, तथापि नायमर्थोऽत्राभिप्रेत इत्यन्यदेतत् ।

(८) —अत्रैव च सर्गे पुना रथवर्णनात्मके पद्येऽपि कविना 'अन्तर'शब्दस्य द्वेधा प्रयोगः प्रदर्शितः । तथा हि—

पादैः पुरः कूबरिणां विदारिताः प्रकाममाक्रान्ततलास्ततो गजैः ।
भग्नोन्नतानन्तरपूरितान्तरा बभुर्भुवः कृष्टसमीकृता इव[4] ॥

(९) —प्रथमे सर्गे च नारदकृते शिशुपालपूर्वजन्मप्रस्तावे नृसिंहावताररूपेण हिरण्यकशिपोर्वधवर्णने तनुशब्दस्य कायरूपमर्थं विशेषणरूपेण अल्पत्वरूपं चार्थमादाय कविरेकत्र शब्दमिमं द्वेधा प्रयुङ्क्ते—

सटाच्छटाभिन्नघनेन बिभ्रता नृसिंह ! सैंहीमतनुं तनुं त्वया ।
स मुग्धकान्तास्तनसङ्गभङ्गुरैरुरोविदारं प्रतिचस्करे नखैः[5] ॥

निगदव्याख्यातमेतत् ।

---

१. शिशुपालवधे १२.१७ ।
२. अमरकोशे २.८.३१ ।
३. तत्रैव सुधाव्याख्यायामुद्धृतम् ।
४. शिशुपालवधे १२.२१ ।
५. तत्रैव १.४७ ।

श्मश्रूयमाणे मधुजालके तरोर्गजेन गण्डं कषता विधूनिते।
क्षुद्राभिरक्षुद्रतराभिराकुलं विदश्यमानेन जनेन दुद्रुवे[1] ॥

मार्गेण गच्छन्तो यात्रिका मध्येमार्गं स्थूलस्थूलैर्भ्रमरैर्दंष्टाः सद्यः पलायन्तेति वर्णयितुकामो महाकविरत्र 'क्षुद्रा'शब्दमर्थद्वये द्विः प्रयुङ्क्ते। एकत्र 'क्षुद्रा'शब्दो मधुमक्षिकारूपे अप्रसिद्धेऽर्थविशेषे प्रयुक्तः। पुनश्च लघुपर्यायं प्रसिद्धार्थं क्षुद्रशब्दमुपादाय 'अक्षुद्र'-विशेषणेन ताः क्षुद्राः विशेष्य तेषां भ्रमराणां स्थूलत्वकथनेन भयावहत्वं व्यञ्जितम्[2]। मधुमक्षिकाः स्वेषु मधुजालकेषु मधुसञ्चये व्यापृतास्तावन्नोपद्रवन्ति पार्श्वस्थान् प्राणिनो यावत्कश्चिन्न चेष्टते तानुपरोद्धुम्। यदा तु कश्चिदुपरुणद्धि तास्तदा तु सर्वाः संभूय समाक्रमन्त्युपरोद्धारमिति प्रसिद्धम्।

अत्र चाजानानेन गजेन केनचित्तरुस्कन्धे कटं कण्डूयमानेन प्रकम्पिते मधुजालके तत्रस्थाः स्थूलस्थूला मधुमक्षिकाः कृष्णसैनिकांस्तथा संभूय प्रसभमाचक्रमुः, यथा तेषां तत्स्थानाद् दूरपलायनं मुक्त्वा नासीज्जीवितरक्षणोपाय इति हृद्यमिह कवेस्तात्पर्यं मक्षिकाणां स्थूलत्वकथनेन साधु समुपोद्बलितं महाकविना। इदमनेन सिद्धं भवति यदीदृशीषु प्रगल्भासु शब्दकोशक्रीडासु सुखरामं रममाणेनापि महाकविना शब्दानामर्थ-पुष्टिरपि न पर्यहीयतेति।

इत्थं विवेचितानि प्रकाममुदाहरणानि कानिचित्सविस्तरं प्रथमस्यास्य विच्छित्ति-प्रकारस्य। अधुनास्मद्दृष्टिपथमायातान्यपराणीदृशान्युदाहरणानि संक्षेपतो निर्दिश्यन्ते।

(६)—द्वादशे सर्गे श्रीकृष्णस्य प्राभातिकप्रस्थानवर्णने उष्ट्रकाणां वर्णनपरमिदं पद्यम्—

अह्नाय यावन्न चकार भूयसे निषेदिवानासनबन्धमध्वने।
तीव्रोत्थितास्तावदसह्यरंहसो विश्रृङ्खलं श्रृङ्खलकाः प्रतस्थिरे[3] ॥

अत्र प्रथमे विश्रृङ्खलशब्दे श्रृङ्खलशब्दः पशुबन्धनादौ प्रयुक्तं निगडमभिधत्ते। द्वितीयः श्रृङ्खलकशब्दस्तु करभवाचकः श्रृङ्खलशब्दात् कप्रत्यययोगेन निष्पन्नः। स चायं 'श्रृङ्खलमस्य बन्धनं करभे' इति पाणिनिसूत्रेण[4] विहित इत्यवधेयम्। इत्थं

---

१. शिशुपालवधे १२.५४।

२. क्षुद्रा व्यङ्गा नटी वेश्या सरघा कण्टकारिका।
त्रिषु क्रूरेऽधमेऽल्पेऽपि क्षुद्रः..............॥ इत्यमरकोशः (३.३.१७७)।

३. शिशुपालवधे १२.७।

४. अष्टाध्याय्याम् ५.२.७९।

चास्मिन् प्रयोगविशेषे कविना शृङ्खल-शृङ्खलकशब्दयोरर्थविशेषप्रदर्शनेन सह पाणिनि-सूत्रमपि तद्विषयकं कटाक्षितमिति विभावनीयम् ।

(७)—अस्मिन्नेव श्रीकृष्णसेनाप्रस्थानवर्णनप्रसङ्गे चेत्थमेव 'प्रकीर्ण'-'प्रकीर्णक'-शब्दयोः प्रयोगसाहचर्येण चमत्करोति माघः पाठकान् शब्दकोशसूक्ष्मेक्षिकावैदग्ध्येन—

यान्तोऽस्पृशन्तश्चरणैरिवावनिं जवात्प्रकीर्णैरभितः प्रकीर्णकैः ।
अद्यापि सेनातुरगाः सविस्मयैरलूनपक्षा इव मेनिरे जनैः[१] ॥

अत्र प्रथमः प्रकीर्णशब्दस्तावत् प्रसिद्धः 'कॄ विक्षेपे' इत्यस्माद्धातोः निष्ठातप्रत्ययेन निष्पन्नः इतस्ततोऽनियतं विक्षिप्तत्वबोधकः । द्वितीयः प्रकीर्णकशब्दस्तु तस्मादेव शब्दात् 'कन्' प्रत्ययसंयोजनेन निष्पन्नोऽत्र चामरवाची । अयञ्चार्थः 'चामरन्तु प्रकीर्णकम्' इत्यमरकोशे[२] स्पष्टः । धावतामश्वानां वेगेनेतस्ततो विक्षिप्तानि चामराण्यत्र वर्ण्यन्ते । 'प्रकीर्णक'शब्दस्य यद्यपि तुरगवाचकत्वमपि "प्रकीर्णकं चामरे स्माद् विस्तरे ना तुरङ्गमे"[३] इत्यादिमेदिनीवाक्याद् ज्ञायते, तथापि नायमर्थोऽत्राभिप्रेत इत्यन्यदेतत् ।

(८) —अत्रैव च सर्गे पुना रथवर्णनात्मके पद्येऽपि कविना 'अन्तर'शब्दस्य द्वेधा प्रयोगः प्रदर्शितः । तथा हि—

पादैः पुरः कूबरिणां विदारिताः प्रकाममाक्रान्ततलास्ततो गजैः ।
भग्नोन्नतानन्तरपूरितान्तरा बभुर्भुवः कृष्टसमीकृता इव[४] ॥

(९) —प्रथमे सर्गे च नारदकृते शिशुपालपूर्वजन्मप्रस्तावे नृसिंहावताररूपेण हिरण्यकशिपोर्वधवर्णने तनुशब्दस्य कायरूपमर्थं विशेषणरूपेण अल्पत्वरूपं चार्थमादाय कविरेकत्र शब्दमिमं द्वेधा प्रयुङ्क्ते—

सटाच्छटाभिन्नघनेन बिभ्रता नृसिंह ! सैंहीमतनुं तनुं त्वया ।
स मुग्धकान्तास्तनसङ्गभङ्गुरैरुरोविदारं प्रतिचस्करे नखैः[५] ॥

निगदव्याख्यातमेतत् ।

---

१. शिशुपालवधे १२.१७ ।
२. अमरकोशे २.८.३१ ।
३. तत्रैव सुधाव्याख्यायामुद्धृतम् ।
४. शिशुपालवधे १२.२१ ।
५. तत्रैव १.४७ ।

ईदृशी प्रयोगविच्छित्तिरन्यत्रापि क्वचित् क्वचिद् दृश्यते सर्गान्तरेषु। क्वचित्तु ईदृशाः प्रयोगा एकस्मिन्नेव पद्ये न दृश्यन्ते; परन्तु अनन्तरपूर्वेषु। यथा षोडशसर्गस्य ६५-तमे पद्ये[1] गृहवाचकस्य 'क्षय'शब्दस्य प्रयोगः, अनन्तरपद्ये च नाशार्थकस्य 'क्षय'शब्दस्य प्रयोगः। तत्र ६६-तमे पद्ये[2] तु **'कुलमक्षयं क्षयम्'** इति कविरचिते सन्दर्भे यद्यपि 'क्षय'शब्दो द्विः प्रयुक्तः, तथापि उभयोरपि समानार्थकतयैव व्याख्यातं मल्लिनाथेन। पूर्वप्रदर्शितरीत्या अत्रैकस्य 'क्षय'शब्दस्य अर्थान्तरपरतया व्याख्यानं किं संभाव्यत इति सुधीभिः पुनरत्र विमृष्टव्यं प्रतिभाति। तथैव विंशसर्गस्य ५९-संख्याके पद्येऽपि[3] महाकविना कृतः **"खचरैः क्षयमक्षये"** इति प्रयोगोऽपि विमर्शनमर्हतीति भाति।

(१०) —संप्रत्यसांप्रतं वक्तुमुक्ते मुसलपाणिना।
निर्धारितेऽर्थे लेखेन खलूक्त्वा खलु वाचिकम्[4]॥

अस्मिन् पद्ये खलुशब्दस्य द्विः प्रयोगोऽकारि महाकविना कोशप्रगल्भेन। अत्र मल्लिनाथ इत्थं लिखति—"खलुराद्यः प्रतिषेधे, अन्यो वाक्यालङ्कारे। 'निषेधवाक्यालङ्कारजिज्ञासानुनये खलु' इत्युभयत्राप्यमरः"[5]। एवं च 'खलूक्त्वा' इत्यस्य न वक्तव्यमित्यर्थः। पादादौ प्रयुक्तस्यास्य खलुशब्दस्य निषेधार्थबलादेव दूषकताबीजनिवृत्ति-

---

१. दधतोऽसुलभ**क्षया**गमास्तनुमेकान्तरताममानुषीम्।
भुवि सम्प्रति न प्रतिष्ठिताः सदृशा यस्य सुरैररातयः॥ (१६.६५)

२. अतिविस्मयनीयकर्मणो नृपतेर्यस्य विरोधि किंचन।
यदमुक्तनयो नयत्यसावहितानां कुल**मक्षयं क्षयम्**॥ (१६.६६)

अत्र "अक्षयमविनाशि। पूर्वं केनापि क्षयं न नीतमित्यर्थः। अहितानां कुलं शत्रुजातं क्षयं नाशं नयति।" इति मल्लिनाथीया सर्वङ्कषा। अत्र माघीयशब्दप्रयोगचातुरीपथमनुसरन्तो वयमुत्पश्यामोऽत्रापि 'क्षय'शब्दस्यार्थद्वयमाश्रित्य व्याख्यानं प्रदर्शितकविमार्गानुसारि स्यादिति। अतश्च "अक्षयं = गृहरहितं, क्षयं = नाशं नयति। शत्रून् तथा समूलं नाशं नयति यथा तेषामवस्थानाय क्वाप्याश्रयो न लभ्यत इत्यर्थः।" इतीदृशं व्याख्यानं संभवतीति प्रतिभाति। अत्र विद्वांसः प्रमाणम्।

३. खचरैः **क्षयमक्षये**ऽहिसैन्ये सुकृतैर्दुष्कृतवत्तदोपनीते।
अयुगार्चिरिव ज्वलन् रुषाथो रिपुरीदर्चिषमाजुहाव मन्त्रम्॥ (२०.५९)

४. शिशुपालवधे २.७०।

५. अमरकोशे ३.४.२५५।

रित्यपि मल्लिनाथटीकायां स्पष्टम्। अत्रेदमन्यदपि कवेः कोशसूक्ष्मेक्षिकादृष्ट्या अवधेयम्। 'सांप्रतम्' इत्यव्ययस्य 'अधुना' इति 'युक्तम्' इति च प्रसिद्धमेवार्थद्वयम्। तदेनं शब्दम् 'अधुना'पर्यायेण 'संप्रति'शब्देन यः प्रयोगः, सोऽपि शब्दप्रयोगविलासितां प्रदर्शयति। सांप्रतमिति पदस्य प्रथमार्थस्फूर्त्तौ विरोधाभासोऽपि स्फुरत्येव।

(११) —मन्यसेऽरिवधः श्रेयान् प्रीतये नाकिनामिति।
पुरोडाशभुजामिष्टमिष्टं कर्तुमलंतराम्[१]॥

अत्र 'इष्ट'शब्दस्यार्थद्वयमादाय साहचर्यप्रयोगचमत्कारः सुलभानुभवः। अत्रैको यजेः, अपर इषेश्च निष्पन्न इत्यवसेयम्। अतश्च प्रथमस्य 'याग' इति, द्वितीयस्य 'ईप्सितम्' इति चार्थभेदः।

(१२) —स स्वहस्तकृतचिह्नशासनः पाकशासनसमानशासनः।
आशशाङ्कतपनार्णवस्थितेर्विप्रसादकृत भूयसीर्भुवः[२]॥

अस्मिन्पद्ये माघेन भिन्नार्थेषु एकशब्दप्रयोगसाहचर्यस्य व्यधायि भूयांश्चमत्कारः शासनशब्दस्य त्रिः प्रयोगं त्रिधा भिन्नेष्वर्थविशेषेषु (संभवतस्त्रेधा व्युत्पादितेषु ?) प्रयोगमुदाहरता। अत्र प्रथमः शासनशब्दः राजादिभिर्दानादीनां स्थायित्वसम्पादनाय दातॄणां, प्रतिग्रहीतॄणां, देयवस्तूनां च विवरणं ताम्रमयपट्टिकासु विलिख्य वितरणेषु प्रयुज्यमानानां राजभिरङ्कितस्वहस्तानां शासनपत्राणां वाचकः। व्यवह्रियन्ते चेमानि प्रायशस्ताम्रशासनादिभिः शब्दैः साम्प्रतमपि। द्वितीयश्च इन्द्रपर्याये पाकशासनशब्दे प्रयुक्तः कर्त्रर्थे व्युत्पन्नः शासकपरः। व्युत्पादितश्चायं "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः"[३] इति सूत्रनिहितेन ल्युप्रत्ययेन पाकशासनव्याख्यानप्रसङ्गेऽमरकोशटीकायां सुधायाम्। क्वचिच्च "कृत्यल्युटो बहुलम्"[४] इति सूत्रे बहुलग्रहणमाश्रित्य कर्तरि ल्युटा व्युत्पादयन्ति। तृतीयश्च शासनशब्दः शासनक्रियावाचको भावे ल्युटा व्युत्पादनीयः। प्रथमस्य शासनशब्दस्य तु शिष्यते = आज्ञाप्यते अनेन इत्यर्थमादाय करणवाचिना ल्युटा व्युत्पादनं युक्तं प्रतिभाति।

तदेवं व्याख्यातेषु सर्वेषूदाहरणेषु एकस्यैव शब्दस्य प्रसिद्धेष्वप्रसिद्धेषु च अर्थविशेषेषु प्रयोगसाहचर्यदर्शनकौशलमादर्शितं महाकविनेति विषये प्रकामं प्रदर्शिता दिग-

---

१. शिशुपालवधे २.१०६।

२. तत्रैव १४.३६।

३. अष्टाध्याय्याम् ३.१.१३४।

४. तत्रैव ३.३.११३।

स्माभिः। ते चेमे प्रयोगविशेषा महाकविना कोशरहस्यज्ञेन शब्दनिहितमर्थसौन्दर्यमुद्घाटयितुकामेन ज्ञानतः स्वरसतश्चैव प्रतायन्ते स्मेति दृढं प्रतीमः। एतत्सर्वं यदृच्छया घुणाक्षरन्यायेन काव्ये समापतितमिति कथनन्तु भवेन्महत्साहसम्। यद्यप्यत्र गुणग्राहिणः सहृदया न विवदेरन्, तथापि ये निर्बन्धं कुर्वन्ति सर्वत्र प्रमाणप्रदर्शनाय तेऽपि तुष्यन्त्विति शिशुपालवधे चित्रयुद्धवर्णनप्रसङ्गस्थं पद्ययुगलं प्रमाणतयेह उपन्यस्यते, यत्र कविः कण्ठोक्तैरेव शब्दैः एकस्यैव शब्दस्य उभयथा प्रयोगस्य चमत्कारविशेषं स्वयमभिधत्ते। तत्र—

उद्धतान् द्विषतस्तस्य निघ्नतो द्वितयं **पपुः**।
पानार्थे रुधिरं धातौ रक्षार्थे भुवनं शराः[1]॥

श्रीकृष्णस्य शराः शत्रूणां रुधिरमपिबन्, जगच्चारक्षन्निति विवक्षति कविः। तत्र पपुरिति एकेनैव क्रियावाचकपदेन तन्त्रेण क्रियाद्वयमप्याकलयति शब्दप्रगल्भो महाकविः। 'पा पाने' इति 'पा रक्षणे' इति चार्थद्वयेऽपि पाधातोः पपुरिति समानमेव रूपं भवति। अत एव पपुरित्ययं शब्दो यदा पानार्थे गृह्यते, तदा तस्य कर्म स्याद् रुधिरमिति, यदा तु रक्षार्थे स्वीक्रियते, तदा तस्य कर्म स्याद् भुवनमिति व्याचक्षाणः शाब्दिककविः स्वयमनेन शब्दशास्त्रप्रागल्भ्यदर्शनेन मिमङ्क्षत्यलौकिके रसस्रोतसि, मज्जयति च शब्दार्थरसिकान् सहृदयांस्तस्मिन्नपूर्व पाण्डित्यरसानुभवे। अत्रैकस्मिन्नेव पद्ये पाधातोरर्थद्वयप्रयोगसाहचर्यजनितश्चमत्कारः स्पष्टमेव कविना स्वयमेवाभिहित इति सुधियो विभावयन्तु।

अत्र निर्णयसागरमुद्रितपुस्तके "द्वितयं ययुः" इति मुद्रितपाठो दृश्यते। स चापपाठ इत्यस्माभिः संशोधितः 'पपुः' इति। पाधातोरर्थद्वयचमत्कारकथनप्रसङ्गे नास्ति सम्बन्धगन्धोऽपि 'ययुः' इति क्रियाया इति विषये कः संदिग्धाम्? अतश्चायं 'ययुः' इति पाठस्तावदनभिज्ञलिपिकारप्रमादकृत एवेत्यत्र नास्त्यवसरः संशयस्य। तस्मादिह 'पपुः' इत्येव भाव्यं मूलपाठेन कविहस्तनिर्गतेन। यद्यपीदं करतलामलकवत्स्पष्टमेव, तथाप्यस्मिन् विषये संवादाय परीक्षणीया एवान्ये मूलमातृका इति नेदं न जानीमः। तथापि नोपालम्भ्यवकाशोऽस्माभिस्तदर्थं संप्रतीति तदर्थं परस्ताद्विधास्यते प्रयत्नः। 'प'-कार-'य'-कारयोर्यल्लिपिसादृश्यं तेनेदृशोऽव्युत्पन्नलेखकप्रमादः सर्वथा शक्यसंभव इत्यत्र न विवदिष्यते कश्चित्। उपलभ्यन्ते चाक्षरयोरनयोर्विनिमयो भूयसा मातृकास्विति जानन्त्येव परिचितमातृकादोषा अभिज्ञा इति दिक्।

---

१. शिशुपालवधे, १९.१०३।

इत्थमेवास्ति पद्यान्तरमप्यस्मिन् सर्गे यस्मिन्महाकविः कण्ठरवेणाचष्टे एकस्य पदस्योभयथार्थग्रहणे स्वीयां चमत्कारानुभूतिम्। तथा हि—

द्विषद्विशसनच्छेदनिरस्तोरुयुगोऽपरः।
सिक्तश्चास्त्रैरुभयथा बभूवारुणविग्रहः[1] ॥

कस्यचिद् योद्धुरूरुयुगं खण्डितं शत्रुकृतेन शस्त्रप्रहारेण। तेनासौ समजनि अनूरुः। तेन चास्य शरीराकृतिरभूद् ऊरुहीनस्य सूर्यसारथेररुणस्य समाना। किञ्चास्य पूर्वकायः शस्त्रप्रहारोच्छलन्त्या रक्तधारयाप्लावितः समजायत साकल्येन रक्तवर्णः। इत्थमयमभूदर्थद्वयेनाप्यरुणविग्रह इति ब्रूते शब्दक्रीडारसिकः कविरत्र। अत्र 'अरुण'पदस्यार्थद्वयं मनसि निधाय उभयोर्ग्रहणं च पृथक् पृथगभिसन्धाय कविर्निगदति "उभयथा अरुणविग्रहः"। अत्रेद'मुभयथा' पदं कवेरुभयार्थसाहचर्यकौतुकमभिधत्त इत्यलम्।

### (ख) क्रियावाचकेषु वैशिष्ट्यप्रकाशनम्

एतावता प्रबन्धेन शब्दकोशेषु संगृहीतान् सुबन्तशब्दानाश्रित्य व्यधायि विचारः। परन्नैतत् संभवति यत् कोशसूक्ष्मेक्षिका कस्यचित्कवेः विश्राम्यति सुबन्तमात्रे। न वैतत्संभवति माघोऽस्य अपवाद इति। प्रकामं प्रादर्शि तेन सुबन्तेष्विव तिङन्तेष्वपि प्रागल्भ्यमात्मनः। तत्रास्माभिः सन्तोष्टव्यं स्तोकैरेवोदाहरणैः।

(१)— तिङन्तप्रयोगसूक्ष्मेक्षिकाप्रसङ्गेऽस्मिन् विमर्शयोग्यमिदं पद्यं द्वितीयसर्गस्थम्—

मनागनभ्यावृत्त्या वा कामं क्षाम्यतु यः क्षमी।
क्रियासमभिहारेण विराध्यन्तं क्षमेत कः[2] ॥

अत्र भ्वादिगणपठितस्य 'क्षमू सहने' इति धातोः दिवादिषु पठितस्य 'क्षमूष् सहने' इति धातोश्च प्रयोगभेदो दर्शित एकस्मिन्नेव पद्ये। अत्र द्वितीयस्य षित्त्वेन प्रथमस्य चातथात्वेन ये रूपभेदा भवन्ति, संकेतितास्ते कौमुद्यां भट्टोजिदीक्षितैः "अषितः क्षाम्यतेः क्षान्तिः क्षमूषः क्षमते क्षमा"[3] इति जानन्त्येव वैयाकरणाः।

(२) - इदञ्च परं रसमयमुदाहरणं दृश्यते युद्धवर्णनप्रसङ्गे—

ग्लानिच्छेदी क्षुत्प्रबोधाय पीत्वा रक्तारिष्टं शोषिताजीर्णशेषम्।
स्वादुंकारं कालखण्डोपदंशं क्रोष्टा डिम्बं व्यष्वणद् व्यस्वनच्च[4] ॥

---

१. शिशुपालवधे १९.५३।

२. तत्रैव २.४३।

३. सिद्धान्तकौमुद्याम्, दिवादौ पा० सू० ७.३.७४।

४. शिशुपालवधे १८.७७।

पद्येऽस्मिन् रणाजिरे शस्त्रक्षतेषु मृतप्राणिशरीरेषु रसेन रममाणानां जम्बुकानां विहारो वर्ण्यते। अत्र 'स्वन शब्दे' इति धातोर्विपूर्वकस्य च विषये "वेश्च स्वनो भोजने"[1] इति पाणिनिकृतमनुशासनं मनसि निधाय महाकविर्दर्शयत्यर्थभेदं धातोः सस्य षत्वाषत्वभावयोः। भोजनविषये यदा स्वनतेः प्रयोगो भवति, तदैव षत्वं भवतीति नियमितं सूत्रेण। तेन च "सशब्दं भुङ्क्ते" इत्यर्थे 'विष्वणति' इति, अन्यत्र च 'विस्वनति' इति व्यवतिष्ठते प्रयोगभेदः। रसेन भोज्यमास्वादयन्तो जना जिह्वातालुसंयोगेन वा, जिह्वौष्ठसंयोगेन वा विशिष्टं शब्दविशेषं कुर्वन्तीति लोकस्वभावमनुस्मारयन् वर्णयत्यत्र महाकविः प्राण्यवयवानां यकृत्प्लीहादीनामास्वादने रममाणस्य जम्बुकस्य मांसभोजनविलासम्। अत्र प्रथमप्रयुक्तस्य व्यष्वणच्छब्दस्य 'सशब्दभोजने', परस्तात्प्रयुक्तस्य च व्यस्वनच्छब्दस्य सामान्यतया 'शब्दकरणे' चात्र प्रयोग इति शब्दरहस्यं प्रकाशितं कविवरेण कोशकुशलेन शाब्दिकधुरन्धरेणेति विदाङ्कुर्वन्तु शब्दरसिकाः। प्रहृष्टाः क्रोष्टारो महता संरम्भेण वाश्यन्त इति, तत्स्वभावोऽपि कटाक्षित एवात्र कविना। पद्येऽस्मिन् यकृत्प्लीहाद्यवयववाचिनां नातिप्रसिद्धानां कालखण्डडिम्बादिशब्दानां प्रयोगेणापि कोशसूक्ष्मेक्षिका न्यदर्शि नवशब्दप्रयोगचणेन महाकविनेत्यपि विभावनीयं सुधीभिः। क्षुदुद्दीपनायाधुनिकीषु पाश्चात्यक्रमानुकारिसग्धिषु प्रथममाङ्गलभाषाप्रसिद्धस्य 'सूप्'—पेयस्य प्रयोगप्रथेयं पप्रथे प्रकामं प्राचीनेऽपि भारते इत्येतदपि विदितं भवत्यनेन पद्येनेत्यन्यदेतत्।

(३)— अथोच्चकैर्जरठकपोतकन्धरातनूरुहप्रकरविपाण्डुरद्युति ।
बलैश्चरच्चरणविधूतमुच्चरद्घनावलीरुदचरत क्षमारजः[2] ॥

अत्र उत्पूर्वकस्य चरतेः सकर्मकत्व आत्मनेपदमिति प्रयोगवैशिष्ट्यं स्फुटीकृतं माघेन आदौ 'चरत्' इति अनुपसर्गस्य शतृप्रत्ययमुखेन मूलतः परस्मैपदित्वम्, परस्तात् समासमध्ये 'उच्चरद्' इति पुनः शतृप्रत्ययान्तप्रयोगेण उदुपसर्गस्य तस्य अकर्मकतायामपि परस्मैपदित्वम्, अन्ते च भूरेणुरुल्ललङ्घे मेघावलीमिति वर्णयन् पुनस्तस्योत्पूर्वकस्य सकर्मकतायां व्यत्ययेनात्मनेपदित्वमिति च दर्शयतेत्यवसेयम्। 'उदश्चरः सकर्मकात्[3]' इति पाणिनेरनुशासनेन यदर्थवैशिष्ट्यं तिङन्तेषु, तत्रेदं भवति कमनीयं काव्योदाहरणमिति दिक्।

१. अष्टाध्याय्याम् ८.३.६९।
२. शिशुपालवधे १७.५२।
३. अष्टाध्याय्याम् १.३.५३।

**(ग) सुबन्ततिङन्तसंकरे वैशिष्ट्यप्रकाशनम्**

अत्रान्याप्यस्ति रमणीयतरा कापि विच्छित्तिरस्याः शब्दार्थसूक्ष्मेक्षिकायाः। अस्ति 'ययुः' इति तिङन्तं 'या प्रापणे' इति धातोर्लिटि निष्पन्नम्। एतत्तु विदितमेव बालानामपि। किन्तु अस्ति 'ययुः' इति किञ्चित्सुबन्तं वैदिकमीमांसकेषु प्रसिद्धमिति, पठितञ्चेदं कोशेष्विति[1], पदमिदमश्वमेधीयाश्ववाचकमिति च न जानन्ति प्रायशः सामान्यतो भाषामात्रविदः। तदेतद् गूढतया प्रपञ्चितं महाकविना पद्येऽस्मिन्—

चलितं ततोऽनभिहतेच्छमवनिपतियज्ञभूमितः।
तूर्णमथ **ययुमिवानुययुर्दमघोषसूनुमवनीशसूनवः**[2] ॥

**(घ) शब्देषु लिङ्गभेदवैशिष्ट्यप्रकाशनम्**

(१)— 'मित्र'शब्दः शत्रुवाची नित्यं क्लीबे। किन्तु अस्मान्नञ्तत्पुरुषेण निष्पन्नोऽमित्रशब्दस्तु पुंसि प्रयुज्यत इति लिङ्गाश्रितो विशेषः। स्पष्टं चेदं लिङ्गानुशासने— "मित्रामित्रच्छात्रपुत्रमन्त्रवृत्रमेढ्रोष्ट्राः पुंसि"[3] इति सूत्रे। तमेनं विशेषं बोधयितुमिवासौ शब्दकोशचतुरो महाकविः क्लीबे मित्रशब्दं, पुंसि अमित्रशब्दं चैकस्मिन्नेव पद्ये प्रयुज्य वैशिष्ट्यमेतत्स्फुटयति। यथा द्वितीये सर्गे—

तस्य **मित्राण्यमित्रास्ते** ये च ये चोभये नृपाः।
अभियुक्तं त्वयैनं ते गन्तारस्त्वामतः परे[4] ॥ इति।
स्याताम**मित्रौ मित्रे** च सहजप्राकृतावपि[5]।

इति च पद्यद्वयमत्रोदाहरणम्।

(२) — इत्थं संख्य-संख्या'शब्दयोरप्यर्थभेद एकत्र प्रयोगसमुच्चयेन प्रदर्शितो महाकविना। संख्यशब्दो नपुंसके युद्धवाची, स्त्रियान्तु बाहुल्येन एकद्विप्रभृतीः गणनप्रयुक्तसंख्या अभिधत्ते। 'संख्यावान्'[6] इत्यादावयं शब्दो ज्ञानं वा विचारं वाप्यभिधत्ते

---

१. अमरकोशे २.८.४५।
२. शिशुपालवधे १५.६९।
३. लिङ्गानुशासने १५३।
४. शिशुपालवधे २.१०१।
५. तत्रैव २.३६।
६. अमरकोशे २.७.५।

इत्यप्यस्ति विशेषोऽस्य शब्दस्य[1]। तत्र माघेन पूर्वोक्तमर्थद्वयमासूत्रितं पद्येऽस्मिन्।

रामेण त्रिःसप्तकृत्वो ह्रदानां चित्रं चक्रे पञ्चकं क्षत्रियास्त्रैः।
रक्ताम्भोभिस्तत्क्षणादेव तस्मिन्संख्येऽसंख्याः प्रावहन्द्वीपवत्यः[2] ॥

कृष्णशिशुपालयुद्धे अगणिता रक्तनद्यः प्रवहन्ति स्मेत्यर्थः।

**(ङ) सदृशनिष्पन्नानां शब्दानामर्थभेदरहस्यप्रकाशनम्**

अस्त्यन्योऽपि प्रकारभेदः कोशचातुरीप्रकाशनस्य क्वचित्क्वचित् समादृतो माघेन। अत्रेदं दिङ्मात्रमुदाहरणम्—

अमृतं नाम यत्सन्तो मन्त्रजिह्वेषु जुह्वति।
शोभैव मन्दरक्षुब्धक्षुभिताम्भोधिवर्णना[3] ॥

पद्येऽस्मिन् संचरते महाकविर्नूतनेन पथा। एकस्मिन्नेव शब्दे निहितानामर्थवैलक्षण्यानामुद्घाटनाय तस्यैव प्रत्यासत्त्या प्रयोगद्वैधमिति पन्थाः कवेर्विस्तरशश्चर्चितः पूर्वम्। अत्र तु नास्त्येकस्य पदस्य प्रयोगद्वैधम्; किन्तु निष्पत्तौ प्रक्रियाभेदेन वा, केनापि हेत्वन्तरेण वा, यः सूक्ष्मसूक्ष्मोऽर्थभेदः, तद्रहस्यं प्रकाशयितुं कविस्तादृशान् शब्दान् प्रत्यासन्नतया प्रयुङ्क्ते। यथास्मिन् पद्ये 'क्षुभ संचलने' इत्यस्माद्धातोर्निष्पन्नस्य 'क्षुभित'शब्दस्य 'क्षुब्ध'शब्दस्य च योऽर्थभेदः, सोऽस्मिन् पद्येऽसाधारणीं नैपुणीमालम्ब्य संदर्शितः कोशरहस्येषु यथेच्छसंचारिणा महाकविना। सेडयं धातुरिति अस्य क्तप्रत्यये 'क्षुभित' इति रूपं स्वरससिद्धं भवति। किन्तु पाणिनिना ईदृशानामष्टानां शब्दानां विशिष्टेष्वर्थेषु इडभावो निपातितः "क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताऽविस्पष्टस्वरानायासभृशेषु[4]" इति सूत्रेण। तेन 'क्षुभित' इति शब्दः कर्मणि भावे वा निष्पन्नो यथाक्रमं संचालितस्य वस्तुनः संचालनक्रियायाश्च वाचकः, 'क्षुब्ध' इति शब्दस्तु मन्थदण्डवाचक इति अर्थभेदो व्यवतिष्ठते। अनयोर्द्वयोरपि शब्दयोः पाणिनिसूत्रनियमितमर्थभेदं शिक्षयितुमिव तावुभावपि यौगपद्येनैकत्र प्रयुङ्क्ते महाकविरित्यहो कोशसूक्ष्मेक्षिकासु संरम्भो महाकवेरस्य शब्दार्थहेलाविलासलोलस्य!

---

१. अमरकोशे "युद्धमायोधनं जन्यम्........" (२.८.१०३-१०६) इत्यादियुद्धपर्यायेषु पठितस्य 'संख्य'शब्दस्य व्याख्याने सुधाटीकायां "संख्यमाहवे। संख्यैकादौ विचारे च" इति हेमचन्द्रकोशवाक्यांश उद्धृतः।

२. शिशुपालवधे १८.७०।

३. तत्रैव २.१०७।

४. अष्टाध्याय्याम् ७.२.१८।

तदेवं माघस्य शब्दकोशसूक्ष्मेक्षिकायाः केचन पक्षाः सोदाहरणं विवेचिताः। विशेषतश्च माघेन यां नूतनां शब्दप्रयोगकलामवलम्ब्य केषाञ्चन शब्दानां द्विस्त्रिर्वा प्रयोग-साहचर्यमेकस्मिन्नेव पद्ये विधाय तत्तच्छब्दानामप्रसिद्धैरर्थविशेषैः पाठकान् परिचाययितुं स्वोपज्ञः पन्था कश्चिदभिनवो निर्मितः, तस्या बहून्युदाहरणानि रुचिकराणि संकलितानि। सन्तीदृशान्यन्यान्यपि प्रकारान्तराणि माघस्य शब्दकोशसूक्ष्मेक्षिकापरिचायकानीति पूर्व-मेवास्माभिः कृत एव संकेतः। विस्तरं परिजिहीर्षद्भिस्तानि सर्वाण्याकलयितुं नाकारि प्रयासः। माघस्य काव्यकलायां निगूढानीदृशानि शब्दकोशसूक्ष्मेक्षिकाप्रकाशकरहस्यानि मनसि निधायैव मन्ये जागाद टीकाकृतामग्रणीर्मल्लिनाथः स्वटीकारम्भे—

**ये शब्दार्थपरीक्षणप्रणयिनो**, ये वा गुणालंक्रिया-
शिक्षाकौतुकिनो, विहर्तुमनसो ये च ध्वनेरध्वनि।
क्षुभ्यद्भावतरङ्गिते रससुधापूरे मिमङ्क्षन्ति ये
**तेषामेव कृते** करोमि विवृतिं माघस्य सर्वङ्कषाम्[1] ॥

अत्र "शब्दार्थपरीक्षणप्रणयिनः" इति शब्दार्थप्रयोगपाटवस्य प्रथमनिर्देशः, चतुर्थपादे च "तेषामेव कृते" इत्यवधारणञ्च विशेषतः सुधीभिरवधारणीयम्।

अन्ते चैतद्विषयेऽस्माभिराकलितमन्यदपि रहस्यमीषद्विवरीतुमुत्सहामहे। विचित्र-मिदं प्रतिभाति नो, यच्छब्दार्थसूक्ष्मेक्षिकाचणेन महाकविना या साहचर्यप्रयोगपद्धति-र्बहुधा प्रपञ्चिता स्वकाव्ये, तस्य बीजं दृश्यते महाकवेः कालिदासस्य काव्येष्विति। यद्यपि रसकुतुकी कालिदासो नारमतेदृशेषु शब्दव्यायामेष्विति तत्कलामर्मविदामतिरोहितमेव, तथापि काव्यकलायां कनिष्ठिकाधिष्ठितस्य लोकोत्तरप्रतिभाभूषणस्य रससिद्धस्य तस्य कवीश्वरस्य काव्येषु सहजसरला अकृत्रिमाः केचिदीदृशाः प्रयोगविशेषाः दृष्टिपथमागता न इति विद्वत्परितोषाय तानपीह निर्दिदिक्षामः संक्षेपतः। तथा हि—

(१) भस्मसात्कृतवतः पितृद्विषः पात्रसाच्च वसुधां ससागराम्[2]।

इति पद्ये 'साति'प्रत्ययस्य प्रथमं 'विभाषा साति कार्त्स्न्ये'[3] इति सूत्रानुसारेण साकल्यार्थे, पश्चाच्च 'तदधीनवचने'[4] 'देये त्रा च'[5] इति सूत्रानुसारेण 'तदधीनां देयाम्' इत्यर्थे च प्रयोगभेदः साकूतः सम्भाव्यते।

---

१. सर्वंकषायाः प्रास्ताविकपद्येषु षष्ठमिदं पद्यम्।

२. रघुवंशे ११.८६।

३. अष्टाध्याय्याम् ५.४.५२।

४. तत्रैव ५.४.५४।

५. तत्रैव ५.४.५५।

(२) नवाभ्युदयदर्शिन्यो ननन्दुः सप्रजाः प्रजाः[१] ।

इति पद्ये "प्रजा स्यात् सन्ततौ जने"[२] इत्यमरकोशनिर्दिष्टेऽर्थद्वयेऽपि प्रजाशब्द-प्रयोगसाहचर्यं दृश्यते ।

(३) अमंस्त चान्येन परार्ध्यजन्मना स्थितेरभेत्ता स्थितिमन्तमन्वयम् ।[३]

इति पद्ये प्रथमः 'स्थिति'शब्दो मर्यादामभिधत्ते, द्वितीयश्च प्रतिष्ठामाहेति मल्लिनाथेन संजीविन्यां विशदीकृतमेव ।

(४) इत्थं रघुवंशस्यैव द्वादशसर्गे 'दूषण'शब्दं तदभिधानराक्षसवाचकं सामान्यतो दोषवाचकञ्चैकत्रैव प्रायुङ्क्त कालिदासः सचमत्कारम्—

असज्जनेन काकुत्स्थः प्रयुक्तमथ दूषणम् ।
न चक्षमे शुभाचारः स दूषणमिवात्मनः[४] ॥ इति ।

(५) अस्ति कुमारसम्भवेऽपि दृष्टिपथमास्माकीनमुपयातमेकमुदाहरणमीदृशम् । तत्र मल्लिनाथादृतपाठो भिन्नो यद्यपि, तथापि मल्लिनाथेन स्वयमुदलेखि पाठान्तरं दक्षिणावर्तनाथीयं यत्र 'वीत'शब्दस्येदृशः प्रयोगो लक्ष्यते । तत्रायं नाथानुसारी पाठः श्लोकस्य—

वीतवीतभया नागा यत्राश्वा बिलयोनयः ।
यक्षाः किंपुरुषाः पौरा योषितो वनदेवताः[५] ॥

ओषधिप्रस्थवर्णनप्रसङ्गस्थेऽस्मिन् पद्ये वर्ण्यन्ते तत्रत्यानि वैलक्षण्यानि महाकविना । अत्र प्रथमो वीतशब्दो वर्तते प्रसिद्धे 'विगत'इत्यर्थे । द्वितीयस्तु गजशास्त्रमात्रसिद्धः पारिभाषिकः उभयोः पादाङ्कुशकर्मणोर्वाचकः । स्पष्टीकृतञ्चेदं वैजयन्तीकोशे "पादकर्म युतं प्रोक्तं यातमङ्कुशवारणम् । उभयं वीतमाख्यातम्"[६] इत्यादिना ।

यद्यपीत्थमुदाहरणानि विलोक्यन्ते त्रिचतुराणि कालिदासग्रथितेषु काव्येषु, तथापि तानि यदृच्छासमापतितानि घुणाक्षरकल्पान्येव प्रतिभान्ति कालिदासे । स्थाने चैतत् ।

१. रघुवंशे ४.३ ।
२. अमरकोशे ३.३.३२ ।
३. रघुवंशे ३.२७ ।
४. तत्रैव १२.४६ ।
५. कुमारसंभवे ६.२९ ।
६. तत्रैव मल्लिनाथटीकायामुद्धृतम् ।

यतो हि रससमाहितचेतसा किल कालिदासेन प्रायशो न क्वचित्कदर्थित आत्मा शब्दाडम्बरेष्विति निश्चप्रचम् । सूत्रितं चेदमस्माभिरादावेव यच्छब्दचित्रेषु न रमन्ते रसनिर्भराः कविपुङ्गवाः । माघस्य तु काव्यकला कामप्यन्यामेव परिपाटीधाटीमाटीकते । क्वचिच्छब्दप्रच्छदच्छविच्छायासु स्वेच्छामूर्छनं, क्वचिदर्थसौभाग्यसन्धानेऽभिसन्धिः, क्वचिच्च काव्यप्रयोजनमौलिभूते रसे विगलितवेद्यान्तरः समाधिः, इति सर्वंपथीनप्रसारं प्रसरति तत्प्रतिभा । इदमेवाभिसन्धायाभ्यधायि प्राचीनैः काव्यपरीक्षकैः "माघे सन्ति त्रयो गुणाः" इत्यादि । "अपशब्दशतं माघे भारवौ तु शतत्रयम् । कालिदासे न गण्यन्ते कविरेको धनञ्जयः ।" इत्यादिकथनन्तु 'नहि निन्दा' न्यायतः प्रवृत्तमिति न प्रस्मर्तव्यम् । सिद्धान्तितं चेदं शब्दविन्यासरहस्यपक्षपातित्वं माघस्य आस्माकीनैः पूर्वैर्मिताक्षरैः काव्यसमीक्षाविचक्षणैः— "नवसर्गे गते माघे नवशब्दो न विद्यते", "मुरारिपदचिन्ता चेत्तदा माघे मतिं कुरु" इत्यादिभिः सूत्रप्रायैरक्षरैः माघकाव्यकलाया अन्तःसारमुद्घाटयद्भिः । तेनेदं सिद्धं भवति यन्महाकविरसौ स्वरसत एव महता संरम्भेण प्रववृते विचित्रेषु शब्दार्थसौभाग्यसमुद्भासकेषु स्वोपज्ञेषु काव्यपथप्रस्थानेषु । कः खलु काव्ययाथार्थ्यवित् प्रत्याचष्टुमीष्टां समुद्रपल्वलयोरिव महदन्तरं माघकालिदासयोः शब्दविन्यासकलावैदग्धीषु ? अतश्च विस्रब्धं प्रतिजानीमहे यत्कालिदासकाव्येभ्यः परिश्रमेण महतास्माभिरन्वेषितैः कतिपयैरुदाहरणकणैर्न तुषादपि हीयते महोत्कर्षः शब्दसौभाग्यसमुन्मीलनकलासु माघस्य शब्दकोशसूक्ष्मेक्षिकाघण्टापथनिर्मातुरिति । तदेवं महाशाब्दिकोऽयं माघो महाकविसाम्राज्ये शब्दकोशसूक्ष्मेक्षिकासु मूर्धाभिषिक्त इति विदाङ्कुर्वन्तु शब्दार्थरसिकाः पण्डितसहृदया इति शम् ।

ताम्रपर्णीतीरजन्मा गङ्गाजीवनजीवनः ।
विश्वनाथतनूजातो वेङ्कटाचलनामकः ॥
साहित्ये शाङ्करे तन्त्रे चेषत्कृतपरिश्रमः ।
निबन्धमिममग्रथ्नाद् विश्वनाथानुकम्पया ॥



# महामहोपाध्यायश्रीगोपीनाथकविराजः, तदीयाखण्डमहायोगदर्शनञ्च

विद्यावारिधिः श्रीश्रीपतिरामत्रिपाठी
प्राध्यापकः,
नव्यव्याकरणविभागे
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

❀ ❀ ❀

प्रातःस्मरणीयाः सर्वतन्त्रस्वतन्त्राः सार्वभौमपद्मविभूषणादिविरुदावलि-विभूषिताः समधिगतयाथातथ्याः, विदितवेदितव्याः, प्रायः सर्वशास्त्रमहोदधिपारङ्गताः, शैववैष्णवशाक्तजैनबौद्धादिदर्शनेषु प्राप्तवैदुष्याः समस्तभूमण्डलपरिव्याप्तप्राच्यप्रतीच्योभयविधनिष्णातपण्डितपण्डिताः परमश्रद्धेया गुरुवर्य्याः श्रीगोपीनाथकविराजा महापुरुषकोटौ परिगणितेषु प्रामुख्यं भजमानाः स्वतन्त्रदर्शनव्याख्यातारोऽखण्डमहायोगरूपस्य केषां न सन्ति विदिताः, अत्र सारस्वताः प्रमाणम्। सारस्वतसाधकेषु बहुषु विद्वत्सु विद्यमानेषु वंगप्रान्तस्य श्रीअरविन्दघोष-रवीन्द्रनाथठाकुर-कालीपदतर्काचार्य-श्रीपरमाराध्यरामकृष्णपरमहंस-विशुद्धानन्दपरमहंसादिषु तात्कालिकप्रातिभज्ञानसम्पन्नेषु काश्यामत्र श्रीभूपेन्द्रनाथसान्याल-श्यामाचरणलाहिड़ी - श्रीश्रीसिद्धमाता-आनन्दमयीमाँसदृशीषु योगीयोगिनीवृन्देषु स्वकीयं किमप्यनिर्वचनीयमखण्डमहायोगदर्शनस्य स्वरूपं श्रीगुरुचरणा गोपीनाथकविराजमहाभागाः सर्वजनसुलभं श्रीस्वामिविशुद्धानन्दमहाराजैः कृपाप्रसादमवाप्य प्रचारयामास।

भारतीयसंस्कृतवाङ्मयं भारतीयसंस्कृतेर्मूलम्। तत्रापि मूलभूतानि त्रीणि प्रस्थानानि, निगमागमपुराणानि। गङ्गायमुनासरस्वतीरूपासु तिसृषु प्रमुखप्रवहमानासु धारासु पूर्णरूपेणावगाहनपुरस्सरन्निमज्जनोन्मज्जनाभ्यां निःसृतं तत्त्वं समाश्रित्य ये केचन समुत्तीर्णतां गताः सन्ति, तत्र श्रीगोपीनाथकविराजमहाभागानां नाम प्रामुख्येणागच्छतीति नातितिरोहितमत्र विदुषाम्।

अत्र वेदागमपुराणोपनिषद्ब्राह्मणारण्यकसंहितादिषु यानि दार्शनिकानि तत्त्वविशेषाणि गुह्यातिगुह्यरूपेण यत्र तत्राक्षररूपेण निहितानि सन्ति, तेषां यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाध्यष्टाङ्गयोगमाध्यमेन ऋतम्भराप्रज्ञाधिष्ठितो भूत्वा

मधुमतीभूमिकामाश्रित्य योगगत्या साक्षात्कृत्य पदार्थजातमस्माकं पूर्वजा गोत्रप्रवर्तका 'ऋषयो मन्त्रद्रष्टारः' इति वचनं चरितार्थयन्तस्तत्तद्दर्शनानां प्रणेतारो बभूवुरिति सर्वप्रसिद्धम्। **'एकं सद् विप्रा बहुधा वदन्ति'**[1], **'सदेवेदमग्र आसीत्'**[2] **'असदेवेदमग्र आसीत्'** इत्यादि श्रुत्युक्तदिशा स्वस्वयोगशक्तिदिशा नानादर्शनानां स्वरूपाणि व्याख्यातानि। अद्वैतदर्शनम्, द्वैतदर्शनम्, विशिष्टाद्वैतदर्शनम्, शुद्धाद्वैतदर्शनम्, द्वैताद्वैतदर्शनम्, नादाद्वैतदर्शनम्, स्फोट-(शब्दाद्वैत) दर्शनम्, शून्यदर्शनम्, योगदर्शनम्, चार्वाकदर्शनम्, कापिलम्, जैमिनीयम्, पातञ्जलम्, आर्हतादिभेदेन दर्शनानां बाहुल्यं प्रदर्शितमत्र भारतीयसंस्कृतवाङ्मये तत्रभवद्भिरत्रभवद्भिश्च विद्वद्भिरित्यत्र नास्ति कस्यचन विमतिः।

नास्तिकास्तिकभेदेन द्वादशदर्शनानां प्रसिद्धिस्तु ज्ञातैवास्ति। योगतन्त्रादिग्रन्थेषु गोरक्षसंहिता, स्वच्छन्दतन्त्रशाक्ततन्त्रसंहितादिषु तु बहुविधानां योगानां स्थितिरवलोक्यते। बिन्दुयोगः, नादयोगः, वर्णयोगः, स्वरयोगः, अङ्कयोगः, सहजयोगः, शक्तियोगः, शिवयोगः, सर्वतन्त्रस्वतन्त्रयोगादीनां विवरणं प्रतितन्त्रग्रन्थेषु समवलोक्यते। तत्र कारणमस्ति मौलिकमिदमेव यद् गुरुशक्तिसम्पन्नाः साधकाः स्वशक्त्यनुष्ठानेन यावद् ज्ञानमकार्षुः, तावदेव स्वशिष्येभ्यः समुपदिदिषुः। तथा च तादृशा एव सम्प्रदायाः प्रचालिताः।

**'एकमेवाद्वितीयं ब्रह्म'**[3], **'नेह नानास्ति किञ्चन'**,[4] **'सच्चिदानन्दं ब्रह्म'**, **'अस्ति भाति प्रियम्'** इत्यादि श्रुतिवचनमाश्रित्य लक्षणमद्वितीयस्य ब्रह्मणः कृतम्। प्रतिपादितञ्च स्वयोगशक्तिबलेन परिष्कृतञ्च।

'तत्तद्वचनानां श्रुत्युक्तानामद्वितीये ब्रह्मणि तात्पर्यं संसाधितम्। श्रीमदादिशङ्कराचार्य्यैस्तु ब्रह्मसूत्रभाष्यादिमाध्यमेन द्वैतपरकवचनानामपि सार्थक्यमद्वितीये ब्रह्मणि सम्प्रतिपादितम्। तदनु समागतैः श्रीरामानुजाचार्य्यैस्तु तत्र तत्राद्वितीयशब्दस्य द्वितीयत्वाभावार्थमादायैकत्वं तु सर्वत्र द्वितीयमपेक्षत एवेति कृत्वा द्वितीयत्वावच्छिन्नप्रतियोगिताकाभावरूपार्थकरणेन द्वितीयं विना न सेत्स्यत्यैकत्वमिति विपरीतार्थ एव कृतः।

किञ्च सदसद्भ्यामनिर्वचनीया माया अघटितघटनापटीयसीत्यादिविशेषणैर्मायायाः मिथ्यात्वं समुपवर्ण्याद्वैतदार्शनिकैर्यन्निरूपितम्, तदपि न युक्तियुक्तम्, कुत इति चेदुच्यते— ब्रह्मणो निरधिष्ठानासम्भवेन कर्तुमकर्तुमन्यथाकर्तुं सामर्थ्यवतोऽपि स्वत एव क्रियाकरणासम्भवेन नूनं कस्याश्चिल्लीलाशक्तेराश्रयणं भवति कर्तव्यमिति कृत्वा (शैवाः स्वकीयां शक्तिं 'चितिः स्वतन्त्रा विश्वसिद्धिहेतुः' स्वातन्त्र्यमयीं यथा कथयन्ति) योगमायायाः कस्याश्चन शक्तिविशेषायाः समालम्बनं भवति कर्तव्यम्। सा च शक्तिरपि ब्रह्मवत्

---

१. ऋ० सं० १.१६४.४६; २. छा० उ० ६.२.१; ३. तत्रैव; ४. क० उ० २.१.११।

तादात्म्यमधिगत्य स्वतन्त्रैव भवति, शक्तिशक्तिमतोरभेदात्। अत एव द्वैतदर्शनं प्रथितं भवति।

जीवरूपपदार्थस्य द्वैताद्वैतदर्शनयोरपि विशेषरूपेण मध्यगतत्वाद् जीवोऽपि तृतीय-पदार्थो मन्तव्य एव।

एवमेव श्रीमद्वल्लभाचार्य्याणां श्रीमद्रामानन्दाचार्य्याणां निम्बार्काचार्य्यादीनां भिन्नानि भिन्नानि दर्शनानि प्रादुरभवन्। नादानुसन्धातॄणां नादयोगः, जनकादिभिस्तु राजयोगस्य माहात्म्यं प्रकटीकृतम्। हठयोगस्यापि हठयोगप्रदीपिकायां नेती-धौती-वस्त्यादिषट्कर्मणां योगाङ्गतयोपदिशति। खेचरीयोगशाम्भवयोगपदेन तत्रैव प्रतिपादितम्—"अन्तर्लक्ष्यो बहिर्दृष्टिर्निमेषोन्मेषवर्जिता एषा तु खेचरीमुद्रा" इति।

दार्शनिकभेदेषु प्रस्थानेषु विभिन्नेषु सत्स्वपि बीजरूपे प्रणवे नास्ति विवादः 'ओङ्कारप्रभवा वेदाः', 'ओङ्कार एव सर्वा वाक्' 'स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा च भवति, 'ओङ्कार एवेदं सर्वम्' इत्यादिश्रुतिवचनैर्वेदस्यापि वेदत्वं प्रणवस्य प्रतिष्ठितम्। तान्त्रिकेषु ग्रन्थेष्वपि—'**अर्धमात्रा स्थिता नित्या यानुच्चार्या विशेषतः**'[1] इति सप्तशतीस्थब्रह्मस्तुतिप्रतिपादनात्।

परापराभेदेन द्विविधाया विद्यायाः सर्वत्र वर्णनात् परापराभेदस्यापि तद्दृष्टत्वेनापि केनापि पदार्थविशेषेण भाव्यमिति कृत्वा 'परापराणां परमा त्वमेव परमेश्वरी' इति वचनेन परापरभेदस्यापि अभेदरूपेण सच्छक्तिर्वर्तते, यस्या वर्णनं देव्यथर्वशिरसि कृतम्—"सर्वे वै देवाः देवीमुपतस्थुः, कासि त्वं महादेवीति। साऽब्रवीत्—अहं ब्रह्मस्वरूपिणी। मत्तः प्रकृतिपुरुषात्मकं जगत्। शून्यञ्चाशून्यञ्च। अहमानन्दानानन्दौ..............मम योनिरप्स्वन्तः समुद्रे य एवं वेद, स दैवीं सम्पदमाप्नोति"[2] इति मम योनिरप्स्वन्तः समुद्रे इति वचनेन जगदम्बिकाया योन्यन्तर्गतानन्तानन्तब्रह्माण्डानां तत्प्रयोजकानामनन्तानन्तप्रकृत्यण्डानां तत्प्रयोजकानामनन्तानन्तमायाण्डानामुत्पादयितृतया प्रत्येकस्य जलबिन्दोरस्ति सामर्थ्यम्। एवञ्चैकोऽपि बिन्दुः योन्यन्तर्गतो मूलप्रकृतेर्नानानन्तकोटिब्रह्माण्डजातस्योत्पादकतायाः सामर्थ्यं धत्ते। तथा च परात्पराशक्तिरूपेण वागम्भृणीसूक्तौ सर्वजगदधिष्ठात्री-समुत्पादयित्री-संहारयित्रीरूपेण स्वातन्त्र्यशक्तिसम्पन्नशक्तिविशेषरूपेण वर्णनोपलम्भनात् सर्वतन्त्रस्वतन्त्रा काचिच्छक्तिरेव सर्वोत्कृष्टा मन्तव्येति ज्ञायते।

---

१. श्रीदुर्गासप्तशत्याम्—१।७४; २. देव्यथर्व० १, २, ७।

श्रीमद्देवीभागवतेऽपि मणिपुरद्वीपनिवासिनीवर्णनप्रसंगे शक्तेर्विशेषप्राधान्यं प्रतिपादितमस्ति। शिवोऽपि शवतां याति विष्णुरपि वष्णुत्वं भजते। ब्रह्मापि वह्मा भवति, रकारस्य शक्तिविशेषस्यापनयनात्। सर्वस्यापि पदार्थस्य शक्ति विना शक्तिमत्ता न सिध्यतीति सार्वजनीनः पन्थाः।

अद्वैतदर्शनस्य शाङ्करदर्शनस्यापि ज्ञानं प्रति प्रतियोगिज्ञानं कारणं भवतीति न्यायेन द्वैतत्वावच्छिन्नप्रतियोगिकाभावज्ञानमिति समुचितार्थकरणेन द्वितीयत्वस्य ज्ञानमपेक्षितं भवतीति कृत्वा काचन्नास्ति शक्तिर्द्वितीयापि, यां विनाऽद्वैततत्त्वं कथमपि न सेत्स्यतीति—

चितिरूपेण या कृत्स्नमेतद्व्याप्य स्थिता जगत्।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः॥

इति दुर्गासप्तशत्यां कृतमस्ति। ईश्वरप्रत्यभिज्ञायामपि चितिः स्वतन्त्रा विश्वसिद्धिहेतुरिति वचनमपि मिलति।

श्रीमदादिशङ्कराचार्यभगवत्पादैरपि स्वान्तिमकृतिविशेषे सौन्दर्यलहरी- (आनन्दलहरी) ग्रन्थेऽप्यादिमश्लोक एव शक्तिशक्तिमतोरभेदमुपवर्णयति।

शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं
न चेदेवं देवाः न खलु कुशलः स्पन्दितुमपि।
अतस्त्वामाराध्यां हरिहरविरिञ्चादिभिरपि
प्रणन्तुं स्तोतुं वा कथमकृतपुण्यः प्रभवति[1]॥

किञ्च भगवान् कृष्णोऽपि रासलीलाप्रसंगे योगमायां स्वाभिन्नशक्तिमाश्रित्यैव सर्वं रिरंसितं संसाधयामासेति वेदव्यासोऽपि श्रीमद्भागवते प्रावोचत—

भगवानपि ताः रात्रीः शरदोत्फुल्लमल्लिकाः।
वीक्ष्य रन्तुं मनश्चक्रे योगमायां समाश्रितः॥

कथनस्यायमभिप्रायो यदनन्तानन्तगुणगणसंयुक्तं ब्रह्मापि कृष्णोऽपि स्वशक्ति समाश्रित्यैव किञ्चित्कर्तुं प्रभवतीति महन्माहात्म्यं स्वाभिन्नायाः शक्तेः। अत एव पुराणेऽत्रपि समुद्रमन्थनोद्भूतस्य हालाहलाख्यस्य विषसर्वस्वस्य भीत्या समुपद्रुता देवासुरमनुष्यादयः समुपगता भगवतो रुद्रस्य कैलासपर्वते। तत्र भयं समुद्वीक्ष्य भगवान् रुद्रः पप्रच्छ भगवतीं पार्वतीं प्रति—भवानि! प्रजापतिरहं स्वकीयां प्रजां रिरक्षयिषया

१. सौन्दर्यलहर्य्याम्–१।

परिपातुमिच्छामि हालाहलाद् विषभयात्। परमाराध्या सा भगवती झटिति स्वीचकार स्वकीयां शक्तिं प्रसाद्य भगवान् रुद्रो विषं भक्षयामासेति सुप्रथितमस्ति पुराणेषु। अत एव वामायाः स्वकीयायाः शक्तेः प्राबल्यं तु स्वीकर्तव्यमेव भवति।

अत्राधिकमनुक्त्वा भिन्न-भिन्नरूपेण प्रथितानां तत्र तत्र शिव-शक्ति-नाथ-स्पन्द-नाद-बिन्दु-राज-हठ-सहज-चिद्-ज्ञान-क्रिया-चर्या-शब्द-वर्णस्फोट- भक्ति - ज्ञान- कर्माकर्म-विकर्म-शून्य-सहजादिखण्डयोगानामथवा स्वस्वमतानुसारेणाखण्डयोगानामपि—'असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः',[1] 'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः[2]', 'हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्[3]' इत्यादिश्रुतिवचनैर्यदखण्डरूपेण स्वानुभवेन समुपवर्ण्यते, व्याख्यायते, तदेव सर्वथाखण्डत्वं नास्ति, तत्रापि किञ्चिदन्यमतेन वैमत्यमस्ति। अत एवाखण्डा अपि ते ते योगाः खण्डा एव। अथवेषद् खण्डा इत्यखण्डाः। योगेतिशब्दः चित्तवृत्तिनिरोधपरः स्वीक्रियते। 'युजिर् समाधौ' इति धातुः, समाधिश्च चित्तवृत्तिनिरोधरूपः। 'युजिर् योगे' इत्यस्माद् धातोरपि निष्पद्यते योगशब्दः। 'योग एकत्वमाहुर्जीवात्मपरमात्मनोः' इति तान्त्रिकदार्शनिकानां मतम्। अनेन योगत्वावच्छिन्नाः समस्ता अपि योगा ग्रहीतुं शक्यन्ते।

महांश्चासौ योगः, महायोगः। अखण्डश्चासौ महायोगश्चेति अखण्डमहायोगः, इति व्युत्पत्त्या चित्तवृत्तिनिरोधरूपयोगस्य कदाचिदत्यन्तनिम्नेरूपेण मन्तव्यतया 'महान्'शब्दः प्रयुक्तः किञ्चिद्वैशिष्ट्यमाधातुम्। तत्रापि **श्रीकविराजमहाभागानां** शङ्काऽऽसीद् यदेते महायोगाः कदाचित् प्रलयावस्थायां च्युतिं लभेरन्निति कृत्वा अखण्डेति पदमुपात्तम्।

**अयम्भावः**– चित्तवृत्तिनिरोधादिरूपतत्तन्महायोगानां महाप्रलयावस्थायामपि परमात्मचरणचञ्चरीकत्वस्य भावस्याभावो न स्यादिति कृत्वा स्वेष्टदेवताभिन्नात्मिकायाः स्वशक्तेरुद्भावनाभावो न यथा स्यादिति कृत्वा महायोगत्वमपि कदाचित् खण्डितं स्यादिति धृत्वाऽखण्डेति विशेषणं दत्तमिति केचिच्छ्रीगोपीनाथकविराजचरणचञ्चरीकाः **चन्द्रशेखरस्वामिपादाः**।

अस्माकं मते यावदधीतमस्ति श्रीकविराजमहाभागानां सान्निध्यात्, तदिदमस्ति—'महांश्चासौ योगो महायोगः, खण्डाश्च ते महायोगाः खण्डमहायोगाः, न सन्ति खण्डमहायोगा यस्मिन् तदन्यपदार्थं एवाखण्डमहायोगपदेन विमृश्यते।

१. ईशा० उ० ३; २. गीतायाम्–५.१५; ३. ईशा० उ० १५।